Sri Balamanorama Series No. 17.



॥ श्रीः ॥

# UTTARARÂMACHARITA

## ॥ उत्तररामचरितम् ॥

महाकविश्रीभवभूतिविरचितं नाटकरत्नम्

नारायणविरचितया भावार्थदीपिकया

व्याख्यया समलंकृतम् ।

Edited by

C. Sankara Rama Sastri, M.A., B.L,

Advocate, Mylapore, Madras.



PRINTED AND PUBLISHED BY

THE SRI BALAMANORAMA PRESS,

MYLAPORE, MADRAS.



Price Rs. 2-8-0 ] 1932 [ Postage Extra

# PREFACE

Next to Kālidāsa, Bhavabhūti is the greatest dramatist known to Sanskrit literature. He is the author of three plays viz., Mahāvīracarita, Uttararāmacarita and Mālatīmādhava of which Uttararāmacarita is recognized to be the best. There is an oft-quoted saying that Bhavabhūti combines the qualities of Kālidāsa, Daṇḍin and Bhāravi, particularly so in his Uttararāmacarita:—

दण्डिनः पदलालित्यं भारवेरर्थगौरवम् ।
उपमा कालिदासस्य भवभूतेस्त्रयं क्वचित् ॥
उत्तरे रामचरिते भवभूतिर्विशिष्यते ॥

According to an episode current among the old school of Sanskritists, Bhavabhūti offered his work Uttararāmacarita for the approval of Kālidāsa. While Bhavabhūti's pupil was reading it out for that purpose, Kālidāsa, appearing to be indifferent, carried on his conversation with a dancing girl. Disappointed at the treatment offered to his master's work by Kālidāsa, Bhavabhūti's pupil went back after reading out the whole play to Kālidasa, and related to his Guru the indifference of Kālidāsa. On being further plied with questions, Bhavabhūti's disciple told his master that when he was reading out the verse beginning with किमपि किमपि मन्दं Kālidāsa remarked that Sunnam was a little excessive in the course of his conversation with the dancing girl. *Sunnam* in Vernacular means slaked lime as well as anusvāra. Suddenly the thought flashed in Bhavabhūti's mind that the meaning of Kālidāsa's remark

was that रात्रिरेव व्यरंसीत would be better than रात्रिरेवं व्यरंसीत् at the end of the śloka. In fact this story is believed in by Vīrarāghava, the commentator on Uttararāmacarita whose commentary is published in the Nirnayasagar press edition of this drama. While commenting on the śloka किमपि किमपि मन्दं he says towards the end: इदमेवाभिसंधाय कालिदासेनोक्तं—'बिन्दुमात्रं विशिष्यते' इति. But it is absoluteiy certain that no one with some sense of chronology can place any credence to this story.

Regarding the personality and attainments of Bhavabhūti the following extract from the Prelude to the Mālatīmādhava may be noted:—

अस्ति दक्षिणापथे विदर्भेषु पद्मपुरं नाम नगरम्। तत्र केचित्तैत्तिरीयाः काश्यपाश्चरणगुरवः पङ्क्तिपावनाः पञ्चाग्नयो धृतव्रताः सोमपीथिन उदुम्बरनामानो ब्रह्मवादिनः प्रतिवसन्ति ।

ते श्रोत्रियास्तत्त्वविनिश्चयाय भूरि श्रुतं शाश्वतमाद्रियन्ते ।
इष्टाय पूर्ताय च कर्मणेऽर्थान् दारानपत्याय तपोऽर्थमायुः ॥

तदामुष्यायणस्य तत्रभवतो वाजपेययाजिनो महाकवेः पञ्चमः सुगृहीतनाम्नो भट्टगोपालस्य पौत्रः पवित्रकीर्तेर्नीलकण्ठस्यात्मसंभवः श्रीकण्ठपदलाञ्छनः पदवाक्यप्रमाणज्ञो भवभूतिर्नाम जतुकर्णीपुत्रः ।

यद्वेदाध्ययनं तथोपानिषदां सांख्यस्य योगस्य च
ज्ञानं तत्कथनेन किं न हि ततः कश्चिद्गुणे नाटके ॥

Relying on these extracts as well as others, Dr. R. G. Bhandarkar states as follows in his Introduction to Mālatīmādhava:—"Bhavabhūti was descended from a family of Brahmans surnamed Udumbaras residing in Padmapura in the country of the Vidarbhas, the modern Berars. They were followers of the Taittirīya Śākhā of the Yajurveda and belonged to the Kāśyapa gotra. They were pious Brahmans, regularly worshipping Agni and sometimes perform-

ing the higher sacrifices such as Vājapeya. Even at present, there are families of Marathi and Tailinga Taittirīyin Brahmans in and about the country where the Udumbaras lived. The name of Bhavabhūti's father was Nīlakaṇṭha, of his mother Jatukarṇī, and of his grandfather Bhaṭṭa Gopāla. He was the fifth in descent from one Mahākavi, who was a great sacrificer. Bhavabhūti was a man of learning. He knew the Vedas, the Upanishads, and the Sāṁkhya and Yoga systems of philosophy. He has given indications of his acquaintance with the Yoga in Mālatīmādhava and the Vīracharita, and in the Uttararamacharita, has in two or three places alluded to the chief doctrines of the Aupanishada or Vedānta system, which appears to be somewhat different from that elaborated by Saṅkarāchārya. The name of his guru or teacher was Jnānanidhi, which looks like one assumed by persons when they enter into the fourth or Saṁnyāsa order and devote themselves to the study and contemplation of the Brahman, and that Jnānanidhi was the best of Paramahaṁsas or ascetics of the highest order, we are told in the first half of the stanza in the Vīracharita. He probably initiated our poet into the secrets of the Vedānta."

The date of Bhavabhūti is ascribed by Dr. R. G. Bhandarkar to the first quarter of the 8th century A. D. For a detailed analysis of the data on which this conclusion is based, the reader is referred to the preface to Mālatīmādhava edited by Dr. R. G. Bhandarkar in the Bombay Sanskrit Series.

With regard to the commentator we can easily find from the concluding stanzas of this commentary

that he was named Nārāyaṇa, a native of Valarkshamangala (Vellamangalam?) in Malabar, the first disciple of Nārāyaṇa Bhaṭṭa. This latter Nārāyaṇa Bhaṭṭa was a native of Mepputtoor Illom in the village of Perumanam on the northern bank of the river Nilā in North Malabar. He is the author of Nārāyaṇīya, otherwise known as Bālabhāgavata which has been published in the Trivandrum Sanskrit series. The late Mahāmahopādhyaya T. Ganapati Sastri has in his introduction to Nārāyaṇīya, referred to a traditional story that Nārāyaṇa was relieved of acute rheumatism through the grace of Lord Kṛṣṇa, the presiding Deity of the Guruvayur temple for whose propitiation he sung his memorable poem at the rate of ten verses per day. He is said to have flourished in the court of Devanārāyaṇa, king of Ambalapuzha. From the last word occuring in Nārāyaṇīya—आयुरारोग्यसौख्यम् it is made out that the poem was composed in 1590 A. D. by the teacher Nārāyaṇa. It therefore follows that the pupil Nārāyaṇa, the author of Bhāvārthadīpikā, the commentary on Uttararāmacarita, must have lived in the beginning of the 17th century. This commentary is therefore the earliest of the available commentaries on this drama, though latest to see the light of print. Ghanaśyāma, another commentator on Uttararāmacarita is known to have been a contemporary of King Tukkoji, Maharaja of Tanjore who ruled from 1728 to 1735 A. D., so that his commentary must have been at least one century later than Nārāyaṇa's. The commentary of Vīrarāghava printed by the Nirnaya Sagar Press has been proved by Mr. P. V. Kāṇe in his introduction to Uttararāmacarita to be much later than that of Ghanaśyāma. A fourth

commentary is also available whose author is Rāmachandrabudhendra who seems to have been an inhabitant of Benares. This has been printed in Telugu and Grantha characters. Mr. P. V. Kane has proved that this commentary is the same as the one in Vidyasagara's edition so that Īśvarachandra Vidyasagara's claims, if any, to the authorship thereof are unfounded. Mr. P. V. Kane says 'There is a certain very modern ring about this commentary.' I have therefore no hesitation in coming to the conclusion that Bhāvārthadīpikā is the oldest of the commentaries that have so far been printed.

In the preparation of this edition I was given access to the manuscripts of the commentary in the hands of Mr. Punnasseri Nambi Neelakantha Sarma, Principal, Sanskrit College, Pattambi and of the Curator, Government Oriental Manuscripts Library, Egmore, Madras, to both of whom my thanks are due.

C. SANKARA RAMA SASTRI,
General Editor,
Sri Balamanorama Series

*Mylapore, Madras.*
15th March, 1932

# DRAMATIS PERSONÆ

सूत्रधारः

नटः

रामः

सीता

कञ्चुकी (गृष्टिः)

अष्टावक्रः

लक्ष्मणः

प्रतिहारी

दुर्मुखः

तापसी (आत्रेयी)

वनदेवता (वासन्ती)

शम्बूकः

तमसा

मुरला

दाण्डायनः

सौधातकिः

जनकः

अरुन्धती

कौसल्या

लवः

वटवः

पुरुषः (चन्द्रकेतुसैनिकः)

चन्द्रकेतुः

सुमन्त्रः

विद्याधरः

विद्याधरी

कुशः

पृथिवी

गङ्गा (भागीरथी)

वाल्मीकिः

॥ श्रीः ॥

# ॥ उत्तररामचरितम् ॥

श्रीमत्केरलभूवलयमहितभूषणोपरिनवग्रामधामप्रथितपूर्वोत्तरमीमांसापरमाचार्य-
**श्री नारायणकविवर** प्रथमान्तेवासिविरचितया
**भावार्थदीपिकया** व्याख्यया समलंकृतम् ॥

## प्रथमोऽङ्कः ।

## ॥ उत्तररामचरितव्याख्या भावार्थदीपिका ॥

भक्तलोकहृदम्भोजसमुन्मीलनभास्करम् ।
अन्तरायविघाताय सिन्धुराननमाश्रये ॥ १ ॥

सर्वविद्यागमाचारप्रवक्त्रे श्रुतिचक्षुषे ।
दिव्यवाणीलतोपघ्नतरवे गुरवे नमः ॥ २ ॥

प्रभूतरसवाग्दोग्ध्रीनिर्व्यूढनिजवृत्तये ।
नमः शब्दार्थविज्ञानभूतये भवभूतये ॥ ३ ॥

नमोऽस्तु कवये तस्मै वल्मीकोदरजन्मने ।
रामायणमहाकाव्यपीयूषक्षीरसिन्धवे ॥ ४ ॥

विद्वत्पदसरोजन्मपरागविशदीकृते ।
स्फुरन्तु चेतोमुकुरे सारस्वतरसोर्मयः ॥ ५ ॥

अभिधेयानुषक्तोत्थवस्तुवैचित्र्यदर्शिनीम् ।
अनुगृह्णातु नः प्रीत्या रामः प्रज्ञामयीं दृशम् ॥ ६ ॥

कुर्महे निर्भराकूतशब्दसंदर्भविस्तरे ।
**उत्तरे रामचरिते** तात्पर्यार्थनिरूपणम् ॥ ७ ॥

संप्रदायसमुच्छेदात् खिलीभूतेऽत्र नाटके ।
व्याक्रियायत्नतस्त्वेतन्निर्वहेम समीहितम् ॥ ८ ॥

कस्मिंश्चिदपि संदिग्धे यथा वादेन निश्चयः ।
व्याख्ययापि तथैवेह सिध्येत्तात्पर्यदर्शनम् ॥ ९ ॥

गरीयसि यतोऽमुष्मिन्नुत्सुका वयमीदृशे ।
अपि बाहुलताक्षेपैरुत्तितीर्षेम सागरम् ॥ १० ॥

कविवर्योक्तिमाधुर्यमसृणीकृतचेतसाम् ।
सुलभानि भवेयुर्नः स्खलितानि पदे पदे ॥ ११ ॥

वाच्यार्थबोधविरहे दूरे तात्पर्यनिर्णयः ।
वचनप्रौढिदुर्बोधेष्वाकूतेषु तु का कथा ॥ १२ ॥

एवमप्यत्र शब्दार्थव्याक्रियारचनं हि नः ।
अन्धेन निकषोन्मृष्टमुक्ताशुद्धिपरीक्षणम् ॥ १३ ॥

शक्तिव्युत्पत्तिशिक्षाभिरुत्तेजितधियामपि ।
दुःसाधाद्विरमत्येषा मनीषा नैव का गतिः ॥ १४ ॥

अनालोचितशास्त्रार्थानप्रौढमतिवैभवान् ।
अस्मानकस्मादाविष्टा व्याचिख्यासापिशाचिका ॥ १५ ॥

पौरोभाग्यवशावाप्तवैदुषीदूषिताशयाः ।
प्रत्यवस्थाय मन्तूया दुर्जना रचयन्तु नः ॥ १६ ॥

अतोऽत्र कृतवैराणामसतां दूषणोक्तिभिः ।
नैव हानिः प्रमाणं यत् सुधियो ये विमत्सराः ॥ १७ ॥

उक्तिर्गौणधुरीणभङ्गिगहना यत्रेतिवृत्तं पुन-
र्गम्भीरं चरितं तथोत्तरमिदं रामस्य पूर्णात्मनः ।
तत्र श्रीभवभूतिहृद्रसपरीवाहे निबन्धाम्बुधौ
यत्सत्यं विजिगाहिषैव विदुषां तोषाय सैषा भवेत् ॥ १८ ॥

तत्त्वज्ञानमयं वितीर्य रुचिरं सिद्धौषधं ये जनान्
खिन्नान्मोहमहागदव्यतिकरैरुल्लाघयेयुः स्वतः ।
संतुष्टा विवरीषया यदि हि ते नाद्येऽत्र नः केवलं
व्याख्येयाखिलवस्तुदृष्टिचतुरप्रज्ञां विदध्युर्न किम् ॥ १९ ॥

दीपिकेव यतो भावान् गूढानपि विभावयेत् ।
**भावार्थदीपिके**तीह व्याख्यास्माभिर्विरच्यते ॥ २० ॥

नो विद्वद्गणनाशया न च कविख्यात्युद्गमश्रद्धया
नैव स्वीयविचारकौशलविधाविख्यापनोत्कण्ठया ।
पीयूषद्रवपिच्छिलोक्तिसुभगग्रन्थावगाहोत्सुक-
स्वान्तोल्लासकतीर्थदुर्लभतया व्याख्यामिमां कुर्महे ॥ २१ ॥

सारस्वतपरीपाकमाधुरीसारवेदिनाम् ।
विपश्चितामियं शश्वज्जायतां कर्णभूषणम् ॥ २२ ॥

इह खलु शुद्धसत्त्वात्मिकायाः पराया ।वैवर्त आस्वादनीयेषु प्रकृष्यते । स द्विविधः—सङ्गीतं साहित्यं चेति । तथा चोक्तम्—

'सङ्गीतमपि साहित्यं सरस्वत्याः स्तनद्वयम् ।
एकमापातमधुरमन्यदालोचनामृतम् ॥' इति ।

तत्र पुरुषार्थव्युत्पत्तिहेतुत्वात् साहित्यं सातिशयम् । तदुक्तमभियुक्तैः—

'नारामे राजनाम प्रभवति रुचये माननीयो मनो त्वं
नाचापे शत्रता स्यात् कुलिश ननु विशेषार्थिता ते करेषु ।
नासाहित्यं सुखाय स्मर यदमलबोधाय सङ्गीत न स्याः
नानर्घ्यं जन्म बाहूद्भवकुशिकसुतो यत्परोऽभूदमेयः ॥' इति ।

ननु सङ्गीतस्यापि—

'वीणावादनतत्त्वज्ञः श्रुतिजातिविशारदः ।
तालज्ञश्चाप्रयासेन योगमार्गं निगच्छति ॥'

इति याज्ञवल्क्यवचनेन पुरुषार्थलाभहेतुत्वात् कथं सङ्गीतात्साहित्यं सातिशयमित्यभिधीयत इति चेत् मैवम् । वीणावादनादिकलातत्त्ववेदिना तत्प्रयोगे विषयान्तरनिवर्तनेन चित्तस्यैकाग्र्यसंभवात्तथाविधाकारयोगमार्गावगाहने सौकर्योपादानमात्रसारात् सङ्गीतात् साक्षादेव पुरुषार्थलाभहेतोः साहित्यस्यैवोत्कृष्टतमत्वोपपत्तेः । तच्चापि त्रिविधम्—प्रभुसंमितं, सुहृत्संमितं, कान्तासंमितं चेति । तदुक्तं भट्टगोपालेन—'इह खलु सर्वोऽपि वाङ्मय उपदेशहेतुः संक्षेपात् त्रिधा—प्रभुसंमितः, सुहृत्संमितः, कान्तासंमितश्चेति' इति । तत्र सरसतापादनेनोपदेशकरणात्कान्तासंमितमेव नितरां प्रकृष्टम् । तदुक्तम्—'कटुकौषधवच्छास्त्रमविद्याव्याधिनाशनम् । आह्लाद्यमृतवत्कान्तासंमितं हृन्मलापहम् ॥' इति । ननु रसैकप्रवणे तादृशे खलु शब्दनिबन्धने तत्तद्रसाद्यभिव्यञ्जकललनोद्यानादिपरामर्शनसमनन्तरजन्यालौकिकचमत्कारोदयसमुत्सुकचेतसां रासिकजनानामेवाधिकारात् तेषां च तावन्मात्रे तात्पर्याज्ज्ञायकवद्वर्तितव्यं न प्रतिनायकवदित्युपदेशलाभस्य यादृच्छिकत्वात् प्रभुसंमितत्वेनानुष्ठानपर्यवसायकाभिधासंज्ञितशब्दव्यापारप्रतिपादितनिखिलवेदनीयाच्छास्त्रादेरस्य कान्तासंमितस्य निखिलबुधवरहृदयसंमतः को वातिशय इति चेत्—हन्त भोः सुधियां ब्रूमो रहस्यं चेतसि स्थितम् । श्रूयतामवधानेन सादरं चावधार्यताम् ॥ ननु स्वप्नेऽपि प्रभुसंमितं किंचिदप्यवजानीमः । किंतु सरसतामुत्पाद्य श्रोतृजनहृदयं सम्यगावर्ज्य हितोपदेशकरणाद्रसास्वादनसमनन्तरं व्युत्पित्सूनां पुण्ड्रेक्षुभक्षणाद्वितनवित्तलाभवत्पुरुषार्थज्ञानलाभात्सुकुमारमतीनामपि काव्यमुखप्रेक्षितया निखिलशास्त्रार्थपरिज्ञाने सौकर्याच्च सकलेभ्योऽपि वाङ्मयेभ्यः कान्तासंमितस्य तादृशं कमप्युत्कर्षं प्रतिजानीमः । तथाचाहुः—'साधुकाव्यरसोन्मिश्रं शास्त्रमप्युपयुञ्जते । प्रथमालीढमधवः पिबन्ति

कटु भेषजम् ॥' इति । यत्पुनः कान्तासंमितादुपदेशलाभो यादृच्छिक इति, तदसारम् । अनुष्ठेयानुष्ठेयपरिज्ञानाय शब्दार्थावप्रधानीकृत्य रसाङ्गभूतव्यापारप्रवणतया नायकप्रतिनायकवृत्तान्तयोरुदाहरणप्रत्युदाहरणन्यायेन वर्णनीयत्वाच्छास्त्रादेरिव कान्तासंमितादपि पुरुषार्थोपदेशलाभस्य नियतत्वात् । अतः परमाह्लादापादनेनोपदेशकरणात् प्रयोजनात् प्रयोजनान्तरप्रतिपादनरूपाद्विशेषात् केनचिदप्यनुल्लङ्घनीयशासनस्य प्रभोः सचिवमुखेनेव शास्त्रस्यापि काव्यमुखेनैव प्रेक्षणाभिप्रायपरिज्ञानयोः करणीयत्वाच्च कान्तासंमितमेवास्वादनीयेषूत्कृष्टतममिति सुस्थितम् । तत्पुनः काव्यनाटक(व्य)भेदात् द्विविधम् । यथाहुः—'अनुभावविभावानां वर्णना काव्यमुच्यते । तेषामेव प्रयोगस्तु नाट्यं गीतादिरञ्जितम् ॥' इति । तत्रापि दृश्यतया नाटकादीनि भृशतरं स्वदन्ते । तेष्वपि भवभूतिप्रणीतानि । तत्राप्युत्तरं रामचरितम् । तदुक्तं कालिदासेन— 'नाटके भवभूतिर्वा वयं वा वयमेव वा । उत्तरे रामचरिते भवभूतिर्न संशयः ॥' इति । ननु रघुनाथस्यैव निखिलजनमनस्समावर्जकेऽभिमतरसभाजि निबन्धनसमुचिते चरितान्तरे सत्यपि किमर्थमयं महाकविर्निर्दोषतरधर्मदारपरित्यजनादुभयलोकविरुद्धमतिसाहसभूतमेवैतत्करुणरसात्मकत्वेनामङ्गलप्रायं तादृशमितिवृत्तं, 'एको रसोऽङ्गीकर्तव्यः शृङ्गारो वीर एव वा' इति नाट्यज्ञशासनमप्यनादृत्य स्वप्रबन्धे निबबन्ध—इति चेदुच्यते । 'क्षितितले किं जन्म कीर्तिं विना' 'संभावितस्य चाकीर्तिर्मरणादतिरिच्यते' 'कीर्तिं स्वर्गफलामाहुरासंसारं विपश्चितः । अकीर्तिं च दुरालोकनरकोद्देशदूतिकाम् ॥' 'लोकापवादाद्भयम्' इत्यादिवचनादधोगतिहेतुभूतामकीर्तिमेव केवलं परिहरता रामचन्द्रेण कृतस्य धर्मदारपरित्यजनस्य लोकद्वयविरोधाभावात्, नायिकानायकयोरपीतरेतरानुरागस्फुटीकरणस्यैव रसिकजनरसायनत्वात्, तस्य च विप्रलम्भपरमकाष्ठायामेव संभवात, प्रियतमापरित्यागसमभिव्यञ्जितस्य च करुणस्य संयोगपर्यन्तत्वे फलतो विप्रलम्भरूपत्वात्, विप्रलम्भकरुणयोर्माधुर्यस्य प्रकर्षवत्त्वाच्च सीतापरित्यागरूपमितिवृत्तं रसिकजनशिखामणिर्भवभूतिः पर्यग्रहीत् । उक्तं च—'शृङ्गारे विप्रलम्भाख्ये करुणे च प्रकर्षवत् । माधुर्यमार्द्रतां याति यतस्तत्राधिकं मनः ॥' इति । नच— 'स्मृते सकलकल्याणभाजनं यत्र जायते । पुरुषस्तमजं नित्यं व्रजामि शरणं हरिम् ॥' 'ममास्तु मङ्गल्यवृद्धये हरिः' 'मङ्गलानां च मङ्गलम्' इत्यादिश्रुतिस्मृतीतिहासपुराणादिप्रसिद्धमङ्गलभावस्य भक्तानुग्रहाय गृहीतविग्रहस्य दशरथतनूजन्मनो भगवतो महाविष्णोश्चरितेषु किञ्चिदप्यमङ्गलमुपपद्यते । अत एव हि श्रोतॄणामेतच्छङ्कामपनयता महाकविनापि—

'पाप्मभ्यश्च पुनाति वर्धयति च श्रेयांसि येयं कथा
मङ्गल्या च मनोहरा च जगतो मातेव गङ्गेव च ।

(नान्यन्ते प्रविशति सूत्रधारः)[1]

**सूत्रधारः—**

इदंगुरुभ्यः[2] पूर्वेभ्यो नमोवाकं[3] प्रशास्महे[4] ।
वन्देमहि च तां[5] वाणीममृतामात्मनः कलाम् ॥ १ ॥

---

तामेतां परिभावयन्त्वभिनयैर्विन्यस्तरूपां बुधाः
शब्दब्रह्मविदः कवेः परिणतां प्राज्ञस्य वाणीमिमाम् ॥'

इत्युपसंहारे मङ्गल्यत्वं मनोहरत्वं च प्रतिपादितमिति सकलमनाकुलम् ॥

अथ नाटकाचारमनुविदधानो महाकविः शिष्टाचारानुमितस्मृतिमूलभूतश्रुतिविहितत्वेन सकलसमीहितारम्भेष्ववश्यानुष्ठेयस्येष्टदेवतानमस्कारस्य 'गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः' इति वचनाद् गुरुनमस्कारेणैव चरितार्थताम्, कविविषये पुनर्भारतीलक्षणाया देवताया विशेषतः प्रणन्तव्यतां चानुसंधाय तदात्मिकां नान्दीसपर्यां संपादयति— **इदंगुरुभ्य इत्यादिना** ॥ अस्य च श्लोकस्य 'न पदं पदमित्याहुर्वाक्यं हि पदमुच्यते' इत्युक्तेर्वाक्यस्यैव पदत्वाश्रयणेन द्विपदत्वाच्चन्द्रवाचककलाशब्दवत्त्वाच्च नान्दीयम् । तदुक्तम्—'षट्पद्यष्टपदी वापि द्विपदी वा चतुष्पदी । प्रयोक्तव्या भवेन्नान्दी तथा द्वादशपद्यपि ॥' इति । सा चावश्यं चन्द्रनामाङ्किता प्रयोक्तव्येति कविसंप्रदाय इति च । ननु द्विपदीत्वाद्यन्यतमस्य चन्द्रवाचकस्य च 'सानन्दं नन्दिहस्ते—'त्यादावदर्शनादव्याप्तमेतल्लक्षणम्—इति चेदुच्यते । इह खलु नाट्यसमयवशादुभयी किल नान्दी कर्तव्या । पूर्वरङ्गे प्रयोग्यैका, स्थापनायां पुनरन्या । तत्र पूर्वरङ्गयोग्याया नायं नियमः । अपि तर्हि स्थापनाविहिताया एवेति । ननु पूर्वरङ्गस्य रङ्गपूजारूपत्वात्तदन्ते खलु कथासूचनार्थं सूत्रधारस्य प्रवेशो विहितः । तत्कथमप्रविष्टस्य तदानीं नान्दीपठनमुपपद्यते । यदि पूर्वरङ्गादावेव स प्रविश्य नान्दीपठनं कुर्वीत, तर्हि स्थापनानान्द्याः कः प्रयोक्तेति वक्तव्यम् । ननु स एव । 'नान्द्यन्ते प्रविशति सूत्रधारः' इत्यनेन विरोधात् । अतः सूत्रधारस्य पूर्वरङ्गादौ प्रवेशे स्थापनानान्द्याः कर्तभावः, स्थापनामुखे चेत् पूर्वरङ्गनान्द्याः इत्युभयतःपाशा रज्जुः स्यादिति चेन्मैवम् । पूर्वरङ्गेऽपि तस्य प्रवेशोपपत्तेः । न खलु पूर्वरङ्गविधानाय प्रविष्ट एव सूत्रधारः स्थापनामपि कुर्वीतेति नियमः, अपि तु कुर्यादितरोऽपि । तथा चोक्तम्—'पूर्वरङ्गं विधायादौ सूत्रधारे विनिर्गते । प्रविश्य तद्वदपरः काव्यार्थं स्थापयेन्नटः ॥' इति । प्रविष्टस्यैव तस्य पूर्वरङ्गविधानानन्तरं निर्गत्य स्थापनार्थं पुनः प्रवेशो वाऽस्तु । तदप्युक्तम्—'आश्रावणावसाने तु नान्दीं कृत्वा स सूत्रभृत् । पुनः प्रविश्य रङ्गं तु कुर्यात्प्रस्तावनां ततः ॥' इति । एवं च स्थिते 'इदंगुरुभ्य'—इत्यादिप्रथमपद्या-

---

१. नान्द्यन्ते इत्यादेः इदंगुरुभ्य इति श्लोकानन्तरं क्वचित्पाठः. २. इदंकविभ्यः ३. नमोवाक्यं ४. प्रयुञ्ज्महे. ५. विन्देम देवतां वाचं. ६. वाचं

त्पूर्वमेव 'नान्द्यन्ते प्रविशति सूत्रधारः' इति ग्रन्थसन्निवेशस्यापि पुस्तिकासु बहुलमुपलब्धेरस्य स्थापनानान्दीत्वमवधार्यते। पश्चादुपलब्धिस्तु प्रमादाल्लेखकदोषाद्वेति नाव्याप्तिदोष आशङ्कनीय इत्यलमतिप्रसङ्गेन श्रोतृजनहृदयोद्वेजनेन ॥ श्लोकस्तु व्याख्यायते— इदंगुरुभ्यः पूर्वेभ्यः नमोवाकं प्रशास्महे, तां वाणीं वन्देमहि च इत्यन्वयः। **इदंगुरुभ्यः**—इदानींतनेभ्यो गुरुभ्य इत्यर्थः। सुप्सुपेति समासः। **पूर्वेभ्यः**—चिरन्तनेभ्यः, व्यासवाल्मीक्यादिभ्य इत्यर्थः। क्रियार्थेत्यादिना चतुर्थी। गुरून् प्रीणयितुमित्यर्थः। अन्यथा नमःशब्दस्य वाको नमोवाक इति षष्ठीसमासे गुणीभूतस्य नमःशब्दस्य निष्कृष्य संबन्धाभावादत्र 'नमः स्वस्ति—' इत्यादिना चतुर्थी न भवति। अस्मात्समुच्चयः। 'वच परिभाषणे' इत्यस्माद्घञ्। **प्रशास्महे** इच्छामः। नमोवचनमभिलषाम इत्यर्थः। गुरुचरणपरिचर्यां मनसि भावयाम इत्यर्थः। अत्र अनुशासनार्थस्य शासेः परस्मैपदित्वादिच्छार्थस्य त्वाङ्पूर्वत्व एवात्मनेपदविधानात् 'प्रशास्महे' इति पाठश्चिन्त्य इति साहित्यमल्लः। 'प्रायेणाङ्पूर्व इत्युक्तेः प्रशास्त इत्यपि' इति प्रक्रियासर्वस्वकथनात् साधुः। 'प्रयुञ्ज्महे' इति वा पाठः। **ताम्** निखिलकविकुलकामधेनुत्वेन प्रसिद्धाम्। **वाणीं** वाचम्। अनाद्यविद्यावासनया मिथ्यारूपप्रतीयमानशब्दार्थावबोधसहितां वैखरीरूपिणीमित्यर्थः। **वन्देमहि** स्तुतिनमस्कारात्मना प्रह्वीभावेन सम्यगनुकूलयेमेत्यर्थः। 'वदि अभिवादनस्तुत्योः' इति धातुः। अत्र गुरुविषयनमोवाककर्मिका वाञ्छैव पूर्ववाक्यार्थः। उत्तरेऽपि तां वाणीं वन्देमहि चेति लिङा प्रार्थनाविशिष्टः कर्ताऽभिधीयत इति वाणीविषयवन्दनप्रार्थनैव वाक्यार्थः पर्यवस्यति। अतः पूर्वोत्तरयोर्वाक्यार्थयोरैकरूप्यं प्रतिपादयितुमेव पूर्वार्धलडन्तप्रयोगप्रक्रमभङ्गमविगणय्य लिङन्तप्रयोग उत्तरवाक्ये कृत इति मन्तव्यम्। नहि गुरुविषयनमस्कारेच्छाया वाणीविषयवन्दनप्रार्थनायाश्च मिथोऽत्यन्तं भेदोऽपि। ननु सर्व एव साधनानां दुःखरूपत्वात् साध्यमेवेच्छन्ति। तत् कथमयं परदेवताप्रसादसाधनभूतं वन्दनं प्रार्थितवानिति चेदुच्यते—सर्वत्रापि साध्याशंसनस्योद्वेगकारितया चातुर्याभावात् साधनलाभे पुनः साध्यलाभस्यावश्यंभावाच्च वन्देमहीति स्वोपास्यदेवतायाः परिचरणलाभमेवाशंसितवानिति मन्तव्यम्। इदं नमोवाकं प्रशास्महे इति वा संबन्धः॥ ननु पुंसा विशेष्येण संबन्धादिदमः कुतः। इष्यते न विधिः पौंस्न इति चेत्तत्र कथ्यते ॥ इदमा खलु सामान्ये वाच्ये नापुंसकः पुनः। संस्कारोऽस्य भवेल्लिङ्गसर्वनामत्वयोगतः ॥ ततो विशेष्यसंबन्धादागतं नहि बाधते। बहिरङ्गं पुनः पुंस्त्वं क्लीबत्वं त्वन्तरङ्गकम् ॥ अयमर्थः कैयटेन महाभाष्यवचः स्फुटम्। व्याकुर्वता हि शक्यं क्षुत्प्रतिहन्तुमितीदृशम् ॥ उक्तो यतो न निर्मूलत्वशङ्का जायतामिह। दृश्यते हि प्रयोगोऽपि विहितः कविपुङ्गवैः ॥

अङ्गैरालिङ्गितुं शक्यं पवनस्तद्वदेव हि । 'शक्यमञ्जलिभिः पातुं वाता' इति च कुत्रचित् ॥ अतः पुंसा विशेष्येण संबन्धेऽपि हि षण्डता । इदमः खलु युक्तैव नोपपत्तिहतिस्त्वियम् ॥ इति । ननु वैखरीरूपिण्याः क्षणविनश्वर्याः कथं प्रारिप्सितविघ्नोपशमाय प्रणन्तव्यता—इति चेन्मैवम् अभिव्यञ्जकत्वात्ताल्वादिव्यापारस्येत्याह—**अमृतामिति** ॥ कालत्रयसंबन्धाभावशून्यामित्यर्थः । अविनाशिनश्च ब्रह्मण आनन्दमयत्वादमृतामित्यस्य तत्पर्यवसायादानन्दमयीमिति वाऽर्थः । ननु वैखर्या देवतात्वाभावादभिलषितसंपादनं तावत् तदधिष्ठात्री देवतैव करोतीत्याश्रयणीयम् । अतः प्रबन्धमुखसमुचितप्रणामा शब्दाधिष्ठात्री परदेवता वागीश्वर्येवात्र वाणीशब्देनोच्यत इति व्याख्यातुमुचितमित्यत्राह—**आत्मनः कलामिति** ॥ आत्मनः शब्दब्रह्मणः सूक्ष्मायाः परासंज्ञिताया वाच इत्यर्थः । तदुक्तम्—'स्वरूपज्योतिरेवान्तः परा वागनपायिनी' इति । परा हि स्वप्रकाशचिदात्मनः परमेश्वरस्य महती शक्तिस्तदभिन्ना मुख्या देवतेति सांविदानां समयः । तथा चाहुः—'शक्तिश्च शक्तिमद्रूपाद्व्यतिरेकं न वाञ्छति । तादात्म्यमनयोः सिद्धं वह्निदाहिकयोरिव ॥' इति । **कलाम्** औपाधिकभेदवशादंशत्वेन वाच्याम् । अक्षरात्मकविग्रहवतीमित्यर्थः । पराविलासात्मकत्वाच्च वैखर्या देवतात्वं प्रणन्तव्यत्वं चोक्तं परब्रह्मभूतसूर्यरूपपरदेवतास्तुतौ साम्बश्लोकपञ्चाशिकायाम्—'या सा मित्रावरुणसदनादुच्चरन्ती त्रिषष्टिं वर्णानत्र प्रकटकरणैः प्राणसङ्गात्प्रसूते । तां पश्यन्तीं प्रथममुदितां मध्यमां बुद्धिसंस्थां वाचं वक्त्रे करणविशदां वैखरीं च प्रपद्ये ॥' इति । अतः प्रबन्धमुखे वन्देमहि च तां वाणीमित्यनेन परदेवताविलासभूताया वैखर्या एव प्रणमनं महाकविना कृतमिति समञ्जसम् ॥ ननु सूत्रधारपठनीयेनानेन नान्दीश्लोकेन भवितव्यम् । तथाच प्रबन्धप्रतिपाद्यं वस्त्वपीह संग्रहेणावश्यं सूचनीयमेव । यथा खल्वनर्घराघवादौ नाटके निष्प्रत्यूहमित्यादिना महाविष्णोरंशावतारभूतयोर्भरताग्रजसुमित्रासुतयोः कथानायकत्वादिकं भगवदवयवभूतयोर्लोचनयोरुपासनादिकथनेन सूच्यते । नहि तादृशं किमपि वस्तु मनीषिणामिह प्रतीतिपथमवतरेत् । तत्कथमत्र सूचनीयवस्तुप्रपञ्चकक्ष्याविभागः—इति चेदुच्यते । अत्र तावन्नमोवाकवन्देमहिशब्दाभ्यां गुर्वादीनां सर्वोत्कृष्टत्वलक्षणं वस्तु, व्यतिरेकालङ्कारः, गुर्वादिविषयः कवेर्भावश्च व्यज्यते । तथैव 'सर्वेषां ब्राह्मणो गुरुः' इति वचनादनिर्दिष्टविशेषस्य गुरुशब्दस्य ब्राह्मणपर्यवसायित्वात् नमोवचनाशंसनस्य च प्रीणनार्थलाभाद् वाणीशब्दस्य वैखरीसंज्ञितपराविवर्ताभिधायित्वात्, कलाशब्दस्य चानुपहिताकारेण वैखर्याः शब्दब्रह्मैक्यप्रतिपादनपरत्वाच्च मृतपुत्रको ब्राह्मणः, शूद्रमुनिनिग्रहणात् तनयजीवनेन तत्प्रीणनं, पावकप्रवेशादिना चारित्र्यशुद्धयवगमनेऽपि लोकवाणीं प्रमाणीकृत्य कृतं सीतापरित्यजनं, पश्चाद्वाल्मीकिकृतनाट्यदर्शनात् सर्वभूतविदितशुद्धेश्च तस्या निर्वहणसन्धौ रघुनाथेन योगोऽपि

अलं प्रविस्तरेण। अद्य खलु भगवतः कालप्रियनाथस्य यात्रायामार्यमिश्रान्विज्ञापयामि—एवमत्रभवन्तो विदांकुर्वन्तु । अस्ति खलु तत्रभवान्काश्यपः श्रीकण्ठपदलाञ्छनः पदवाक्यप्रमाणज्ञो भवभूतिर्नाम जतुकर्णीपुत्रः ।

---

प्रबन्धप्रतिपाद्योऽर्थः संग्रहेणात्र सूचित इति सूचनीयसकलवस्तुसूचनसंभवाद्भरतमुनिकथितं निखिलमपीह नान्दीलक्षणमपरिहीणमिति सर्वमवदातम् ॥

अथ प्रतिपाद्यसूचनाय प्रविष्टः सूत्रधारः कार्याभिनिवेशवशादवश्यकरणीयमेवेदानीं मया क्रियते, नतु प्रस्तावनामुखविधेयानि सकलान्यपि कर्मान्तराणीत्याह— **अलमिति** ॥ निषेधे चायं निपातः । 'अलं भूषणपर्याप्तिशक्तिवारणवाचकम्' इत्यमरः । **प्रविस्तरेणेति** ॥ प्रकृष्टेन विस्तरेणेत्यर्थः । इह विस्तरकृतो यो गुणः स तु नेदानीमाद्रियते इत्यलंशब्देन सूचितम् । तत्रापि— 'रङ्गं प्रसाद्य मधुरैः श्लोकैः काव्यार्थसूचकैः । ऋतुं कञ्चिदुपादाय भारतीं वृत्तिमाश्रयेत् ॥' इत्याद्युक्तः पाठ्यविषय एव प्रपञ्चो निषिध्यते; नतु परिवर्तनाद्यङ्गहारविषय इति प्रविस्तरशब्देन प्रकाश्यते । 'विस्तारो विस्तरो व्यासः स तु शब्दस्य विस्तरः' इत्यमरः ॥ कुतः पुनर्भरतकोहलप्रमृतिभिर्विहित ईदृशः प्रपञ्चः संक्षिप्यते इत्यत्राह—**अद्येति** ॥ **कालप्रियनाथस्य** कालप्रियेश्वरस्य । कालप्रियमिति प्रबन्धकर्तुः कुलदैवतभूतस्य परमेश्वरस्य दिगन्तरप्रथितं क्षेत्रमभिधीयते । **यात्रायाम्** उत्सवे । **आर्यमिश्रान्** उत्सवसेवार्थमागतान् विपश्चित इत्यर्थात् । मिश्रशब्दः पूजावाची ॥ अथ विद्वत्प्रसादपरतन्त्रतया स्वप्रयोगसाधुत्वस्य सामाजिकजनमनःसमावर्जनप्रयोजिकायाः संस्कृतप्रायनराश्रयवाग्व्यापारात्मिकायाः भारतीवृत्तेश्चतुर्ष्वङ्गेषु प्रधानतमत्वेनावश्यकरणीयं सामाजिकोन्मुखीकरणरूपं प्ररोचनाख्यमङ्गं करोति—**एवमित्यादिना** ॥ तदुक्तम्—'नान्द्यन्ते तु प्रविष्टेन सूत्रधारेण धीमता । प्ररोचनाय रङ्गस्य वृत्तिर्योज्या हि भारती ॥ भारती संस्कृतप्रायो वाग्व्यापारो नराश्रयः । अङ्गान्यस्यास्तु चत्वारि भरतेन बभाषिरे ॥ प्ररोचनामुखे चैव वीथीप्रहसने इति । उन्मुखीकरणं तत्र प्रशंसातः प्ररोचना ॥' इति च । **एवमिति** ॥ वक्ष्यमाणम् । **अत्रभवन्त इति** ॥ पूज्या इत्यर्थः । भवच्छब्देन समस्तो हीदंशब्दः पूजावाची । समुदाचारपरं चैतद्वचनं युष्मदर्थे । **विदांकुर्वन्तु** जानन्तु । विदांकुर्वन्त्वित्यन्यतरस्यामिति सूत्रे निपातनात्साधुः । **श्रीकण्ठपदलाञ्छन इति** ॥ श्रीकण्ठस्य परमेश्वरस्य पदमङ्घ्रिमुद्रैव लाञ्छनं यस्य सः । कनकपट्टादिसन्निवेशितं श्रीकण्ठपदं कुत्रचिदवयवे भक्त्यतिरेकेण धत्त इत्यर्थः । **पदवाक्यप्रमाणज्ञ इति** ॥ अत्र पदवाक्यप्रमाणानां व्याकरण-

---

१. अलमतिविस्तरेण. २. कालप्रियानाथस्य.

यं ब्रह्माणमियं देवी वाग्वश्येवान्ववर्तत ।[1]
उत्तरं रामचरितं तत्प्रणीतं प्रयोक्ष्यते ॥ २ ॥

एषोऽस्मि कविवशादायोध्यकस्तदानींतनश्च संवृत्तः।[2] (समन्तादवलोक्य) भो भोः, यदा तावदत्रभवतः पौलस्त्यकुलधूमकेतोर्महाराजरामस्यायं पट्टाभिषेकसमयो रात्रिंदिवमसंहृतानन्दनान्दीकः, तत्किमित्यद्य[3] विश्रान्तचारणानि[4] चत्वरस्थानानि ।

मीमांसातर्कशास्त्राणामनवगमेऽवगमासंभवात् तद्वेदिता लक्ष्यते । कार्यकारणभावः संबन्धः । विद्यावैशद्यप्रतीतिः फलम् । 'इगुपधज्ञाप्रीकिरः कः' इति कः ॥ सर्वे हि कवयः सरस्वतीकटाक्षलब्धवाग्विभवा लोकोत्तरा जायन्ते; अयं तु प्रत्युत भारत्या सततमुपसेव्यत इत्याह—**यमिति** ॥ **ब्रह्माणं** ब्राह्मणम् । परमेष्ठिनमित्यपि प्रतीयते । 'ब्राह्मणो बाडवो विप्रः षट्कर्मा भूसुरो द्विजः । ब्रह्मा प्रजन्मा' इति शब्दरत्नाकरे । **इयमिति** ॥ सकलकविजनैरुपास्यमानेत्यर्थः । **वश्येवेति** ॥ वशं गता नारी वश्या । यथैव भर्तृवशवर्तिनी नारी तमनुवर्तेत, तथेयं वाग्देवी यमनुवर्तत इति संबन्धः । अनेन पितामहावतारः खल्वयं महाकविरिति प्रतीयते । **तत्प्रणीतम्** तेन प्रणीतम् । भवभूतिना कृतमित्यर्थः । **प्रयोक्ष्यते** प्रयोक्तुमारभ्यते । एवमत्रभवन्तो विदांकुर्वन्तु इति पूर्वेण संबन्धः । एवं प्ररोचनाख्यं भारत्यङ्गं विधाय पात्रप्रवेशोपपादकं प्रस्तावनासंज्ञितमङ्गं विधातुमारभते—**एषोऽस्मीत्यादिना** ॥ एषः अस्मि कविवशात् आयोध्यकस्तदानीन्तनश्च संवृत्त इति योजना । अस्मीत्यहमर्थेऽव्ययम् । इतरथा संवृत्त इत्यत्र सामान्यक्रियायाः प्रतीतेरस्मीति निरर्थकं स्यात् । **कविवशात्** कविकल्पनाबलात् । **आयोध्यकः** अयोध्याभवः । 'धन्वयोपधाद्वुञ्' इति वुञ् । **तदानीन्तन इति** ॥ कथानायकस्य काल एव जात इत्यर्थः । ततश्चात्र प्रथमतो दशरथस्य कन्याजननम्, ततश्च तस्याः कृतकापत्यत्वेन रोमपादाय प्रतिपादनम्, तेन चावग्रहविघातार्थमानीताय विभण्डकसूनवे प्रदानम्, तस्य च द्वादशवार्षिकसत्रप्रवर्तनम्, तत्र च कौसल्यादीनां गमनम्, तेन च सीतावैमनस्यम्, ततश्च गीतवाद्यादिप्रमोदोपसंहरणम् इत्यादीनामर्थानां नीरसतया विष्कम्भकप्रतिपादनीयवस्तुरूपत्वात् सूत्रधारस्यैवायोध्यकतातदानीन्तनत्वे परिकल्प्य भङ्ग्या विष्कम्भकपात्रतामापाद्य 'आदौ विष्कम्भकं कुर्यादङ्कं वा कार्ययुक्तितः' इत्यनेनोक्तमर्थं विस्तरं विनैव योजयामीति रसाभिनिविष्टचेतसो महाकवेरभिप्रायोऽवगन्तव्यः । एवंच सूत्रधारस्यैव विष्कम्भकपात्रीभावात्, 'सूत्रधारो नटीं ब्रूते मारिषं वा विदूषकम् ।

१. वाग्वश्यैवान्ववर्तत. २. कार्यवशात. ३. तात्किमिदानीं. ४. विश्रान्तचारचरणानि.

(प्रविश्य)

नटः—भाव, प्रेषिता हि स्वगृहान्महाराजेन लङ्कासमरसुहृदो महात्मानः प्लवङ्गमराक्षसाः सभाजनोपस्थायिनश्च नानादिगन्तपावना

---

स्वकार्यं प्रस्तुताक्षेपि वक्रोक्त्या यत्तदामुखम् ॥' इत्यामुखाङ्गत्वेन निर्णीतं वक्रोक्त्या प्रस्तुताक्षेपि स्वकार्यकथनं विनैव तदानीन्तनायोध्यावृत्तकथनेन पात्रप्रवेशो योजयितुं शक्य इति तद्वृत्तान्तवर्णनया वस्तुसूचनमारभते— **भो भो इत्यादिना** ॥ 'भोः खेददर्पयोश्च' इत्यत्र चकारादाभिमुख्यकरणार्थे निपातः । तत् पुनः स्ववर्ग्याणामेवेत्यवगन्तव्यम् । तेषामपि कविवशात्तदानीन्तनत्वेन संबोधनयोग्यत्वात् । वक्ष्यमाणहेतुजिज्ञासासंभ्रमवशात् द्विर्वचनम् । **तत्किमित्यद्येति** ॥ विधेयवाक्यवर्तिनस्तच्छब्दस्य तदेत्यर्थः । उद्देश्यवाक्ये यदेति प्रयुक्तत्वात् । अथवा यदेति यद्यर्थे, तर्ह्यर्थे तदिति । तावच्छब्दोऽवधारणे । इह यत्तत्प्रकृतिकानामुद्देश्यविधेयवाक्यगतानां प्रातिस्विकप्रतियोगिवाक्यगतशब्दार्थानुगुण्येनैवार्थकथनं युक्तम् । अन्यथा विवक्षितार्थप्रतिपत्तेरभावात् । यथा—'यदि हरिस्मरणे सरसं मनो यदि विलासकलासु कुतूहलम् । मधुरकोमलकान्तपदावलिं श्रृणु तदा जयदेवसरस्वतीम् ॥' इति । अत्र हि उद्देश्यवाक्यगतयदिद्वितयार्थानुसारेण विधेयवाक्यवर्तिनस्तदाशब्दस्य तर्ह्यर्थः । तदर्थानुसारेण यदिद्वितयस्य यदेति वा । ईदृशाश्च प्रयोगाः—'पातुं श्रोत्ररसायनं रचयितुं वाचः सतां संमतां व्युत्पत्तिं परमामवाप्तुमवधिं लब्धुं रसस्रोतसः । भोक्तुं स्वादु फलं च जीविततरोर्यद्यस्ति ते कौतुकं तद्भ्रातः श्रृणु राजशेखरकवेः सूक्तीः सुधास्यन्दिनीः ॥' इत्यादिषु तत्र तत्र बहवो दृश्यन्ते । एवं वा 'सर्वैकान्यकिंयत्तदः काले दा' इत्यनेन सूत्रेण कालवृत्तीनां सप्तम्यन्तानां सर्वैकान्यकिंयत्तदां दाप्रत्ययविधानात् सप्तम्याश्च निमित्तार्थायदेति हेतौ यस्मात् कालादेव हेतोरित्यर्थः । रिपुजयकालवशादेवेति यावत् इति । अत्रभवतो महाराजरामस्यायमभिषेकसमयो यदा तावदयं रात्रिन्दिवमसंहृतानन्दनान्दीक इति वा योजना । रात्रिन्दिवमित्यचतुरविचतुरेत्यादिसूत्रे निपातनात्सिद्धम् । **असंहृतानन्दनान्दीक इति** ॥ असंहृता अपरिसमापिता आनन्दनान्दी आनन्दद्योतिका नान्दी येन सः । नान्दीशब्देन मङ्गलवाद्यविशेषः कथ्यते । तथा चानर्घराघवे— 'मदकलकलविङ्कीकाकुनान्दीकरेभ्यः क्षितिरुहशिखरेभ्यो भानुमानुच्चिनोति' इति । 'नान्दी स्यान्मङ्गले वाद्ये' इति विश्वप्रकाशः । **विश्रान्तचारणानीति** ॥ विश्रान्ता विरतनिजप्रवृत्तयः चारणा नृत्तगीताद्युपजीविनो येषु तानि । 'चारणास्तु कुशीलवा' इत्यमरः । **चत्वरस्थानानि** सुग्रीवादिनिवासार्थं परिकल्पितभवनबाह्याङ्गणस्थानानीत्यर्थः । 'अङ्गणं चत्वराजिरे' इत्यमरः । **सभाजनोपस्थायिन इति** ॥ सभाजनं सेवनं तदर्थमुपागता

ब्रह्मर्षयो देवर्षयश्च, यत्समाराधनायैतावतो मासान्प्रमोद आसीत् ।
सूत्रधारः—आ, अस्त्येतन्निमित्तम् ।
नटः—अन्यच्च ।

वसिष्ठाधिष्ठिता देव्यो गता रामस्य मातरः ।
अरुन्धतीं पुरस्कृत्य यज्ञे जामातुराश्रमम् ॥ ३ ॥

सूत्रधारः—वैदेशिकोऽस्मीति पृच्छामि । कः पुनर्जामाता ।
नटः—

कन्यां दशरथो राजा शान्तां नाम व्यजीजनत् ।
अपत्यकृतिकां राज्ञे रोमपादाय तां ददौ ॥ ४ ॥

---

इत्यर्थः । **ब्रह्मर्षयः** अगस्त्यप्रभृतयः **देवर्षयो** नारदादयः । **यत्समाराधनाय** येषां समाराधनाय । आगन्तुकजनप्रीत्यर्थमेवेति यावत् । मासानित्यत्यन्तसंयोगे द्वितीया । प्रमोद इत्यानन्दकार्यत्वेन मङ्गलवाद्यवादनादिरध्यवसीयते । **अस्त्येतन्निमित्तमिति** ॥ वाद्यगीतादिविरतौ सुग्रीवादिगमनं न प्रयोजकमिति भावः । किं पुनस्तदित्यत्राह— **अन्यच्चेति** ॥ **वसिष्ठाधिष्ठिताः** वसिष्ठेनाधिष्ठिताः । अत्र वसिष्ठशब्देन तदीयस्तपःप्रभावो लक्ष्यते । वसिष्ठेन स्वप्रभावमासु संक्रमय्य रक्षिता इति यावत् । किंनिमित्तं वा तदानीमासामाश्रमगमनमित्यत्राह— **यज्ञ इति** ॥ निमित्ते सप्तमी । ननु पतिदेवतानामन्येन सह देशान्तरगमनं न युक्तमित्यत्राह—**अरुन्धतीं पुरस्कृत्येति** ॥ **जामातुः** निजतनयापरिणेतुः । 'जामाता दुहितुः पतिः' इत्यमरः । **आश्रमं** कर्मायतनम् । **वैदेशिको** विदेशभवः । इतिर्हेतौ । **कःपुनर्जामातेति** ॥ पुनःशब्दो विशेषे । राममातॄणां दुहितरमेव न जानामि, किमुतास्याः परिणेतारमिति भावः । **अपत्यकृतिकामिति** ॥ अपत्यस्य कृतिः करणं यस्यां सा । तात्कालिकं विशेषणमेतत् । अनपत्याय रोमपादाय दशरथः स्वसुतां कृतकापत्यत्वेन दत्तवानित्यर्थः । संतानविरहिताः खलु तत्संपादनार्थमन्यस्य कन्यां पुत्रिकाकरणविधानेन प्रदातुर्निजतनयात्वेन स्वीकुर्वन्तीति समुदाचारः । पुत्रिकाकरणमिति च भ्रातृविरहितायाः कन्यकायाः प्रदाने तत्सुतं निजसुतं संपादयितुं विहितः सङ्कल्पविशेषः । तदुक्तम्—'अपुत्रोऽनेन विधिना सुतां कुर्वीत पुत्रिकाम् । अस्यां यो जायते पुत्रः स मे पुत्रो भवेदिति ॥ अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलंकृताम् । यदपत्यं भवेदस्यां तन्मम स्यात्स्वधाकरम् ॥' इति च । विभण्डकसुतशब्देन पितृकोपप्रसादनत्वेनास्य शान्तालाभ इति सूच्यते ।

---

१. राजर्षयश्च. २. दिवसान्. ३. कःपुनरसौ जामाता. ४. यां.

विभण्डकसुतस्तामृश्यशृङ्ग उपयेमे। तेन द्वादशवार्षिकं सत्रमारब्धम्। तदनुरोधात्कठोरगर्भामपि जानकीं विमुच्य गुरुजनस्तत्र गत इति।

**सूत्रधारः**—तत्किमनेन। एहि। राजद्वारमेव स्वजातिसमयेनोपतिष्ठावः।

**नटः**—तेन हि निरूपयतु राज्ञः सुपरिशुद्धामुपस्थानस्तोत्रपद्धतिं भावः।

**सूत्रधारः**—मारिष,

सर्वथा व्यवहर्तव्यं कुतो ह्यवचनीयता।
यथा स्त्रीणां तथा वाचां साधुत्वे दुर्जनो जनः॥ ५॥

---

ऋश्यश्रृङ्गशब्देन च राजकन्यालाभस्यान्यथासंभावनीयता। **तेन** ऋश्यशृङ्गेण। **द्वादशवार्षिकम्** द्वादशभिर्वर्षैः समापनीयम्। **तदनुरोधात्** सत्रानुरोधात्। ऋश्यश्रृङ्गानुरोधाद्वा। **कठोरगर्भाम्** प्रवृद्धगर्भाम्। कठिनवाचकेनात्र कठोरशब्देन वृद्धिर्लक्ष्यते। एकार्थसमवायः संबन्धः। शरीरसादादिप्रजनकत्वप्रतीतिः फलम्। अपिशब्दो विमोचनाशक्यतामाह। इतिशब्दस्यान्यच्चेति पूर्वेण संबन्धः। निमित्तमित्यनुषज्यते। **तत् किमनेनेति** कथितेन ज्ञातेन वा प्रयोजनमिति भावः। **स्वजातिसमयेन** आत्मीयजातिविहितेन समयेन। समयो मर्यादा आचार इति यावत्। **उपतिष्ठावः** गच्छावः। **तेन हीति**॥ यदि स्वजातिसमयेन गमनं तर्हीत्यर्थः। **निरूपयतु** हृदिस्थां कुरु। प्रयोगक्षमामुपपादयेति यावत्। **सुपरिशुद्धां** दोषलेशरहिताम्। सकलविद्वज्जनहृदयाह्लादकारिणीमिति यावत्। **उपस्थानस्तोत्रपद्धतिम्** उपस्थानं सेवनं, स्तोत्रं स्तुतिः, पद्धतिर्मार्गः संदर्भपरिपाटीति यावत्। नटेनोक्तमर्थमाक्षिपति—**सर्वथेति**॥ कुशीलवभूतैरस्माभिरीदृशेन खलु कर्मणा राजसेवा कर्तव्या। अतो यादृशी तादृशी वा भवतु इति भावः। ननु निरवद्यामेव वाचं विपश्चितो बहुमन्यन्त इत्यत्राह—**कुत इति**॥ हिरवधारणे। वचनीयरहिताऽवचनीया तद्भावोऽवचनीयता। उपस्थानस्तोत्रपद्धतेरिति विभक्तिविपरिणामेनानुषञ्जनीयम्। उक्तमर्थमुदाहरणेन योजयति—**यथेति**॥ वाचां साधुत्वे जनो दुर्जन इति संबन्धः। **वाचां** नूतनविरचितानां **साधुत्वे** निर्दोषत्वे दुष्टं पदं श्रुतिकटु च्युतसंस्कृत्यप्रयुक्तमसमर्थमित्याद्युक्तदोषराहित्य इत्यर्थः। **जनो** लोकः। नह्यत्र बुधाबुधविशेष इति भावः। **दुर्जनः** खलः। प्रयत्नपरिशोधितामपि वाचं दूषयेयुरेवेति भावः। अथात्र दुष्टो जनो दुर्जन इत्यवयवार्थत्वे पौनरुक्त्यदोषापत्तेः दुर्जनशब्दो रूढ्या खलवाचकः। यथा—'दाक्षिण्यं स्वजने

नटः—अतिदुर्जन इति वक्तव्यम्।

देव्यामपि हि वैदेह्यां सापवादो यतो जनः।
रक्षोगृहस्थितिर्मूलमग्निशुद्धौ त्वनिश्चयः॥ ६॥

सूत्रधारः—यदि पुनरियं किंवदन्ती महाराजं प्रति स्यन्देत ततः कष्टतरं स्यात्।

नटः—सर्वथा ऋषयो देवाश्च श्रेयो विधास्यन्ति। (इति परिक्रम्य) भो भोः, कदानीं महाराजः। (आकर्ण्य) एवं जनाः कथयन्ति—

स्नेहात्सभाजयितुमेत्य दिनान्यमूनि
नीत्वोत्सवेन जनकोऽद्य गतो विदेहान्।
देव्यास्ततो विमनसः परिसान्त्वनाय
धर्मासनाद्विशति वासगृहं नरेन्द्रः॥ ७॥ इति।

(इति निष्क्रान्तौ।)

इति प्रस्तावना।

---

दया परिजने शाठ्यं जने दुर्जने' इत्यादि। 'पिशुनो दुर्जनः खल' इत्यमरः। दौर्जन्यातिशयमुपपादयति—**देव्यामपीति**॥ देव्यामित्यनेन प्रशंसनीयता कथ्यते। अपिर्विरोधे। हिशब्दः प्रसिद्धौ। वैदेह्यामित्यनेन विनयातिशयो व्यज्यते। **सापवादः** अपवादसहितः। दोषवादीति यावत्। **जनः** निखिललोकः। अत्र हेतुमाह—लङ्कावृत्तान्तदूरत्वादिति॥ **अग्निशुद्धौ**॥ अनिश्चयो निश्चयरहित इति बहुव्रीहिः। तुशब्देनाग्निशुद्धिव्यतिरिक्ता लङ्कावृत्तान्ता व्यावर्त्यन्ते। अग्निशुद्धिविषय एव केवलं संदेहो नेतरेष्विति बलवती पुरोभागिता जनानामिति भावः। 'किंवदन्ती लोकवार्ता किंवदन्ती जनश्रुतिः' इत्यमरः। **महाराजं प्रति स्यन्देतेति**॥ महाराजस्य कर्णपथं यदि संश्रयेत। अनेन किंवदन्त्याः प्ररूढतया वक्तारं विनैव स्वयमेवावगमनं सूच्यते। **ततः कष्टतरं स्यादिति**॥ किं नामात्याहितं न संभाव्यते इति भावः। हेतुहेतुमतोरिति लिङ्। **इति परिक्रम्येति**॥ इत्युक्त्वा परिक्रम्येत्यर्थः। 'इति हेतुप्रकारस्वरूपसमाप्तिशब्दप्रसिद्धिमत्युक्तिविवक्षानियमादौ' इत्यव्ययसूत्रम्। **भो भो इति** राजपरिचारकान् प्रति संबोधनम्। **आकर्ण्येति**॥ प्रश्नोत्तरमित्यर्थात्। **एवमिति** वक्ष्यमाणम्। **जनाः** शुद्धान्तचारिण इत्यर्थात्। **स्नेहात्सभाजयितुमित्यादि**॥ जनको गतो

---

१. देव्या अपि हि वैदेह्याः. २. लङ्कावृत्तान्तदूरत्वादिति तृतीयपादपाठः य इख्यातृसंमतः. ३. कष्टं.

(ततः प्रविशत्युपविष्टो रामः सीता च।)

**रामः**—देवि वैदेहि, विश्वसिहि। त एव गुरवो न शक्नुवन्त्यस्मान् विहातुम्।

किंत्वनुष्ठाननित्यत्वं स्वातन्त्र्यमपकर्षति।
संकटा ह्याहिताग्नीनां प्रत्यवायैर्गृहस्थता॥ ८॥

---

विदेहानित्यनेन वैमनस्यस्य पितृवियोगजनितत्वाद्दुरपनोदता व्यज्यते। अद्येत्यनेन नूतनत्वं, देव्या इत्यनेन सकलमपि राजकार्यं परित्यज्य सीतावैमनस्यप्रशमन एवेदानीं महाराजस्य प्रवृत्तिरिति, विशतीति वर्तमानप्रत्ययेन वासगृहान्निष्क्रमणस्यातिविप्रकर्षाच्च तत्प्रतिपालनीयमिति। इतिशब्दस्य एवं जनाः कथयन्तीति पूर्वेण संबन्धः। ननु भारतीवृत्तेरङ्गत्वेनानिर्णीतं प्रस्तावनाख्यमत्र कस्याङ्गत्वेन निरदेशि इति चेदुच्यते—आमुखमेव हि निजाङ्गवीथ्यङ्गानां साकल्यवैकल्यप्रयुक्तस्वाकारभेदवशात् स्थापनेति प्रस्तावनेति च संज्ञान्तरं लभते। अतोऽत्र वक्रोक्त्या प्रस्तुताक्षेपिस्वकार्यप्रकटनाभावान्नामुखम्। आमुखाङ्गवीथ्यङ्गानां साकल्याभावान्न स्थापनापि। अपि तु प्रस्तावनैव। तदुक्तं—'द्वेधामुखं स्थापना प्रस्तावनेत्यपि भेदतः। सूत्रधारो नटीपारिपार्श्विकादिभिरालपन्॥ सर्ववीथ्यङ्गसंयुक्तान्यामुखाङ्गानि योजयेत्। आक्षिपन् प्रकृतं यत्र स्थापना सा निगद्यते॥ स्तोकामुखाङ्गवीथ्यङ्गा सैव प्रस्तावना मता॥' इति॥ इति प्रस्तावना॥ **तत इति**॥ प्रस्तावनान्ते सूत्रधारविनिर्गमनानन्तरमित्यर्थः। प्रवेशो नाम रङ्गे नेपथ्यादुपगम्यावस्थानम्। नटपरम्परया प्रवेशस्य प्रवाहनित्यत्वाद्वर्तमाननिर्देशः। आसीनस्यैव परिसान्त्वनौचित्यादुपवेशनम्। **त एवेति**॥ य एवास्मान् विहायेतः स्वनगरं प्रति प्रस्थिता इति सिध्यति। सीतापरिसान्त्वनवचनप्रक्रान्तजनकविषयत्वात्तच्छब्दस्य तत्तदवस्थापरिदृष्टस्नेहवैवश्यपरामर्शको वात्र तच्छब्दः। **न शक्नुवन्त्यस्मान् विहातुमिति**॥ स्वत एव तेषामस्मद्विरहो दुर्विषहः। किं पुनर्निजविश्लेषदुःखितां त्वां मनसि परिभावयताम्। अत ईदृशीं शोकविक्लबतां संत्यजेति भावः। यद्यस्मान् विहाय गुरवो गन्तुमसमर्थाः किमर्थं तर्हीदानीं प्रस्थिता इत्यत्राह— **किंत्विति**॥ **अनुष्ठाननित्यत्वं** नाम तत्तत्कर्मानुष्ठानानां सातत्यम्। **स्वातन्त्र्यं** स्वाच्छन्द्यम्, चिरकालमत्रावस्थानमिति यावत्। अपकर्षतीत्यनेन स्वातन्त्र्यस्य बलवत्तरत्वं व्यज्यते। सामान्येन विशेषं समर्थयति— **संकटा हीति**॥ आहिताग्नीनां गृहस्थता प्रत्यवायैः संकटा हि इत्यन्वयः। प्रत्यवायैः विहिताकरणसंभूतैः दुरितैः संकटा अनिर्वाह्या असिधाराव्रतसमानेति भावः। अयमत्राशयः। विहितकर्मणां काले तदनुष्ठानाशक्तिश्चेत् अग्निशरण एव तूष्णीमवस्थातव्यमिति। तथा चाहुः—'स्वकाले यदकुर्वंस्तु करोत्यन्यदचेतनः। प्रत्यवायोऽपि तेनैव नाभावेन स जन्यते॥

**सीता**—जाणामि अज्जउत्त, जाणामि । किंदु संदावआरिणो होन्ति[1] गुरुबन्धुविप्पओआ ।

जानामि आर्यपुत्र, जानामि । किंतु संतापकारिणो भवन्ति[2] गुरुबन्धुविप्रयोगाः ।

**रामः**—एवमेते[3] हि हृदयमर्मभिदः संसारभागाः । येभ्यो बीभत्समानाः संत्यज्य सर्वान्कामानरण्ये विश्राम्यन्ति मनीषिणः ।

(प्रविश्य)

**कञ्चुकी**—रामभद्र-(इत्यर्धोक्ते साशङ्कम् ।) महाराज—

**रामः**—(सस्मितम्) आर्य, ननु रामभद्र इत्येव मां प्रत्युपचारः शोभते तातपरिजनस्य । तद्यथाभ्यस्तमभिधीयताम् ।

**कञ्चुकी**—देव, ऋश्यशृङ्गाश्रमादष्टावक्रः संप्राप्तः ।

---

इति । अत्र गुरुबन्धुविप्रयोगा इति मातॄणामरुन्धत्याश्च गमनमप्यभिप्रेत्य कथितमिति द्रष्टव्यम् । एतच्च भाविनो विरहस्य बीजम् । **एवं** वियोगव्यथाजनकत्वेन । **एते** निखिलजनैरपि सुखबुद्ध्या संसेव्यमानाः । **हृदयमर्मभिदः** हृदयमेव मर्म ये भिन्दन्ति ते । अपायदर्शी स्नेह इति न्यायेनाविरहितानामपि हृदयवेदनादायिनः किमुत विरहितानामिति भावः । मर्मणो जीवितनिवासत्वात्तच्छेदे वेदनातिरेकात् तीव्रतरवेदनादायिन इत्यर्थः । तदुक्तं वाहटेन—'विषमं स्पन्दनं यत्र पीडिते रुक् च मर्म तत् । मांसास्थिस्नायुधमनीसिरासन्धिसमागमः ॥ स मर्मेति च तेनात्र नितरां जीवितं स्थितम् ॥' इति । **संसारभागाः** संसारभेदाः । इह संसारशब्देनायुरेवेदमित्यादिवत् साध्यवसानया लक्षणया संसृतिकारणान्यर्थपुत्रकलत्रमित्रादयो विषयाः कथ्यन्ते । **येभ्यः** उक्तरूपेभ्यः । **बीभत्समानाः** जुगुप्समानाः । जुगुप्सार्थयोगात् जुगुप्साविरामप्रमादार्थानामुपसंख्यानमिति पञ्चमी । **सर्वान् कामानिति** ॥ पुत्रादिविषयान् स्नेहानित्यर्थः । अत्र स्त्रीपुंसयोरितरेतरस्नेहवाचकेन कामशब्देन दुस्त्यजताप्रतीतिप्रयोजनया लक्षणया स्नेहसामान्यमभिधीयते । तदुक्तम्—'स्त्रीषु जातो नराणां वा स्त्रीणां वा पुरुषाश्रयः । अबान्धवकृतस्नेहः काम इत्यभिधीयते ॥' इति । **मनीषिणः** विवेकिनः । **विश्राम्यन्ति** निर्वृता भवन्ति । **साशङ्कमिति** ॥ आचारलङ्घनाच्छङ्का । तद्व्याकुलतादर्शनात् स्मितम् । ननु इति अनुनये । **यथाभ्यस्तमिति** ॥ अभ्यासः पौनःपुन्यं तमनतिक्रम्येत्यर्थः । यथापरिचितमिति यावत् । नमस्ते अपि

---

१. बन्धुजणविप्पओआ होन्ति. २. बन्धुजनविप्रयोगा भवन्ति. ३. एवमेतत् । एते हि हृदयमर्मच्छिदः संसारभागाः ।.

**सीता**— किं विलम्बीअदि । किं विलम्ब्यते ।

**रामः**—त्वरितं प्रवेशय ।

(कञ्चुकी निष्क्रान्तः । प्रविश्य)

**अष्टावक्रः**—स्वस्ति वाम् ।

**रामः**—भगवन् , अभिवादये । इत आस्यताम् ।

**सीता**—भअवं, णमो दे । अवि कुसलं मे सजामातुअस्स गुरुअणस्स अज्जाए सन्ताए अ ।

भगवन् , नमस्ते । अपि कुशलं मे सजामातृकस्य गुरुजनस्यार्यायाः शान्तायाश्च ।

**रामः**—निर्विघ्नसोमपीथी भावुको मे भगवानृश्यश्रृङ्गः, आर्या च शान्ता ।

**सीता**—अम्हे वा सुमरेदि । अस्मान्वा स्मरति ।

**अष्टावक्रः**—(उपविश्य) अथ किम् । देवि, कुलगुरुर्भगवान्वसिष्ठस्त्वामिदमाह—

विश्वंभरा भगवती भवतीमसूत
राजा प्रजापतिसमो जनकः पिता ते ।
तेषां वधूस्त्वमसि नन्दिनि पार्थिवानां
येषां कुलेषु सविता च गुरुर्वयं च ॥ ९ ॥

---

कुशलं मे सजामातृकस्य गुरुजनस्य । अपिशब्दः प्रश्ने । **निर्विघ्नसोमपीथीति** ॥ विघ्नं विनैव सोमपीथी किमु जात इति काकुः । 'सोमपीथी तु सोमपः' इत्यमरः । भगिन्याः पतिर्भावुकः । भातेर्वुक्चेत्यौणादिक उकञ् वुगागमश्च । भावुको भगिनीपतिरिति दण्डनाथः । शान्ताया ज्यायसीत्वादार्येत्युक्तिः । चकारेण सोमपीथिनीभावः समुच्चीयते । अत्र शान्तायाः सोमपानाभावेऽपि पत्नीमन्तरेण यजमानस्य तदसंभवात् यज्ञसंयोगमात्रेण तत्कर्तृत्वमुपचर्यते । **अस्मान्वा स्मरति** । विकल्पार्थोऽत्र वाशब्दः प्रश्ने पर्यवस्यति । गुरुजन इति विभक्तिपरिणामेन पूर्ववाक्यादनुषञ्जनीयम् । अथकिमित्यनुवादे । अथानूदितमनुस्मरणं गुरुजनसंदेशकथनेन द्रढयति—**देवीत्यादिना** ॥ विश्वंभरा भगवती भवतीमसूतेत्यनेन बैजिकगार्भिकाद्येनोराहित्यं कथ्यते । जनकः पितेत्यनेन शिक्षारक्षणजानित-

---

१. अम्हे वि सुमरेदि । अस्मानपि स्मरति ।

तत्किमन्यदाशास्महे। केवलं वीरप्रसवा भूयाः।

रामः—अनुगृहीताः स्मः।

लौकिकानां हि साधूनामर्थं वागनुवर्तते।
ऋषीणां पुनराद्यानां वाचमर्थोऽनुवर्तते ॥ १० ॥

अष्टावक्रः—इदं च भगवत्यारुन्धत्या देवीभिः शान्तया च भूयो भूयः संदिष्टम्। देव्याः सीताया यदि किंचिद्गर्भदौहृदं भवति तदवश्यमचिरान्मानयितव्येति।

रामः—क्रियते यद्येषा कथयति।

---

संस्कारशालित्वम्। तेषां दिलीपप्रभृतीनां **वधूः** पुत्रभार्या। **नन्दिनि** अवश्यमेव हर्षयित्रि। निरुपपदत्वादावश्यकाधमर्ण्ययोरित्यादिना णिनिः। **पार्थिवानां** राज्ञाम्। **सविता च गुरुर्वयं चेति** ॥ उत्पादकत्वेन सवितुर्गुरुत्वम् ब्रह्मदातृत्वेन च वसिष्ठस्य। उक्तं च मनुना—'उत्पादकब्रह्मदात्रोर्गरीयान् ब्रह्मदः पिता' इति। किंशब्दः क्षेपे। **अन्यत्** वक्ष्यमाणादितरत् **आशास्महे** प्रार्थयामहे। **वीरप्रसवेति** ॥ वीरोऽध्यवसायान्तगामी प्रसवः सुतो यस्याः सा। वीरोऽभिलषितकर्मण्यपि दृश्यते। **लौकिकानां** तत्तत्प्रमाणवशादनागतार्थवेदिनां ज्यौतिषिकादीनामित्यर्थः। **साधूनाम्** अव्यभिचरितार्थवाचाम् **अर्थं** विवक्षितं वस्तु **वाक्** अभिधानलक्षणा **अनुवर्तते** यथावस्थिताकारमभिधत्त इत्यर्थः। **ऋषीणां** श्रुतिदर्शिनाम्। पुनःशब्दो विशेषे। **आर्याणां** प्रार्थनां विनैवानुग्रहपराणां **वाचं** स्वतन्त्रप्रवृत्तामपि **अर्थः** अभिधेयः **अनुवर्तते** अभिहिताकारतां भजते। **इदं** वक्ष्यमाणमेकमेव। **भूयो भूय इति** ॥ सकृत्संदिष्टमेव वात्सल्यातिशयवशात् पुनः पुनः संदिष्टमित्यर्थः। यदीत्यनेन दौहृदोद्भवस्य नियमाभावो व्यज्यते। किंचिदित्यनेन निखिलोपभोगेष्वपि इदानीमरतिबाहुल्यात् श्रद्धाविषयस्य विरलत्वम्, अवश्यमित्यनेन गर्भरक्षानिमित्तत्वान्न तत्रोदासितव्यमिति, अचिरादित्यनेन स्पृहाया उद्रेकात् कालहरणाक्षमता, मानयितव्येत्यनेन रुचिरवस्तुनः क्षुद्रत्वेन न निन्दनीयमिति। तथाच वाहटः—'मातृजं ह्यस्य हृदयं मातुश्च हृदयेन तत्। संबद्धं तेन गर्भिण्या नेष्टं श्रद्धाविमाननम् ॥ देयमप्यहितं तस्यै हितोपहितमल्पकम्। श्रद्धाविघाताद्गर्भस्य विकृतिश्च्युतिरेव वा ॥' इति। ब्रह्माण्डपुराणेऽपि—'बहून्मनोरथान् काले गर्भिणी कुरुते तदा। नारी मनोरथालाभाद्वैरूप्यं रोगमेव च ॥ अवाप्नोति ततस्तस्याः प्रियं कार्यं प्रयत्नतः ॥' इति। अत्र दौहृदशब्देनैव विवक्षितार्थलाभेऽपि गर्भदौहृदमित्युक्तेः गर्भविकाराणां प्रतिक्षणहृद्यत्वा-

---

१. पुनराद्यानां २. नुधावति

**अष्टावक्रः**—ननान्दुः पत्या च देव्याः संदिष्टम्—'वत्से कठोरगर्भेति नानीतासि। वत्सोऽपि रामभद्रस्त्वद्विनोदार्थमेव स्थापितः। तत्पुत्रपूर्णोत्सङ्गामायुष्मतीं द्रक्ष्याम' इति।

**रामः**—(सौत्सुक्यस्मितम्) तथास्तु। भगवता वसिष्ठेन न किंचिदादिष्टोऽस्मि।

**अष्टावक्रः**—श्रूयताम्।

जामातृयज्ञेन वयं निरुद्धा-
स्त्वं बाल एवासि नवं च राज्यम्।
युक्तः प्रजानामनुरञ्जने स्याः
स्वस्माद्यशो यत्परमं धनं वः॥ ११॥

---

तद्दर्शनलाळनादावरुन्धत्यादीनामौत्सुक्यातिशयो व्यज्यते। **ननान्दा** भर्तुः स्वसा। 'ननान्दा तु स्वसा पत्युः' इत्यमरः। **पुत्रपूर्णोत्सङ्गां** पुत्रेण पूर्णः कांक्षितलाभसुभगः उत्सङ्गो यस्याः ताम्। निजाङ्कपरिलाळितशुभतनयामिति यावत्। पुत्राभ्यां पूर्णौ पुष्टशोभावुत्सङ्गौ यस्या इति भाव्यपत्यद्वयजननमर्थशक्त्या स्फुरति। पुत्रजन्मनोऽनिश्चितत्वादौत्सुक्यं, ऋश्यशृङ्गवचनचातुर्यानुसंधानात् स्मितम्। पुनःशब्दो विशेषे। न किं इत्यत्र नञः शिरसि काकुः। **जामातृयज्ञेनेति**॥ ऋश्यशृङ्गसत्रेणेत्यर्थः। कर्तरि तृतीया। **निरुद्धाः** ऋत्विक्त्वेन वरणात्त्वन्निकटवर्तनाक्षमा जाता इत्यर्थः। ततः किमित्यत्राह—**त्वं बाल एवेति**॥ अनवगतशास्त्रार्थ एवेत्यर्थः। ननु भगवन्मुखादेव विदितसकलशास्त्रार्थत्वे कथं मम बालत्वमिति चेत् सत्यं; विदितसकलशास्त्रार्थत्वेऽपि तत्तत्कार्येषु तत्तत्कालेषु च परिचयाभावेन स्फूर्त्यभावात् प्रयोगाक्षमतया फलतो बाल एवासीत्यर्थः। तदुक्तं भारविणा—'विषमोऽपि विगाह्यते नयः कृततीर्थः पयसामिवाशयः। स तु तत्र विशेषदुर्लभः सदुपन्यस्यति कृत्यवर्त्म यः॥' इति। अस्यैवार्थ उत्तानबुद्धिना माघेन स्फुटीकृतः त्रिसर्ग्याम्—'षण्नयाः शक्तयस्तिस्रः सिद्धयश्चोदयास्त्रयः। ग्रन्थानधीत्य व्याहर्तुमतिदुर्मेधसोऽप्यलम्॥' इति। ननु प्रमादादीषत्स्खलनेऽपि 'न कश्चिन्नापनयते पुमानन्यत्र भार्गवात्' इति न्यायेन स्खलनसंभवादभियुक्तेन मनसा प्रतिविधातव्यमित्यत्राह—**नवं च राज्यमिति**॥ नवमचिरप्रतिष्ठितम्। नवं हि राज्यमीषत्स्खलनेऽपि शत्रुसाद्भूतमेव भवेदिति भावः। न कश्चिन्नापनयत इत्यादिकं तु लब्धप्रशमनकविषयम्। ननु नवलब्धराज्यनृपविषयमित्यवसेयम् कथं तर्हीदानीमस्माभिरवस्थातव्यमित्यत्राह—**युक्त इति**॥ **युक्तः** तत्परः। **प्रजानां** उत्कृष्टानां निकृष्टानां च **अनुरञ्जने** समावर्जने। येन वा निखि-

**रामः**—यथा समादिशति भगवान्मैत्रावरुणिः।

**स्नेहं दयां च सौख्यं च यदि वा जानकीमपि।**
**आराधनाय लोकस्य मुञ्चतो नास्ति मे व्यथा॥ १२॥**

**सीता**—अदो जेव्व राहवधुरंधरो अज्जउत्तो।

अत एव राघवधुरंधर आर्यपुत्रः।

**रामः**—कः कोऽत्र भोः। विश्राम्यतामष्टावक्रः।

**अष्टावक्रः**—(उत्थाय परिक्रम्य च) अये, कुमारलक्ष्मणः प्राप्तः।

(इति निष्क्रान्तः।)

---

लजनपरितोषो जायते तदेव सर्वावस्थेनापि त्वया करणीयमित्यर्थः। अत्र सामान्येन विशेषं समर्थयति—**स्वस्मादिति**॥ **स्वस्मात्** सर्वेभ्योऽपि प्रेयस्तमादात्मनः। विभक्ते पञ्चमी। **यशः** ख्यातिः **यत्** यस्मात् **परमम्** उत्कृष्टं **धनं** संरक्षणीयं वस्तु **वः** इक्ष्वाकुकुलजातानाम्। अत्र प्रधानभूतप्रजारञ्जनाभियोगानुशासने जामातृयज्ञनिरोधस्यैकस्यैव हेतुत्वेऽपि बालत्वादीनामपि तत्त्वेनोपादानात् समुच्चयोऽलंकारः। स च सामान्यकथनाद्विशेषसमर्थनरूपेणार्थान्तरन्यासेनानुगृहीतः समुत्तिष्ठतीति संकरः। तयोश्च लक्षणमुक्तं काव्यप्रकाशकृता—'तत्सिद्धिहेतावेकस्मिन्यत्रान्यत्तत्करं भवेत्। समुच्चयोऽसौ' इति। 'सामान्यं वा विशेषो वा तदन्येन समर्थ्यते। यत्र सोऽर्थान्तरन्यासः साधर्म्येणेतरेण वा॥' इति च॥ **यथा मैत्रावरुणिः संदिशतीति**॥ तथैव करोमीति शेषः। एवं वसिष्ठसंदिष्टमनूद्य लोकेच्छानुवर्तने च निजाभिसन्धिमाह—**स्नेहमित्यादिना**॥ स्नेहमिति विषयविषयिणोरभेदोपचारात् भ्रातॄननुसंधायोक्तं, दयामित्याश्रितान्। अयं भावः— यद्यप्यस्मदीयेषु भ्रात्रादिषु कश्चित् कदाचिल्लोककण्टको जायेत तदा तमपि परित्यजेयमिति। **सौख्यमिति** जनपदक्लेशेन लभ्यानि निजशरीरसुखहेतुभूतानि राजसमुचितानि द्रव्याण्यनुसंधाय कथितम्। यदिवेत्यनेन स्नेहदयादिविषयतया जानक्या इतरेभ्यो दुस्त्यजता द्योत्यते। अत्र प्रदेशवर्तिन्येका मोचनक्रिया बहुभिः स्नेहदयादिरूपैः कारकैः सह संबन्धप्रतीतिकरणात्मिकां दीप्तिं करोतीति दीपकमलंकारः। तदुक्तम्—'सकृद्वृत्तिस्तु धर्मस्य प्रकृताप्रकृतात्मनाम्। सैव क्रियासु बह्वीषु कारकस्येति दीपकम्॥' इति। अत एव राघवधुरंधर आर्यपुत्रः। **अत एव** स्नेहं दयां चेत्याद्युक्तविधानेनैव **राघवधुरंधरः** राघवाणां धुरंधरः स्वकुलविहिताचरणबहुमत इत्यर्थः। **कोऽत्रेति**॥ अत्र दूरदेशादागतस्याष्टावक्रस्य विश्रामणत्वरया द्विर्वचनम्। **विश्राम्यतामिति**॥ तत्तदुपचारैरध्वक्लमापनोदः कारयितव्य इत्यर्थः। **अये इति**॥ लक्ष्मणदर्शनजनितसंभ्रमानुभावः। इतिशब्द उक्तौ।

(प्रविश्य)

**लक्ष्मणः**—जयत्वार्यः। आर्य, अर्जुनेन चित्रकरेणास्मदुपदिष्टमार्यस्य चरितमस्यां वीथिकायामभिलिखितम्। तत्पश्यत्वार्यः।

**रामः**—जानासि वत्स, दुर्मनायमानां देवीं विनोदयितुम्। तत्कियदवधि।

**लक्ष्मणः**—यावदार्याया हुताशनविशुद्धिः।

**रामः**—(ससान्त्वनम्) शान्तं पापम्।

उत्पत्तिपरिपूतायाः किमस्याः पावनान्तरैः।
तीर्थोदकं च वह्निश्च नान्यतः शुद्धिमर्हतः॥ १३॥

देवि देवयजनसंभवे, प्रसीद मयि। एष ते जीवितावधिः प्रणामः।

---

**चित्रकरेणेति**॥ दिवाविभेत्यादिना टः। अर्जुन इति तस्य संज्ञा। नामग्रहणेनास्य दृष्टचरत्वमनुस्मारयति। अस्मदुपदिष्टमित्यनेन चरितस्य याथातथ्यं व्यज्यते। अस्यां वीथिकायामित्यनेन स्वविज्ञाननैपुणप्रकाशनाय चित्रकरेण विलिखिततत्तन्महापुरुषचरिता बह्वयोऽपि वीथिकाः सन्तीति। वीथिका पंक्तिः। 'वीथ्यालिरावलिः पंक्तिः' इत्यमरः। **जानासि** अभिज्ञोऽसि। **दुर्मनायमानाम्** दुःखिताम्। भृशादित्वात् भवत्यर्थे क्यङ्। **कियदवधीति**॥ चरितमित्यनुषज्यते। लिखितावधिमाह—**यावदिति**॥ हुताशनविशुद्धिरिति मध्यमपदलोपी समासः। **ससान्त्वनम्** सानुनयम्। **शान्तम्** शमम् एतु। आशंसायां भूतवच्चेति क्तः। स्वत एव शुद्धायाः किमर्थं हुताशनेन शुद्धिरिति भावः। उक्तमेवार्थं सोपपत्तिकं प्रसाधयति—**उत्पत्तिपरिपूताया इति**॥ अस्याः पावनान्तरैः किमित्यन्वयः। **अस्याः** पुण्यशीलायाः **पावनान्तरैः** लाङ्गलमार्गोत्पत्तिव्यतिरिक्तैः। किंशब्दः क्षेपे। मा नाम विशुद्धिसाधकमन्यत् किञ्चिदन्विष्यतामिति भावः। उक्तमेवार्थमुपपादयति—**तीर्थोदकं चेति**॥ अत्र पूर्वोत्तरयोर्निरपेक्षयोरेव वाक्यार्थयोर्बिम्बप्रतिबिम्बभावकरणाद्दृष्टान्तालंकारः। तदुक्तम्—'दृष्टान्तः पुनरेतेषां सर्वेषां प्रतिबिम्बनम्' इति। 'प्रतिवस्तूपमा हि सा। सामान्यस्य द्विरेकस्य यत्र वाक्यद्वये स्थितिः' इति च। अथ लक्ष्मणवचनप्रसक्तमपरिहार्यतयाऽपतितं स्वापराधमुपशमयितुमारभते—**देवीति**॥ **प्रसीद मयि** प्रार्थनायां लोट्। अपत्रपां परित्यज्य सर्वात्मना विरचितः **ते** अवज्ञातोत्कर्षविलसितायाः। कर्मणि षष्ठी। **जीवितावधिरिति**॥ जीवितमस्मिन्नवधीयते निधीयत इत्यर्थः। अस्मज्जीवितालम्बनहेतुरिति यावत्। 'उपसर्गे घोः किः' इति किः। जीवितमेवावधिरवसानं यस्येति

कष्टो जनः कुलधनैरनुरञ्जनीय-
स्तस्माद्यदुक्तमशिवं न हि तत्क्षमं ते ।
नैसर्गिकी सुरभिणः कुसुमस्य सिद्धा
मूर्ध्नि स्थितिर्न चरणैरवताडनानि ॥ १४ ॥

वा समासः । आवयोर्जीवितं यावत् तावत्कालं त्वदनुसरणाय पर्याप्तोऽयं प्रणाम इति भावः । किमर्थं तर्हि हुताशनप्रवेशं कारितवानित्यत्राह—**कष्ट इत्यादि** ॥ कुलधनैः कष्टो जनः अनुरञ्जनीय इत्यन्वयः । **कुलधनैः** कुलमेव धनं निखिलापायेभ्यो रक्षणीयं येषां तैः । **कष्टो** दुष्टः । विशुद्धेऽपि वस्तुनि दोषारोपणशील इत्यर्थः । कृच्छ्रोपचरणीय इति यावत् । **अनुरञ्जनीयः** अवश्यमेवानुरञ्जयितुमुचितः । नतु सज्जन एवेति यावत् । **तस्मात्** उक्तादेव हेतोः । **उक्तं** मयेति शेषः । **अशिवम्** अमङ्गलं ते अग्निप्रवेशरूपं **ते** उत्पत्तिपरिपूतायाः **नहि क्षमम्** अयोग्यमेव । हिशब्दोऽवधारणे । 'हि हेताववधारणे' इत्यमरः । एतदेव द्रढयति—**नैसर्गिकीत्यादिना** ॥ **सुरभिणः** सौरभ्यवतः । **कुसुमस्य** नवमालिकादेः । **मूर्ध्नि** उत्तमाङ्गे । **स्थितिः** नियमेनावस्थानम् । **नैसर्गिकी** निरुपाधिका । **सिद्धा** प्रसिद्धा । सकलजनसंमतेत्यर्थः । **चरणैरवताडनानीति** ॥ शिरसा समुद्वहनीयं दिव्यकुसुमं को नाम पादाहननोचितोद्देशे प्रक्षिपेत्, न कोऽपीत्यर्थः । मुसलैरवताडनानीति वा पाठः । मुसलावहननैर्न कुसुमानि परिशोधनीयानीत्यर्थः । अतोऽनुचितकरणजनितमपराधं परिलघयितुमयं प्रणाम इति संबन्धः । अत्र सीताकुसुमयोर्गुणातिशयसौरभ्ययोः स्वीकरणमौलिस्थापनयोरशिवचरणावताडनयोश्च मिथो बिम्बप्रतिबिम्बभावकरणात् दृष्टान्तः । नन्वत्र धर्मन्यूनता दोषः प्रतिबिम्बितानां स्वस्वप्रतियोगिबिम्बानुपादानात् इति चेन्नैवम् दृष्टान्ते तन्नियमाभावात् । अत एव हि 'दृष्टान्तः पुनरेतेषां सर्वेषां प्रतिबिम्बनम्' इत्युक्तं काव्यप्रकाशकारैः । उपमेयगतानां च सर्वेषां धर्माणां प्रतिबिम्बतयोपमानधर्माणां निर्देश एव हि जीवितं दृष्टान्तस्य । तथा चाहुः—'इष्टस्यार्थस्य विस्पष्टप्रतिबिम्बनिदर्शनम् । यथेवादिपदैः शून्यं बुधैर्दृष्टान्त उच्यते ॥' इति । प्रतिबिम्बितधर्मसामर्थ्यादेव बिम्बभूतधर्मप्रतीतेः नात्र श्रवणसमये धीमतामुद्वेगः । विद्वदुद्वेगकारितयैव हि दोषाणां दोषता । तथा चाभियुक्तवचनम्—'यत्रोद्वेगो न धीमताम्' इति । किंच वाक्यार्थोपमायामेव हि धर्मन्यूनताया दोषत्वमुक्तमालंकारिकैः । तत्राप्युपमेयधर्माणामुपमानेऽनुपादानमेव दोषः न तूपमानधर्माणामुपमेये । यथा 'स

१. क्लिष्टो जनः किल जनैरनुरञ्जनीयस्तन्नो यदुक्तमशुभं च न तत्क्षमं ते ।
२. मुसलैरवताडनानि.

सीता—अज्जउत्त, होदु । पेक्खह्म दे चरितम् ।

आर्यपुत्र, भवतु । पश्यावस्ते चरितम् ।

(इत्युत्थाय परिक्रामति ।)

लक्ष्मणः—इदं तदालेख्यम् ।

सीता—(निर्वर्ण्य) के दाणिं एदे उवरिणिरन्तरट्ठिदा उवत्थुवन्दि विअ अज्जउत्तम् ।

क एते उपरिनिरन्तरस्थिता उपस्तुवन्तीवार्यपुत्रम् ।

लक्ष्मणः—देवि, एतानि तानि सरहस्यानि जृम्भकास्त्राणि । यानि भगवतः कृशाश्वात्[1] कौशिकमृषिं विश्वस्य मित्रं विश्वामित्रमुपसंक्रान्तानि । तेन च ताटकावधे प्रसादीकृतान्यार्यस्य ।

---

मुनिर्लाञ्छितो मौञ्ज्या कृष्णाजिनपटं वहन् । शुशुभे नीलजीमूतभागाश्लिष्ट इवांशुमान् ॥' इति । अत्रोपमेयवाक्यगतयोर्मौञ्जीकृष्णाजिनपटयोर्मौञ्ज्याः प्रतिबिम्बतयोपमानवाक्ये कस्यापि धर्मस्योपादानं न कृतमिति धर्मन्यूनता भवतु । आर्यपुत्र भवतु पश्यावस्ते चरितम् । **भवत्विति** ॥ निर्दोषे अस्मिन्वस्तुन्यार्यपुत्रस्य न दोषलेशोऽपीत्यर्थः । 'भवत्वान्तरसंवादे निर्दोषे स्मरणेऽपि च' इति यादवः । **ते चरितमिति** ॥ चिरातीतस्यापीदानीं प्रत्यक्षीकर्तुं शक्यत्वाच्चित्रदर्शने ममेदानीं नितरामादरः । अतो विरम्यतामीदृशादिति भावः । **इदं तदालेख्यमिति** ॥ दृश्यतामिति शेषः । क इदानीमेते उपरिनिरन्तरस्थिता उपस्तुवन्तीवार्यपुत्रम् । किंशब्दः प्रश्ने । **इदानीम्** कौशिकानुगमने । एत इत्याभिनीयोक्तिः । **उपरि** ऊर्ध्वभागे **निरन्तरस्थिता** अहमहमिकया निबिडितावकाशं स्थिताः । **उपस्तुवन्ति** सेवन्ते । इवशब्दो वाक्यालंकारे । **एतानि** चित्रपरिदृश्यमानानि । **तानि तानि** प्रसिद्धानि । **सरहस्यानि** मुष्टिप्रयोगसंहारादिरहस्ययुक्तानि **जृम्भकास्त्राणि** जृम्भकनामधेयान्यस्त्राणि परसैन्यविनाशकत्वान्निरूढजृम्भकनामधेयानि । 'जृभि विनाशने' इत्यस्मात् कर्तरि ण्वुल् । **कृशाश्वात्** परिचरणपरितोषितात् कृशाश्वमुनेरित्यर्थः । **कौशिकम्** कुशिकपुत्रम् । अनेन निखिलशस्त्रविद्यापारगतया जृम्भकास्त्राणामस्मिन्नुपसंक्रमणौचित्यं व्यज्यते । **ऋषिं** तपोबलयुक्तम् । **विश्वस्य मित्रम्** जगदनुग्रहपरं **विश्वामित्रम्** लोकानुग्रहपरतयैव निरूढनामधेयम् । 'मित्रे चर्षौ' इति दीर्घः । **उपसंक्रान्तानि** आभिगामिकगुणयोगात् स्वयमेवाश्रितानि । **ताटकावध इति** निमित्ते सप्तमी । **प्रसादीकृतानि** दत्तानि । वन्दस्वेति

---

१. भृशाश्वात्

**रामः**—वन्दस्व देवि, दिव्यान्यस्त्राणि ।

**ब्रह्मादयो ब्रह्महिताय तप्त्वा परःसहस्रं शरदस्तपांसि ।**
**एतान्यदर्शन्गुरवः पुराणाः स्वान्येव तेजांसि तपोमयानि ॥**

**सीता**—णमो एदाणम् । नम एतेभ्यः ।

**रामः**—सर्वथैतानि त्वत्प्रसवमुपस्थास्यन्ति ।

**सीता**—अणुगहीदह्मि । अनुगृहीतास्मि ।

**लक्ष्मणः**—एष मिथिलावृत्तान्तः ।

**सीता**—अह्महे, दलन्तणवणीलुप्पलसामलसिणिद्धमासिणमंसलेन देहसोहग्गेण विह्मअत्थिमिदतादद्दीसन्तसोम्मसुन्दरसिरी अणादरखंडिदसंकरसरासणो सिहण्डमुद्धमण्डणो अज्जउत्तो अहिलिहिदो ।

अहो, दलन्नवनीलोत्पलश्यामलस्निग्धमसृणमांसलेन देहसौभाग्येन विस्मयस्तिमिततातदृश्यमानसौम्यसौन्दर्यश्रीरनादरखण्डितशंकरशरासनः शिखण्डमुग्धमण्डन आर्यपुत्रोऽभिलिखितः ।

---

विधौ लोट् । महत् खलु शुभमेतद्वन्दनात्तव संपत्स्यत इति भावः । हेतुमाह—**दिव्यानीति** ॥ दिव्यत्वमेव सोपपत्तिकं प्रसाधयति—**ब्रह्मादय इत्यादिना** ॥ **ब्रह्महिताय** ब्रह्मेति वेदः, तद्धितं कर्तुम् । ब्रह्मशब्देनात्र वेदविहिता धर्मा लक्ष्यन्ते । ब्राह्मणहितमुपपादयितुमिति वा । **स्वान्येव तेजांसीति** ॥ अत्युत्कटकृतैस्तपोविशेषैरुपचितान्यात्मसमवेतान्येव तेजांसि जगदनुग्रहार्थमस्त्रात्मकतया परिणतानि दृष्टवन्त इत्यर्थः । **परस्सहस्रमिति** ॥ परं साधिकं सहस्रं परस्सहस्रम् । राजदन्तादित्वात् परनिपातः । पारस्करादित्वात् सुट् । **तपोमयानि** तपसः कारणादागतानि । 'तत आगत इत्यस्मिन्नर्थे मयट् च' इति मयट् । नम एतेभ्यः । **एतानि** अस्त्राणि । **त्वत्प्रसवम्** त्वत्सुतम् **उपस्थास्यन्ति** समनुसरिष्यन्ति । अनुगृहीतास्मि । **मिथिलावृत्तान्त इति** ॥ मिथिलागमनजनकदर्शनधनुर्भङ्गसीतापरिणयनादिक इत्यर्थः । अम्मह इत्याश्चर्यदर्शनजनिते हर्षे । दलन्नवनीलोत्पलश्यामलस्निग्धमसृणमांसलेन देहसौभाग्येन विस्मयस्तिमिततातदृश्यमानसौम्यसौन्दर्यश्रीः अनादरखण्डितशङ्करशरासनः शिखण्डमुग्धमण्डन आर्यपुत्रोऽभिलिखितः । दलद्भिः विकसद्भिः नवैः सद्य आहृतैः नीलोत्पलैर्निबद्धा मालेव स्निग्धेन श्लक्ष्णेन मसृणेन मृदुना मांसलेन परिपुष्टेन देहसौभाग्येनोपलक्षितः । हेतौ वा तृतीया । विस्मयस्तिमितेन कौतुकनिश्चलेन

**लक्ष्मणः**—आर्ये, पश्य पश्य।

**संबन्धिनो वसिष्ठादीनेष तातस्तवार्चति।**
**गौतमश्च शतानन्दो जनकानां पुरोहितः॥ १६॥**

**रामः**—सुश्लिष्टमेतत्।

**जनकानां रघूणां च संबन्धः कस्य न प्रियः।**
**यत्र दाता ग्रहीता च स्वयं कुशिकनन्दनः॥ १७॥**

**सीता**—एदे क्खु तक्कालकिदगोदाणमङ्गला चत्तारो भादरो। किदकोदुअमङ्गला बिआहदिक्खिदा तुह्मे। अह्मो जाणामि तस्सिं जेव्व पदेसे तस्सिं जेव्व काले वत्तामि।

---

तातेन दृश्यमाना सौम्याऽनूष्मला सौन्दर्यश्रीर्यस्य सः। **अनादरखण्डितशंकरशरासनः** अनादरेणावज्ञयैव खण्डितं शंकरशरासनं येन सः। पर्युदासे नञ्। **शिखण्डमुग्धमण्डन इति**॥ शिखण्डः शिखैव मुग्धं मनोज्ञं मण्डनं यस्य सः। 'शिखा चूडा शिखण्डस्तु' इत्यमरः। **संबन्धिनः** श्लाघ्यसंबन्धान्। प्रशंसायां मत्वर्थीयः। **वसिष्ठादीन्** विवाहोत्सवप्रीत्या समागतानित्यर्थः। **अर्चति** प्रीणयति। अत्रार्चतीति चौरादिकादर्चतेराधृषाद्वेति णिज्विकल्पात्। अथ दर्शनीयतया लेखनीयानि बहून्यपि सीतास्वयंवरानुबन्धीनि मिथिलावृत्तान्तान्यनादृत्य तत्सारभूतमिति लिखितं किञ्चिदवलोक्य सामोदमाह—**सुश्लिष्टमिति**॥ सुतरां श्लिष्टं सुश्लिष्टम्। एतल्लिखितं वसिष्ठादिसमर्चनम् अवश्यविलेखनीयमत्रालिखितमिति यावत्। चित्रविलेखने लक्ष्मणोपदेशचातुर्यश्लाघावचनं चैतत्। श्लिष्टतामेव प्रतिपादयति—**जनकानामित्यादिना**॥ जनकानां रघूणां चेत्यनेनाऽभिजात्यादितुल्यतया समैर्विवाहो मैत्री चेत्याद्युक्तमर्थमनुस्मारयति। **संबन्धः** यौनसंबन्धः। कस्य न प्रिय इत्यनेन सकललोकसंमते सत्यस्मिन् संबन्धे किमुत जनकशतानन्दयोरिति व्यज्यते। उक्तेऽर्थे हेतुमाह—**यत्रेति**॥ यत्र संबन्धे **दाता** कन्याप्रदाता जनकवंशधुरन्धर इत्यर्थः। **ग्रहीता** आदाता रघुकुलयोगक्षेमकर्ता इत्यर्थः। चकार एकस्मिन्नर्थे मिथो विरुद्धौ धर्मौ समुचिन्वन् संबन्धस्य प्रीतिकारित्वातिशयमवगमयति। **स्वयमिति**॥ अप्रार्थितोऽपीत्यर्थः। कुशिकनन्दन इत्यनेन रागादिराहित्यं व्यज्यते। अत्र पूर्वोत्तरयोर्वाक्यार्थयोर्हेतुहेतुमद्भावात् काव्यलिङ्गमलंकारः। स च विरोधानुप्राणित इति संकरः। तदुक्तम्—'काव्यलिङ्गं हेतोर्वाक्यपदार्थता' इति। 'विरोधः सोऽविरोधेऽपि विरुद्धत्वेन यद्वचः' इति च। तत्कालकृतगोदानमङ्गलाश्चत्वारोऽपि भ्रातरः। कृतकौतुकमङ्गला विवाहदीक्षिता यूयम्। अम्मो जाना-

एते खलु तत्कालकृतगोदानमङ्गलाश्चत्वारो भ्रातरः। कृतकौतुकमङ्गला विवाहदीक्षिता यूयम्। अहो जानामि तस्मिन्नेव प्रदेशे तस्मिन्नेव काले वर्ते।

रामः—एवम्।

समयः स वर्तत इवैष यत्र मां
समनन्दयत्सुमुखि गौतमार्पितः।
अयमागृहीतकमनीयकङ्कण-
स्तव मूर्तिमानिव महोत्सवः करः॥ १८॥

लक्ष्मणः—इयमार्या। इयमप्यार्या माण्डवी। इयमपि वधूः श्रुतकीर्तिः।

सीता—वच्छ, इअं अवरा का। वत्स, इयमपरा का।

---

मि तस्मिन्नेव प्रदेशे तस्मिन्नेव काले वर्त इति। **कृतकौतुकमङ्गला इति**॥ त्रसरबद्धालंकृता इत्यर्थः। 'कौतुकं विषयाभोगे हस्तसूत्रे कुतूहले। कामे ख्याते मङ्गले च' इति यादवः॥ अम्मो इत्याश्चर्ये। **तस्मिन्नेव प्रदेशे** जन्मनिलय एव। **तस्मिन्नेव काले** विवाहकाल एव। **वर्ते** अवस्थिता भवामि। सीताकथितमनूद्य स्वप्रतीतिरपि तथैवेत्याह— **एवमित्यादिना**॥ समयः एष वर्तत इव इत्यन्वयः। स इत्यनुभूतपरामर्शः। **समयः** कालः। एष इति पूर्वानुभूतानामव्यतिरेकेणैव चित्रे साक्षात्करणाद्विवाहसमयस्य वर्तमानत्वेनाध्यवसीयमानतामाह। कीदृशः समय इत्यत्राह—**यत्रेति**॥ यस्मिन् काले **समनन्दयत्** प्रीणयति स्म। सुमुखीति तात्कालिकसंमदातिरेकवशाद्विशेषतोऽपि मुखशोभामनुभूय संबोधनम्। **गौतमार्पित इति**॥ गौतमेनार्पितो दत्त इत्यर्थः। अयमित्यभिनीयोक्तिः। **आगृहीतकमनीयकङ्कणः** आगृहीतानि आमुक्तानि कमनीयानि मनोज्ञानि कङ्कणानि वलयानि यस्मिन् सः। **तव** अस्मल्लोचनासेचनकभूतायाः। **मूर्तिमान्** नयनग्राह्यः। **महोत्सवः** विवाहोत्सवः। अत्र पूर्वानुभूतस्य विवाहसमयस्य वर्तमानत्वेन संभावनादुत्प्रेक्षालंकारः। सच मूर्तिमानिव महोत्सव इत्युत्प्रेक्षान्तरेण सहैकवाचकानुप्रविष्ट इति संकरः। तदुक्तम्— 'संभावनमथोत्प्रेक्षा प्रकृतस्य समेन यत्' इति। अतिक्रान्तनिजचरिततात्कालिकताप्रतीतिरूपे चित्रदर्शनजनिते विस्मये विवाहसमयसमुचितपाणिग्रहणोपवर्णनरूपः शृङ्गारोऽङ्गमिति रसवदलंकारोऽपि। तदुक्तं ध्वनिकृता—'प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गं तु रसादयः। काव्ये तस्मिन्नलंकारो रसादिरिति मे मतिः॥' इति। **वत्स इयमपरा का**। इयं दृश्यमाना **अपरा** त्वया समावेदिताभ्योऽन्या **का** किंनामधेया। किमु

**लक्ष्मणः**——(सलज्जास्मितम् । अपवार्य) अये ऊर्मिलां पृच्छत्यार्या । भवतु । अग्रतः प्रसारयामि । (प्रकाशम्) आर्ये, दृश्यतां द्रष्टव्यमेतत् । अयमितो भगवाञ्जामदग्न्यः क्षत्रियवैशसव्रती ।

**सीता**——(ससंभ्रमम्) कम्पिदह्मि । कम्पितास्मि ।

**रामः**——ऋषे, नमस्ते ।

**लक्ष्मणः**——आर्ये, पश्य । अयमसावार्येण–(इत्यर्धोक्ते)

**रामः**——(साधिक्षेपम्) अयि, बहुतरं द्रष्टव्यम् । अन्यतो दर्शय ।

**सीता**——(सस्नेहं निर्वर्ण्य) सुट्ठु सोहदि अज्जउत्तो इमिणा विणअमाहप्पेण । सुष्ठु शोभते आर्यपुत्रोऽनेन विनयमाहात्म्येन ।

**लक्ष्मणः**——एते वयमयोध्यां प्राप्ताः ।

**रामः**——(सास्रम्) स्मरामि । हन्त हन्त ।

---

न ज्ञातचरी यतो नावेदयसीति भावः । अये इति लज्जानुभावः । भवतु इत्यान्तरनिर्णये । **अग्रतः** पुरतः । **प्रसारयामि** दृष्टादुपरि दृष्टिप्रसरणं कारयामि । एवं वा--अग्रतः अग्रं उपरितनं भागं प्रसारयामि विश्लेषयामि; चित्रपटं विस्तार्य चरितशेषावलोकनार्हं करोमीत्यर्थः । सार्वविभक्तिकत्वात्तसेः द्वितीयार्थे तसिः इति । **दृश्यताम्** नयनविषयीक्रियताम् । **द्रष्टव्यम्** विस्मयनीयतया दर्शनीयम् । तत्पुनः किमित्यत्राह— **अयमिति** ॥ इत इति सप्तम्यर्थे तसिः । जामदग्न्य इत्यनेन परिभवासहिष्णुत्वं व्यज्यते । **क्षत्रियवैशसव्रती** क्षत्रियनिग्रहप्रवणः । अपरिमेयमहिमानुसंधानात् भगवच्छब्दनिर्देशः । **कम्पितास्मीति** ॥ भीतास्मि । **अयं** चित्रे परिदृश्यमानः **असौ** प्रसिद्धः । अत्रादश्शब्दः प्रसिद्धिं परामृश्य पुरोवर्तित्ववाचकस्येदंशब्दस्यार्थमेव पुष्णाति तन्निकटवर्तित्वात् । यथा —'अपाङ्गसंसङ्गि तरङ्गितं दृशोर्भ्रुवोरपरालान्तविलासिवेल्लनम् । विसारिरोमाञ्चनकञ्चुकं तनोस्तनोति योऽसौ सुभगे तवागतः ॥' इत्यत्रादश्शब्दो यच्छब्दार्थमेव पुष्णाति । अतोऽयमसाविति न पुनरुक्तिः । आत्मस्तुतिप्रस्तावनादधिक्षेपः परकृतेऽपि स्वगुणाविष्करणेऽसहनतादर्शनात् । **सस्नेहं निर्वर्ण्येति** ॥ चित्रविलिखितमतिमानुषं जामदग्न्यविजयरूपमपदानं दृष्ट्वेत्यर्थः । आहेति शेषः । शोभते आर्यपुत्रोऽनेन विनयमाहात्म्येन । **अनेन** एतादृशचरितदर्शनासहनेन **विनयमाहात्म्येन** विनयोत्कर्षेण । एत इत्यभिनीयोक्तिः । वयमिति बिम्बप्रतिबिम्बयोरभेदोपचारात् । अथायोध्याप्रवेशसंदर्शनसमुद्बुद्धपूर्ववृत्तः सशोकमाह— **स्मरामीति** ॥ हन्तेति विषादे । 'हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयोः'

जीवत्सु तातपादेषु नूतने दारसंग्रहे ।
मातृभिश्चिन्त्यमानानां ते हि नो दिवसा गताः ॥ १९ ॥

इ अपि तदा जानकी

पतनविरलैः प्रान्तोन्मीलन्मनोहरकुड्मलै-
र्दशनकुसुमैर्मुग्धालोकं शिशुर्दधती मुखम् ।
ललितललितैर्ज्योत्स्नाप्रायैरकृत्रिमविभ्रमै-
रकृत मधुरैरङ्गानां मे कुतूहलमङ्गकैः ॥ २० ॥

---

इत्यमरः । शोकावेशवशात् द्विर्वचनम् । **जीवत्स्विति** ॥ अस्माकं ते दिवसाः गताः इत्यन्वयः । तच्छब्देन निरन्तरसमुदीयमानसुखपरम्परानिदानभूताः पूर्वानुभूता दिवसाः परामृश्यन्ते । बहुवचनेन तत्तदीप्सितसंपत्त्या तेषामुपर्युपरि रमणीयत्वं व्यज्यते । क्तप्रत्ययेन च पुनरावृत्तिशून्यतया विषादो व्यज्यते । जीवत्सु तातपादेष्वित्यनेन बहुविधराजकार्यचिन्ताभिरनाकुलता । नूतने दारसंग्रह इत्यनेन लोकोत्तरगुणविशिष्टतत्तादृशमहिलारत्नच्छन्दानुरञ्जन एवानिशमुद्योग इति । मातृभिश्चिन्त्यमानानाम् इत्यनेन प्रत्येकमेव ताभिरुपपादितैरभ्यवहार्यादिभिः शरीरयापनसौख्यम् । ननु नूतनदारसंग्रहस्य कथं तथाविधोत्कण्ठाकारित्वमित्यत्राह—**इयमपीति** ॥ तदा इयं जानकी अपि मे अङ्गानां कुतूहलमकृत इत्यन्वयः । **तदा** तेषु दिवसेषु । इयमित्यनेन स्नेहविश्वासबहुमानादयः प्रतीयन्ते । अपिशब्दः पुनरनितरसाधारणं जानक्या गुणोत्कर्षं प्रतिपादयन्नतिक्रान्तदिवसविषयमौत्सुक्यातिशयमवगमयति । जानकीत्यनेनाऽभिजात्यादिगुणवैशिष्ट्यं व्यज्यते । कुतूहलं नामाभिलषितवस्तूनामीषदनुभवे तदानीमेव सम्यक्त्वलिप्सया व्याकुलत्वम् । तथा चोक्तम् 'इष्टवस्तुन्यविज्ञाते स्वरूपेण व्यथावहम् । तज्ज्ञीप्सया पुनः पुंसां व्याकुलत्वं कुतूहलम् ॥' इति । केन वा पुनर्वस्तुना तदानीमियं कुतूहलमकृतेत्यत्राह—**अङ्गकैरिति** ॥ अतिदयनीयैरेवावयवैः । अनुकम्पायामल्पार्थे वा कः । अङ्गसंश्लेषमात्रमेव तदानीमस्मदभिलषितम् । तदपि यत्नप्रतिपाद्यमित्यर्थः । अत्र हेतुमाह—**शिशुरिति** ॥ अङ्गानां किं कुतूहलापादनसामर्थ्यमित्यत्राह—**ललितललितैरिति** ॥ अतिशयेन ललितैरित्यर्थः । लालित्यं नाम शृङ्गारमयाकारचेष्टत्वम् । तदुक्तम्—'शृङ्गाराकारचेष्टत्वं ललितं तदुदाहृतम्' इति । तदनुगुणतामेवाह—**ज्योत्स्नाप्रायैरिति** ॥ अप्रारूढभावैरित्यर्थः । शैशवादनतिसंहितललितसन्धिसन्धानैरिति यावत् । 'प्रायो वयसि बाहुल्ये तुल्यानशनमृत्युषु' इत्यमरः । स्वाभाविकमधुरविलासाभिव्य-

---

१. भ्रातृभिः

**लक्ष्मणः**—एष मन्थरावृत्तान्तः ।

**रामः**—(सत्वरमन्यतो दर्शयन् ।) देवि वैदेहि,

इङ्गुदीपादपः सोऽयं शृङ्गिबेरपुरे पुरा ।
निषादपतिना यत्र स्निग्धेनासीत्समागमः ॥ २१ ॥

**लक्ष्मणः**—(विहस्य स्वगतम् ) अये, मध्यमाम्बावृत्तान्तमन्तरितमार्येण ।

---

क्तिरपि तदानीमेवेत्याह—**अकृत्रिमविभ्रमैरिति** ॥ अत एव मधुरैः मनोहारिभिरित्यर्थः । तदुक्तम्—'अव्याहतं मनः पुंसामदुःखजनकं ततः । हरेदन्यपदार्थेभ्यो मधुरं वस्तु कीर्तितम् ॥' इति । ननु परिणयादेवारभ्य प्रतिदिनमाशंसनीयोपनमनेऽपि युवभावे पुनर्वर्तमाना कथमियमीदृशमतिक्रान्तमात्मनः शैशववृत्तमेवेदानीं भवन्तं संस्मारयतीत्यत्राह—**दधती मुखमिति** ॥ इहापृथक्सिद्धयोरेवावयवावयविनोरेकस्येतरधारणानुपपत्तेर्दधती मुखमित्यनेन तदवच्छेद्यत्वं लक्ष्यते । एकार्थसमवायः संबन्धः । अनुपसर्जनतया मुखस्योपभोग्यत्वप्रतीतिः फलम् । तदेव पुनर्विशदयन्मुखं विशिनष्टि—**दशनकुसुमैः मुग्धालोकमिति** ॥ दशनैरेव कुसुमैः । मुग्धं मनोज्ञं यथा तथाऽलोक्यत इत्यर्थः । कर्मणि घञ् भावे वा । मनोज्ञनिपातामित्यर्थः । उपलक्षणे तृतीया । दशनानां पुनः कुसुमत्वारोपणे निमित्तमुपपादयति—**पतनविरलैरिति** ॥ **प्रान्तोन्मीलन्मनोहरकुड्मलैरिति च** ॥ कुसुमानि हि पर्युषितानां पतनेन विरलानि भवन्ति । प्रान्ते निकटे उद्गच्छद्भिर्मनोहरैः कुड्मलैरुपेतानि भवन्ति । यत्पुनरेतदत्यन्तमुग्धाया एव बालिकायाः परिचरणचातुर्यं तत्खल्विह रसज्ञतायां परमरहस्यमिति नागरिकजनसमवायादवगम्यते । यथा—'पारिप्लवाक्षियुगलां पाणिस्पर्शानुमेयवक्षोजाम् । परिचेतुमस्ति वाञ्छा परिरम्भैकप्रयोजनां बालाम् ॥' इति । अत्र दशनानां कुसुमतारूपणेन मुखस्य मञ्जरीत्वप्रतीतिः । ततश्च जानक्या लतात्वप्रतीतिः । ततश्च 'श्रौता आर्थाश्च ते यस्मिन्नेकदेशविवर्ति तत्' इत्युक्तमेकदेशविवर्तिरूपकमलंकारः । दशनकुसुमैरित्यत्र उपमारूपकयोः साधकबाधकप्रमाणाभावेन संदेहसंकरशङ्कायां मुखस्य मञ्जरीत्वं जानक्याश्च लतात्वं प्रतीयमानमुपमाया बाधकमितरप्रसाधकं वेत्यलमनेनातिसूक्ष्मेक्षिकानिपुणपरिज्ञेयेन प्रतीयमानस्यैकतरसाधकबाधकतास्वरूपपर्यालोचनेन । **सत्वरमिति** ॥ लक्ष्मणहृदयपरिज्ञानात् । **अन्यतः** कैकेयीवृत्तान्तादुपरि । **इङ्गुदीति** ॥ **सः** पूर्वानुभूतः । कथं वा पूर्वमस्यानुभव इत्यत्राह—**यत्रेति** ॥ **निषादपतिना** गुहेन । स्निग्धेनेत्यनेन लक्ष्मणसख्यमनुस्मारयति । मन्थरादर्शनपरिहरणाद्विहासः । **मध्यमाम्बावृत्तान्तं** मध्यमाया मध्यभवायाः

सीता—अह्मो, एसो जडासंजमणवुत्तान्तो।
अहो, एष जटासंयमनवृत्तान्तः।
लक्ष्मणः—
पुत्रसंक्रान्तलक्ष्मीकैर्यद्वृद्धेक्ष्वाकुभिर्धृतम्।
धृतं बाल्ये तदार्येण पुण्यमारण्यकं व्रतम्॥ २२॥
सीता—एसा विमलपसण्णपुण्णसलिला भअवदी भाईरही।
एषा विमलप्रसन्नपुण्यसलिला भगवती भागीरथी।
रामः—रघुकुलदेवते, नमस्ते।
तुरगविचयव्यग्रानुर्वीभिदः सगराध्वरे
कपिलमहसा रोषात्प्लुष्टान्पुरा प्रपितामहान्।
अगणिततनूतापस्तप्त्वा तपांसि भगीरथो
भगवति तव स्पृष्टानद्भिश्चिरादुदतीतरत्॥ २३॥

---

अम्बायाः वृत्तान्तं कैकेयीवृत्तमित्यर्थः। अत्रान्तशब्दः स्वरूपवचनः। 'अन्तोऽस्त्यवसिते मृत्यौ स्वरूपे निश्चयेऽन्तिके' इति वैजयन्ती। **अन्तरितं** तिरस्कृतम्। अनवलोकनीयत्वेनोपेक्षितम् इति यावत्। एष जटासंयमनवृत्तान्तः। **पुत्रसंक्रान्तलक्ष्मीकैरिति**॥ पुत्रेषु स्वतनयेषु संक्रान्ता स्वयमेवाश्रिता लक्ष्मीर्येषां तैः। अनेन सकलपृथिवीभारभरक्षमतां निजतनयानामन्वीक्ष्यैव वृद्धभावेऽपि इक्ष्वाकूणां परार्थानुष्ठानपरतया वनगमनमिति सूच्यते। **आरण्यकमिति**॥ अरण्ये भवमारण्यं तदेवारण्यकम्। स्वार्थे कः। अथवा आरण्यकस्येदमारण्यकम्। अरण्यान्मनुष्य इति वुञ्। तदन्तात्तस्येदमित्यण्। व्रतशब्देन कायवागादीनां शुद्धिप्रदो नियमविशेषः कथ्यते। जटावल्कलादिधारणमिति यावत्। **धृतम्** अत्यादरेणैव परिगृहीतम्। **बाल्ये** कौमारक एव। राजलक्ष्मीपरिग्रहणात् पूर्वमेवेति विषादस्योत्कर्षः। एषा विमलप्रसन्नपुण्यसलिला भगवती भागीरथी। विमलं वर्षास्वप्यकलुषम् प्रसन्नं स्वच्छं पुण्यं पापहरं च सलिलं यस्याः सा। भगीरथपरिचर्यया भूलोकावतरणात् गङ्गाया रघुकुलदेवतात्वम्। **तुरगविचयव्यग्रानिति**॥ हे भगवति भगीरथः पितुः प्रपितामहान् चिरात् उदतीतरत् इत्यन्वयः। **उदतीतरत्** उत्तारयति स्म। पितृलोकं निनायेति यावत्। किं पुनस्तेषां पितृलोकप्राप्तौ कारणम् इत्यत्राह—**कपिलमहसेति**॥ कपिलस्य महसा तपोबलजनितेन निगूढेन तेजसेत्यर्थः। तथाच शाकुन्तले—'शमप्रधानेषु तपोधनेषु गूढं हि दाहात्मकमस्ति तेजः।

सा त्वमम्ब, स्नुषायामरुन्धतीव सीतायां शिवानुध्याना भव ।

लक्ष्मणः—अयमसौ भरद्वाजावेदितश्चित्रकूटयायिनि वर्त्मनि वनस्पतिः कालिन्दीतटे वटः श्यामो नाम ।

(रामः सस्पृहमवलोकयति ।)

सीता—सुमरेदि वा तं पदेसं अज्जउत्तो ।

स्मरति वा तं प्रदेशमार्यपुत्रः ।

रामः—अयि, कथं न स्मर्यते ।

अलसललितमुग्धान्यध्वसंपातखेदा-
दशिथिलपरिरम्भैर्दत्तसंवाहनानि ।

---

स्पर्शानुकूला इव सूर्यकान्तास्तदन्यतेजोऽभिभवाद्वमन्ति ॥' इति । महसां च कर्तृत्वोक्त्या सगरपुत्रप्लोषणे कपिलमुनेश्चित्ताभिसन्ध्यभाव उक्तः । दाहकत्वसाधर्म्यान्महोरूपतयाध्यवसायो वा । **रोषात्** स्वाभिभवजनितेन कोपेन । **प्लुष्टान्** दग्धान् । कीदृशं पुनरेते परिभवं चक्रुरित्यत्राह—**तुरगविचयव्यग्रानिति** ॥ तुरगविचये तुरगान्वेषणे व्यग्रान् व्यापृतानित्यर्थः । तुरगविचयः किं कपिलमुनेः परिभवहेतुरित्यत्राह—**उर्वीभिद इति** ॥ विदारितभूमयः पातालमभिगम्य तुरगापहर्तृबुद्ध्या कपिलमुनिं परिबभूवुरित्यर्थः । किमर्थं पुनस्तादृशं प्रयत्नमवलम्ब्य तुरगस्तैरन्विष्ट इत्यत्राह—**सगराध्वर इति** ॥ स्वकीयशतक्रतुसमाख्यानस्यासाधारणताविलयपरिशङ्कितमहेन्द्रापहृततुरंगमे सगरक्रताविल्यर्थः । कथं पुनस्तेषामयं तथाविधं पातकमपनीतवानित्यत्राह—**तव अद्भिः स्पृष्टानिति** ॥ विप्रकृष्टतररसातलकुहरविनष्टानां तेषां कथं तावकजलस्पर्शसंभव इत्यत्राह—**तपांसि तप्त्वेति** ॥ अत्युत्कटैरेव तपोभिर्भगवतीं परितोष्य रसातलमवतार्येत्यर्थः । तपांसि तप्त्वेति राजसूयं यजतीत्यादिवत् करोत्यर्थे । बहुवचनेनास्य स्वमनीषितं मन्दाकिनीपरमेश्वरयोर्बहुकृत्वः परितोषणेनैव सिद्धमिति व्यज्यते । एतदेव समर्थयति—**अगणिततनूताप इति** ॥ अत्र सगरपुत्रप्लोषणे तुरगविचयव्यग्रत्वादीनां पदार्थानां हेतुत्वेन विवक्षणात् काव्यलिङ्गमलंकारः । **सा** अस्माकं कुलदैवतभूता । **स्नुषायाम्** भगीरथसंबन्धान्निजवध्वाम् । **शिवानुध्याना** मङ्गलाशंसिनी । **अयम्** चित्रविलिखितः चित्रकूटगमनमार्गाभिज्ञानतया भरद्वाजवाक्येन कथितः । श्याम इति गौणो व्यपदेशः । स्मरति वा तं प्रदेशम् आर्यपुत्रः । विस्मरणाशक्यतामाह—**अलसललितमुग्धानीत्यादिना** ॥ त्वं अङ्गकानि मम उरसि कृत्वा यत्र निद्रामवाप्ता इत्यन्वयः । **त्वं** प्रियसखीविरचितविलासमण्डनायायासस्याप्यसहना । **अङ्गकानि** अतिदयनीयान्यङ्गानि

परिमृदितमृणालीदुर्बलान्यङ्गकानि
त्वमुरसि मम कृत्वा यत्र निद्रामवाप्ता ॥ २४ ॥

**लक्ष्मणः**—एष विन्ध्याटवीमुखे विराधसंवादः।

**सीता**—अलं दाणिं दाव एदिणा। पेक्खम्मि दाव अज्जउत्तसहत्तधरिदतालवत्तादववारणं अत्तणो अक्खीहिं दक्खिणारण्णप्पवेसम्।
अलमिदानीं तावदेतेन। पश्यामि तावदार्यपुत्रस्वहस्तधृततालपत्रातपवारणमात्मनोऽक्षिभ्यां दक्षिणारण्यप्रवेशम्।

---

**मम** त्वन्मयीभूतजीवितफलस्य **उरसि** त्वत्संवेशनसुहृदि **कृत्वा** विवशतरं निधाय **यत्र** यस्मिन् प्रदेशे **निद्रां** आशंसितागमनाम् **अवाप्ता** लब्धवती। कीदृशान्यङ्गानीत्यत्राह—**अध्वसंपातखेदात् अलसललितमुग्धानीति** ॥ अलसानि आलस्ययुक्तानि अत एव ललितानि अभिव्यक्तशृङ्गारचेष्टितानि मुग्धानि मृदूनि। नवत्ववाचकेन मुग्धशब्देन मृदुत्वं लक्ष्यते। एकार्थसमवायः संबन्धः। आयासासहनताप्रतीतिः फलम्। 'मुग्धः सौम्ये नवे मूढे' इत्यमरः। अङ्गनानां हि शरीरसौकुमार्यमध्वसञ्चारादिक्लेशेन नितरामभिव्यक्तं भवेत्। तथाच रतिरहस्ये—'अध्वक्लान्ततनुर्नवज्वरवती नृत्तश्लथाङ्गी तथा मासैकप्रसवा ददाति सुरते षण्मासगर्भा सुखम्' इति। ननु 'आदातुं सकृदीक्षितेऽपि कुसुमे हस्ताग्रमालोहितम् लाक्षारञ्जनवार्तयापि सहसा रक्तं तलं पादयोः' इत्यादिप्रतिपादितोत्तमसौकुमार्यशालिन्याः कथमटवीकान्तारपर्यटनादतिशिथिलशरीरसन्धानतया निद्रासुखलाभ इत्यत्राह—**अशिथिलपरिरम्भैर्दत्तसंवाहनानीति** ॥ अशिथिलैः परिरम्भैरेव दत्तं संवाहनं येषां तानि। ननूत्सङ्गे सादरं निधाय शनैरेव करतलेन संवाहयितुमुचितमित्यत्राह—**परिमृदितमृणालीदुर्बलानीति** ॥ आलस्यातिरेकात् करतलसंवाहनाक्षमाणीत्यर्थः। तादृशः प्रदेशः कथं न स्मर्यत इति संबन्धः। अत्राद्भुतस्य श्यामाख्यवटवत्प्रदेशविषयो रतिभावोऽङ्गं, तत्र च शृङ्गारस्याङ्गभावात् प्रेयोऽलंकारः। **विन्ध्याटवीमुखे** विन्ध्याटवीप्रवेशसमनन्तरमित्यर्थः। अलमिदानीं तावदेतेन। पश्यामि तावत् आर्यपुत्रस्वहस्तधृततालपत्रातपवारणमात्मनोऽक्षिभ्यां दाक्षिणारण्यप्रवेशम्। अलमिति निषेधे। **इदानीं** कल्याणतरकालिन्दीतटसंदर्शनसमनन्तरम्। तावच्छब्दोऽल्पार्थे। **एतेन** अशोभनेन। विन्ध्याटवीप्रवेशवृत्तान्तं किञ्चिदपि नावलोकयेयमित्यर्थः। किं वा पुनरवलोकनीयमित्यत्राह—**पश्यामीति** ॥ तावच्छब्दः साकल्ये। अवलोकनीयतामेव प्रतिपादयति—**आर्यपुत्रस्वहस्तेति**। आर्यपुत्रेण स्वहस्तेनैव मम घर्मोपरोधशमनार्थं गृहीतं तालपत्रमेवातपवारणं यस्मिंस्तम्। **आत्मनोऽक्षिभ्यामिति** ॥ वनवासे हि पूर्वं परमानुकूलप्रियतमपरिचिततथाविधोपचारपुर-

रामः—

एतानि तानि गिरिनिर्झरिणीतटेषु
वैखानसाश्रिततरूणि तपोवनानि ।
येष्वातिथेयपरमाः शमिनो भजन्ते
नीवारमुष्टिपचना गृहिणो गृहाणि ॥ २५ ॥

लक्ष्मणः— अयमविरलानोकहनिवहनिरन्तरस्निग्धनीलपरिसरारण्यपरिरब्धगोदावरीमुखरकन्दरः संततमभिष्यन्दमानमेघमेदुरितनीलिमा जनस्थानमध्यगो गिरिः प्रस्रवणो नाम ।

रामः—

स्मरसि सुतनु तस्मिन्पर्वते लक्ष्मणेन
प्रतिविहितसपर्यास्वस्थयोस्तान्यहानि ।

---

स्कारेण दक्षिणारण्यप्रवेशादानन्दपरवशा परमभूवम् । इदानीं पुनरनुभूतस्य तस्य प्रतिबिम्बगतत्वेऽपि बिम्बप्रतिबिम्बयोरभेदप्रतिभासात् अतिक्रान्तमपि तथाविधं दक्षिणारण्यप्रवेशमेतत्कालीनमिवानुभवामि इति भावः । अयोध्यानिवासे खलु सौधात्सौधान्तरादिगमने परिजनधृतमुक्तातपत्रमेव मया सततमनुभूतं, वनवासे तु विन्ध्याटव्या दक्षिणारण्यप्रवेशे कठोरातपवति वर्त्मनि ममातपत्रमार्यपुत्रेणैव धृतम् । तच्च तालपत्रमात्रमपि नयनयोरमृतायत इत्यर्थः । **एतानीति** ॥ तानि तपोवनानि एतानि इति संबन्धः । **तानि** पूर्वपरिचितानि **तपोवनानि** मुनिजननिवासभूतानि काननानि । गिरिनिर्झरिणीतटेष्वित्यनेन पथिकजनविश्रमसौख्यं व्यज्यते । **आतिथेयपरमाः** अतिथिपूजानिरताः । पथ्यतिथीत्यादिना ढञ् । **शमिनः** मुनयः । **गृहिणः** गृहस्थाश्रमिणः । **गृहाणि** पर्णशालाः । कीदृशानीत्यत्राह— **वैखानसाश्रिततरूणीति** ॥ वैखानसैः वृक्षमूलावस्थानव्रतपरैः आश्रितास्तरवो येषु तानि । शमिनो गृहाणि भजन्त इत्यत्र विरोधालंकारः । तेन च तपोवनानामुत्कर्षातिशयः प्रतीयते । **अयमित्यादि** ॥ जनस्थानमध्यगो गिरिरयमिति संबन्धः । **जनस्थानमध्यगः** जनस्थानमध्यवर्ती । पूर्वपरिचयमनुस्मारयति— **प्रस्रवणो नामेति** ॥ तत्र चिरनिवाससौख्यमनुस्मारयति— **अविरलेति** ॥ अविरलैरस्वल्पैरनोकहनिवहैर्वृक्षसमूहैः निरन्तरेण निबिडतरेण स्निग्धेन श्लक्ष्णेन नीलेन श्यामलेन परिसरारण्येन तीरद्वयकाननेन परिरब्धया उपगूढया गोदावर्या मुखरः शब्दितः कन्दरो यस्मिन् सः । एवं प्रस्रवणं प्रत्यभिज्ञाय तत्र चिरनिवासविस्रम्भजनितां प्रदेशवैशिष्ट्यसमनुगृहीतां पूर्वानुभूतां निखिलसांसारिकसुखदिनानभूतां प्रेमातिरेकसमनुरूपामुपभोगपरंपरामनुसंधाय सोत्कण्ठमाह— **स्मर-**

स्मरसि सरसनीरां तत्र गोदावरीं वा
स्मरसि च तदुपान्तेष्वावयोर्वर्तनानि ॥ २६ ॥

अपि च ।

किमपि किमपि मन्दं मन्दमासक्तियोगा-
दविरलितकपोलं जल्पतोरक्रमेण ।
अशिथिलपरिरम्भव्यापृतैकैकदोष्णो-
रविदितगतयामा रात्रिरेव व्यरंसीत् ॥ २७ ॥

**स्मीति** ॥ हे सुतनु तस्मिन् पर्वते लक्ष्मणेन प्रतिविहितसपर्यास्वस्थयोः आवयोः तानि अहानि स्मरसि इत्यन्वयः । **लक्ष्मणेन** अस्मच्छुश्रूषानिरतेन **प्रतिविहितसपर्यास्वस्थयोः** प्रतिविहितया वनवासजनितपरिश्रमापनोदनाय प्रतिक्षणं परिकल्पितया सपर्यया शरीरस्थितियोग्यया सपर्यया परिचर्यया स्वस्थयोः निरातङ्कयोः **तानि** पूर्वानुभूतानि **अहानि** अयोध्यासुखविस्मारकाणि दिनानि **स्मरसि** किमिति काकुः । **सरसनीरां** सरसं स्वादिष्टं नीरं जलं यस्यां तां **तत्र** प्रस्रवणे **तदुपान्तेषु** तस्या गोदावर्या उपान्तेषु सन्निकृष्टप्रदेशेषु **वर्तनानि** अवस्थानानि तत्तच्चेष्टितानीति यावत् । एवं प्रस्रवणनिवाससौख्यमनुसंधाय तत्रापि रात्रिवृत्तस्यात्यन्तविशेषमनुसंदधान आह—**अपिचेति** ॥ कः पुनः स विशेष इत्यत्राह—**किमपि किमपीति** ॥ रात्रिरेव व्यरंसीत् इति संबन्धः । तस्मिन् पर्वते लक्ष्मणेन प्रतिविहितसपर्यास्वस्थयोरावयोरिति पूर्वस्मादनुषज्यते । **रात्रिरेव** ननु प्रदेशवैशिष्ट्यसमनुगृहीतानि विस्रम्भविलसितानि **व्यरंसीत्** विरता ननु यापिता । ननु कान्तारवासिनो दुर्लभैव निशाविरतिरित्यत्राह—**अविदितगतयामेति** ॥ अविदितं यथा तथा व्यतिक्रान्ता यामा यस्याः सा । किंस्वित्तत्तादृशदेशकालसमुचितैर्विनोदैः कालावान्तरभेदानवगतिरित्यत्राह— **अशिथिलपरिरम्भेति** ॥ अशिथिलपरिरम्भे व्यापृतौ समुत्सहमानौ एकैकौ दोषौ भुजौ ययोस्तौ । निरन्तरसमनुभूयमाननिरतिशयसंश्लेषसुखयोरित्यर्थः । किमुत तात्कालिकशरीरसादोपजनितेनानन्दनिद्रावैवश्येनेत्यत्राह— **जल्पतोरिति** ॥ निरतिशयविस्रम्भकाष्ठाधिरोहणेन प्रसृतप्रणयवचनयोरित्यर्थः । उक्तमेवार्थमुपपादयति—**किमपि किमपीति** ॥ मध्ये मध्ये विच्छिन्नं यथा तथेति क्रियाविशेषणम् । वीप्सायां द्विर्वचनम् । **आसक्तियोगाद्विचलितकपोलमिति** ॥ आसक्तिः आभीक्ष्ण्येन संगः इतरेतरलगनमिति यावत् । तद्वशादविशदाक्षरं यथा तथा । **अक्रमेणेति** ॥ मनस्कारशून्यतया परस्परासंबद्धं यथा तथेति भावः । **शूर्पणखासंपातः** शूर्पणखागमनम् ।

१. दविचलितकपोलं इति व्याख्यातृसंमतः पाठः

**लक्ष्मणः**—एष पञ्चवट्यां शूर्पणखासंपातः ।

**सीता**—हा अज्जउत्त, एत्तिअं दे दंसणम् ।

हा आर्यपुत्र, एतावत्ते दर्शनम् ।

**रामः**—अयि वियोगत्रस्ते, चित्रमेतत् ।

**सीता**—जह तह दुज्जणो असुहं उप्पादेइ ।

यथा तथा दुर्जनोऽसुखमुत्पादयति ।

**रामः**—हन्त, वर्तमान इव मे जनस्थानवृत्तान्तः प्रतिभाति ।

**लक्ष्मणः**—

अथेदं रक्षोभिः कनकहरिणच्छद्मविधिना
तथा वृत्तं पापैर्व्यथयति यथा क्षालितमपि ।
जनस्थाने शून्ये विकलकरणैरार्यचरितै-
रपि ग्रावा रोदित्यपि दलति वज्रस्य हृदयम् ॥ २८ ॥

---

अतर्कितत्वमसह्यत्वं च प्रतिपादयितुं संपातशब्दप्रयोगः । हा आर्यपुत्र एतावत्ते दर्शनम् । **एतावत्** शूर्पणखागमनपर्यन्तमेव । अयि इत्यनुनये । **वियोगत्रस्त इति** ॥ वियोगत्रास एव तव साक्षात्त्वभ्रमहेतुरिति भावः । यथा तथा दुर्जनोऽसुखमुत्पादयति । दुर्जनप्रसंगः सर्वथापि दुःखैकहेतुः न तु साक्षात्त्वप्रतिच्छन्दत्वादिकं विशेषमपेक्षते इत्यर्थः । चित्रदर्शनमेवेदमित्यध्यवस्यतो ममाप्येवमेव प्रतीतिरित्याह— **हन्तेति** ॥ **वर्तमान इव** अनुभूयमान इव **जनस्थानवृत्तान्तो** मायामृगवधादिः । **अथेदमिति** ॥ अथशब्द आनन्तर्ये । इदमित्यभिनीयोक्तिः । दृश्यतामिति शेषः । एवं शूर्पणखागमनसमनन्तरभूतं वृत्तान्तं प्रदर्शयितुमारभमाणश्चिरातीतमपि सीताहरणादिकमालेख्यरूपतया साक्षादिवानुभवन् सहसैव संभूतममर्षवेगमसहमानः सावेगमाह—**रक्षोभिरित्यादि** ॥ पापैः रक्षोभिः कनकहरिणच्छद्मविधिना तथा वृत्तमित्यन्वयः । **पापैः** क्रूरचेष्टितैः **रक्षोभिः** मारीचप्रभृतिभिः **कनकहरिणच्छद्मविधिना** मृगप्रलोभनेन **तथा** वक्ष्यमाणेन प्रकारेण **वृत्तम्** अवर्ति । वृतु वर्तन इत्यस्मात् भावे क्तः । कथमित्यत्राह—**यथा क्षालितमपि व्यथयतीति** ॥ वैरप्रतिकरणेन शोधितमपि यथा पीडयति तथा व्यापृतमित्यर्थः । न केवलमस्माकमेव जनस्थानवृत्तान्तेनेदृशी व्यथा अपि तु सकलजनानामपीत्याह—**जनस्थान इति** ॥ **शून्ये** आश्वासयितृजनविरहिते । **विकलकरणैः** इन्द्रियवृत्तिशून्यैः **आर्यचरितैः** आर्यस्य सकलजनाधारस्य चरितैः जनवादबहुलीभूतैः करुणामयैः व्यापारैः । **ग्रावा अपि** केनापि कारणेन द्रवीभावशून्योऽपि । अपिशब्दो विरोधे । **वज्रस्य** कठिनादपि कठिनतरस्य ।

सीता—(सास्रमात्मगतम्) अह्मो, भूलोआणन्दओ एव्वं मह कालणादो किलन्तो अज्जउत्तो आसि ।

अहो भूलोकानन्दक एवं मम कारणात्क्लान्त आर्यपुत्र आसीत् ।

लक्ष्मणः—(रामं निर्वर्ण्य साकूतम्) आर्य, किमेतत् ।

अयं तावद्बाष्पस्त्रुटित इव मुक्तामणिसरो
विसर्पन्धाराभिर्लगति धरणीं जर्जरकणः ।
निरुद्धोऽप्यावेगः स्फुरदधरनासापुटतया
परेषामुन्नेयो भवति चे भराध्मातहृदयः ॥ २९ ॥

अतः परं किं कष्टतरम् । नास्त्येवेति भावः । एवं वा योजना—अथ पापैः रक्षोभिः कनकहरिणच्छद्मविधिना तथा वृत्तमिदमिति । दृश्यतामिति शेषः । अत्राचेतनयोः पाषाणवज्रयोरपि रोदनहृदयदलनयोः संभवकथनात् किमुत सचेतनानामिति प्रतीतेः कैमुत्यन्यायेन समापतनादर्थापत्तिरलंकारः । तदुक्तम्—'एकस्य वस्तुनो भावाद्यत्र वस्त्वन्यदापतेत् । कैमुत्यन्यायतः सा स्यादर्थापत्तिरलंक्रिया ॥' इति । अम्मो इति विषादे । भूलोकानन्दकः एवं मम कारणात् क्लान्त आर्यपुत्र आसीत् । अथ मायाहरिणच्छलितहृदयमात्मानमवधूय राक्षसैः कृतं सीताहरणं चित्रपटे लिखितमवलोक्य सहसैवोद्बुद्धप्रियजनविप्रयोगदशं रघुपतिमवलोक्य सौमित्रिः सविषादमाह—**आर्येति** ॥ किंशब्दः क्षेपे । हिमवत्सागरगुरुतरगम्भीरचेतसस्तवैवंविधश्चित्तावेगः सुतरामनुचित एवेत्यर्थः । एतादृशं हृदयवैवश्यं कथमवगतं त्वयेत्यत्राह—**अयमिति** ॥ धाराभिः विसर्पन् बाष्पः अयं तावत् धरणीं लगति इत्यन्वयः । प्रकृत्यादौ तृतीया । धारारूपेणेत्यर्थः । बहुलताद्योतनाय बहुवचनम् । अयमित्यभिनीयोक्तिः । तावच्छब्दो वाक्यालंकारे । **लगति** संबध्नाति । बाष्पस्य प्राचुर्यमुपपादयति—**त्रुटितो मुक्तामणिसर इवेति** ॥ त्रुटितः छिन्नः मुक्तामणिनिर्मितः सरो मुक्तामणिसरः । परिवेषः मालेति यावत् । हारपर्याय इति केचित् । 'हारो मुक्तावलिर्मुक्तासरो मौक्तिकदाम च' इति शब्दरत्नाकरे । मुक्तामणिसादृश्यमुपपादयति—**जर्जरकण इति** ॥ जर्जराः शकलीभूताः कणा बिन्दवो यस्य सः स्थूलबिन्दुरित्यर्थः । अस्थूलानां जर्जरत्वासंभवात् । ननु बाष्पेणैव केवलं हृदयसंतापः परिज्ञायते अपितु अनुभावान्तरेणापीत्याह—**निरुद्धोऽपीति** ॥ आवेगः निरुद्धः अपि स्फुरदधरनासापुटतया परेषामुन्नेयो भवति च इति संबन्धः । **आवेगो** व्यथा **निरुद्धः** अतिप्रयत्नेन विघ्नितप्रसरः । आवेगविशेषणत्वेन दत्तपदोऽप्ययं निरुद्धशब्दः सिंहावलोकितन्यायेन पूर्वत्राप्यभिसं-

१. धाराभिर्लुठति २. चिरमाध्मातहृदयः

रामः—वत्स,

तत्कालप्रियजनविप्रयोगजन्मा
तीव्रोऽपि प्रतिकृतिवाञ्छया विसोढः।
दुःखाग्निर्मनसि पुनर्विपच्यमानो
हृन्मर्मव्रण इव वेदनां तनोति ॥ ३० ॥

सीता—हद्धी हद्धी। अहं वि अदिभूमिं गदेण रणरणएण अज्जउत्तसुण्णं विअ अत्ताणं पेक्खामि।

हा धिक् हा धिक्। अहमप्यतिभूमिं गतेन रणरणकेनार्यपुत्रशून्यमिवात्मानं पश्यामि।

लक्ष्मणः—(स्वगतम्) भवतु। आक्षिपामि। (चित्रं विलोक्य प्रकाशम्) अथैतन्मन्वन्तरपुराणगृध्रराजस्य तत्रभवतस्तातजटायोर्विक्रमोदाहरणम्।

---

बध्यते। **परेषां** द्रष्टृणाम् **उन्नेयो**ऽनुमेयः। आवेगः पुनः कियानित्यत्राह—**भराध्मातहृदय इति** ॥ भरेणातिशयेन आध्मातमुत्तप्तं हृदयं येन सः। 'अथातिशयो भरः' इत्यमरः। कथं पुनरेवंविधं संतापं विषहे इत्याह—**वत्सेति** ॥ वत्स प्रतिकृतिवाञ्छया विसोढो दुःखाग्निः मनसि पुनः विपच्यमानः वेदनां करोतीत्यन्वयः। **प्रतिकृतिवाञ्छया** रावणकृतस्य दारापहरणरूपस्य परिभवस्य प्रतिक्रियाकरणेच्छया **विसोढो** विशेषेण सोढः। **दुःखाग्निः** दुःखमेवाग्निः वैरशोधनानन्तरं **विपच्यमानः** स्वयमेव कालवशात् प्राप्नुवन् **वेदनां** पीडाम्। दुःखाग्नेरसह्यवेगतामाह—**तीव्र इति** ॥ तीव्रत्वे कारणमाह—**तत्कालप्रियजनविप्रयोगजन्मेति** ॥ तत्काले राज्यभ्रंशपितृवियोगवनवासादिदुःखतीव्रतरे पूर्वानुभूते काले यः प्रियजनविप्रयोगः तस्माज्जन्म यस्य सः। कीदृशी पुनर्व्यथेति अत्राह—**हृन्मर्मव्रण इवेति** ॥ यथा किल हृदयमर्मणि संजातः तीव्रोऽपि व्रणः चिकित्सावशात् झटित्येव रूढग्रन्थिः अपथ्योपसेवया क्रमेणान्तर एव विवृद्धः सुमहतीं वेदनां करोति, तथैव प्रतिकृतिश्रद्धया विसोढो दुःखाग्निः चित्रदर्शनेन सहसैव संधुक्षितः पीडां वितनोतीत्यर्थः। हा धिक् अहमप्यतिभूमिं गतेन रणरणकेनार्यपुत्रशून्यमिवात्मानं पश्यामि। भवतु इत्यान्तरनिर्णये। **आक्षिपामि** आकृष्य जनस्थानवृत्तान्तादन्यस्मिन्वस्तुनि प्रलोभयामि। **मन्वन्तरपुराणगृध्रराजस्येति** ॥ मन्वन्तरपुराणस्य मन्वन्तरेण मनोः स्वायंभुवस्यान्तरेण जीवनकालेन पुराणस्य वर्षीयसो गृध्रराजस्य गृध्रश्रेष्ठस्य। स्वायंभुवमन्वन्तर एव जननादति-

**सीता**—हा ताद, णिव्वूढो तुए अवच्चसिणेहो।

हा तात, निर्व्यूढस्त्वयाऽपत्यस्नेहः।

**रामः**—हा तात काश्यप शकुन्तराज, क नु खलु पुनस्त्वादृशस्य महतस्तीर्थभूतस्य साधोः संभवः।

**लक्ष्मणः**—अयमसौ जनस्थानपश्चिमतः कुञ्जवान्नाम [1]दनुकबन्धाधिष्ठितो दण्डकारण्यभागः। तदिदमसुष्य परिसरे मतङ्गाश्रमपदम्। तत्र श्रमणी नाम सिद्धशबरी। तदेतत्पम्पाभिधानं पद्मसरः।

**सीता**—एत्थ किल अज्जउत्तेण विच्छड्डिआमरिसधीरत्तएण पमुक्ककण्ठं परुण्णं आसि।

अत्र किलार्यपुत्रेण विच्छर्दितामर्षधीरत्वेन प्रमुक्तकण्ठं प्ररुदितमासीत्।

---

स्थविरस्येत्यर्थः। सकलजनवन्दनीयस्येति यावत्। 'मन्वन्तरं तु दिव्यानां युगानामेकसप्ततिः' इत्यमरः। **तातजटायोरिति** ॥ दशरथसख्याद्धर्मतः पितृसमुचितोपचारयोग्यस्येत्यर्थः। **विक्रमोदाहरणं** वीराणां पराक्रमवर्णने दृष्टान्ततया कथनीयम्। हा तात निर्व्यूढस्त्वयाऽपत्यस्नेहः। **निर्व्यूढः** सम्यक्कृतः। **महतः** उत्कृष्टतरस्य **तीर्थभूतस्य** दशरथसख्यस्य निष्क्रयकरणात् पावनीभूतस्य। प्राणानपि विहायाश्रितरक्षणमेव करणीयमित्युपदेशकरणादाचारभूतस्येति वा। **जनस्थानपश्चिमत इति** ॥ जनस्थानस्य पश्चिमो भागो जनस्थानपश्चिम इति सिद्धे पश्चात्तसिः। अन्यथाऽव्ययत्वात्तदन्तस्य पूरणगुणेत्यादिना षष्ठीसमासप्रतिषेधात्। हर्म्योपरि सर्वपश्चादित्यादिवदव्ययेन षष्ठीसमासप्रतिषेधस्यानित्यत्वाद्वा समासः। **दनुकबन्धाधिष्ठितः** दनुसंज्ञेन रक्षोभूतेन गन्धर्वेणाधिष्ठितः। तपसः सिद्धिरणिमाद्यैश्वर्यसिद्धिः तद्वती शबरी सिद्धशबरी। पद्मपरिपूर्णं सरः पद्मसरः। अत्र किलार्यपुत्रेण विच्छर्दितामर्षधीरत्वेन प्रमुक्तकण्ठं प्ररुदितमासीत्। किलेति वार्तायाम्। 'वार्तासंभाव्ययोः किल' इत्यमरः। हनूमद्वचनादवगतं मयेति भावः। **विच्छर्दितेति** ॥ विच्छर्दिते परित्यक्ते अमर्षधीरत्वे येन सः। **प्रमुक्तकण्ठमिति** ॥ गळनिरोधं परित्यज्येत्यर्थः। प्रमुक्तशब्दामिति वा। 'कण्ठो गळेऽन्तिके शब्दे' इति वैजयन्ती। आसीदिति तिङन्तप्रतिरूपकमव्ययम्। अन्यथा प्ररुदितमिति सुबन्तक्रिययैव गतार्थत्वे क्रियान्तरोपादानस्य पौनरुक्त्यापत्तेः। काका प्रश्नः। प्रदेशविशेषदर्शनातिरिक्तविरहवेदनापरिमूढहृदये मयि कथमम-

---

१. पर्वत इत्यधिकपाठः

**रामः**—देवि, रमणीयमेतत्सरः ।

> एतस्मिन्मदकलमल्लिकाक्षपक्ष-
> व्याधूतस्फुरदुरुदण्डपुण्डरीकाः ।
> बाष्पाम्भःपरिपतनोद्गमान्तराले
> संदृष्टाः कुवलयिनो मया विभागाः ॥ ३१ ॥

**लक्ष्मणः**—अयमार्यो हनूमान् ।

**सीता**— एसो चिरणिव्विण्णजीवलोअप्पच्चुद्धरणगुरुओवआरी महाभाओ ।

(एष चिरनिर्विण्णजीवलोकप्रत्युद्धरणगुरुकोपकारी महाभागः ।)

**रामः**—

> दिष्ट्या सोऽयं महाबाहुरञ्जनानन्दिवर्धनः ।
> यस्य वीर्येण कृतिनो वयं च भुवनानि च ॥ ३२ ॥

---

र्षधैर्ययोरवस्थानमित्याह —**देवीति** ॥ देवि महनीयगुणगणमहिते **रमणीयम्** उद्दीपनेषु प्रकृष्टतमम् **एतत्** दृश्यमानं न केवलमहमेतद्दर्शनादवलुप्तामर्षधैर्य एवेत्याह—**एतस्मिन्निति** ॥ एतस्मिन्मया विभागाः बाष्पाम्भःपरिपतनोद्गमान्तराले संदृष्टा इत्यन्वयः । **एतस्मिन्** रमणीयतरे सरसि **मया** त्वदीयविरहव्यग्रचेतसा **विभागाः** सकला एव प्रदेशाः **बाष्पाम्भःपरिपतनोद्गमान्तराले** बाष्पाम्भसां परिपतनोद्गमयोरन्तराळे । पूर्वोद्गतेषु पतितेषु पुनरनुद्गतेषु चेत्यर्थः । **संदृष्टाः** त्वत्सन्निधानबुद्ध्या पुनः सम्यगवलोकिताः । अत्र हेतुमाह—**मदकलमल्लिकाक्षपक्षव्याधूतस्फुरदुरुदण्डपुण्डरीका इति** ॥ **कुवलयिन इति च** ॥ मदकलानां मदेन कलानां मनोहराणां मल्लिकाक्षाणां हंसानां पक्षैः व्याधूतानि स्फुरन्ति विकसन्ति उरुदण्डानि पुण्डरीकाणि येषु ते । अत्र संदृष्टा इति पदार्थे मदकलेत्यादीनां पदार्थानां हेतुत्वविवक्षणात् काव्यलिङ्गमलंकारः । तेन च भ्रान्तिमानभिव्यज्यते । सदृशदर्शनान्यसंविदोः कण्ठोक्त्यभावादस्य न वाच्यत्वम् । कपाले मार्जार इत्यादौ भ्रान्तिमतः शशिकरविलेहनपयःप्रतीत्यादीनां कण्ठोक्त्या वाच्यत्वमेव । आर्य इति तदीयोत्कर्षानुसंधानात् । एष चिरनिर्विण्णजीवलोकप्रत्युद्धरणगुरुकोपकारी महाभागः । चिरनिर्विण्णस्य निशाचरावस्कन्दवशाच्चिरकालदुःखितस्य जीवलोकस्य त्रैलोक्यवासिनो जनस्य प्रत्युद्धरणेन दुःखसमुत्तारणेन गुरुकोपकारी नितरामुपकारकारी ब्रह्मविद्योपदेशेन संसारसागरसमुत्तारक इति यावत् । युष्मत्समुद्यमकथनेन मम दुःखापनोदक इति भावः । **महाभागो** निष्कलङ्कचरितः । तदुक्तम्—

सीता—वच्छ, एसो सकुसुमतरुषण्डताण्डविअबंहिणो किंणा-महेओ गिरी । जत्थ अणुभावसोहग्गमेत्तपरिसेसधूसरसरीरओ मुच्छन्दो तुए अज्जउत्तो एसो परुण्णवअणेन ओलम्बिओ तरुअले आलिहिदो ।

वत्स, एष सकुसुमतरुषण्डताण्डवितबर्हिणः किंनामधेयो गिरिः यत्रानुभावसौभाग्यमात्रपरिशेषधूसरशरीरको मूर्च्छंस्त्वयार्यपुत्र एष प्ररुदितवदनेनावलम्बितस्तरुतल आलिखितः ।

लक्ष्मणः—

सोऽयं शैलः ककुभसुरभिर्माल्यवान्नाम यस्मि-
न्नीलः स्निग्धः श्रयति शिखरं नूतनस्तोयवाहः ।
आर्येणास्मिन्

---

'आरभ्योत्पत्तिमामृत्योः कलङ्को यस्य नो भवेत् । स्याच्चैवानुपमा कीर्तिर्महाभागः स उच्यते ॥' इति । उक्तमेवार्थमनुमोदते—**दिष्ट्येति** ॥ सः अयं महाबाहुः दिष्ट्या इति संबन्धः । लब्ध इति शेषः । स्नेहातिशयवशाद्वाक्यापरिपूर्तिः । भ्रातर्दूरे भ्रमसि किमितस्तावदित्यादिवत् । **अञ्जनानन्दिवर्धनः** नन्दिर्हर्षः तत्तदपदानादिना निजमातुरञ्जनायाः सुखपरिपोषक इत्यर्थः । तदेवाह—**यस्येति** ॥ **वीर्येण** पराक्रमेण **कृतिनः** सफलचेष्टिताः । भुवनानि चेत्यत्र कृतीनीति लिङ्गविपरिणामेनानुषञ्जनीयम् । वत्स एष सकुसुमतरुषण्डताण्डवितबर्हिणः किंनामधेयो गिरिः । यत्रानुभावसौभाग्यमात्रपरिशेषधूसरशरीरको मूर्च्छंस्त्वया आर्यपुत्र एष प्ररुदितवदनेनावलम्बितस्तरुतले आलिखितः । सकुसुमे तरुषण्डे ताण्डविताः संजाततण्डवा बर्हिणा मयूरा यस्मिन् सः । **यत्र** यस्मिन् । अनुभावः सौभाग्यं च अनुभावसौभाग्यम् तावन्मात्रं परिशेषो यस्य तत्तथोक्तम् तथाभूतं धूसरं च शरीरं यस्येति बहुव्रीहिगर्भो बहुव्रीहिः । अथवा अनुभावजनितं सौभाग्यमनुभावसौभाग्यमिति शाकपार्थिवादिः । **मूर्च्छन्** प्रमुग्धः । **प्ररुदितवदनेन** प्ररुदितं रोदितुमारब्धं वदनं यस्य तेन । आदिकर्मणि क्तः । **अवलम्बितो** विधृतः । **तरुतले** वृक्षमूले । अथ सीतापरिपृष्टं सप्रपञ्चमावेदयितुमारभते—**सोऽयमिति** ॥ **ककुभसुरभिः** ककुभैरर्जुनकुसुमैः सुरभिः सौरभ्ययुक्तः । **माल्यवान्नाम** माल्यवानिति प्रसिद्धः । **यस्मिन्** शैले **नीलः** प्रावृडारम्भसंभृतकान्तिः **स्निग्धः** नीलिमोत्कर्षविशेषलसितः **नूतनः** विमलसलिलाप्यायमानमूर्तिः । अथ लक्ष्मणवचनसमुद्बुद्धमाल्यवदुपत्यकावृत्तविवशहृदयस्तदुक्तिमाक्षिपन्नाह—

**रामः**—

> विरम विरमातः परं नास्मि सोढा[1]
> प्रत्यावृत्तः स पुनरिव मे जानकीविप्रयोगः ॥ ३२ ॥

**लक्ष्मणः**—अतः परमार्यस्य तत्रभवतां कपिराक्षसानां चासंख्यातान्युत्तरोत्तराणि कर्मान्तराण्याश्चर्याणि । परिश्रान्ता चेयमार्या । तद्विज्ञापयामि विश्रम्यतामिति ।

**सीता**—अज्जउत्त इमिणा चित्तदंसणेण समुप्पण्णदोहलाए अत्थि मे विण्णाविअम् ।

आर्यपुत्र, अनेन चित्रदर्शनेन समुत्पन्नदोहदाया अस्ति मे विज्ञाप्यम् ।

**रामः**—नन्वाज्ञापय ।

**सीता**—जाणे पुणोवि पसण्णगम्भीरासु वणराईसु विहरिस्सं पवित्तसोम्मसिसिरावगाहं भअवदिं भाईरहिं ओगाहिस्सं ।

जाने पुनरपि प्रसन्नगम्भीरासु वनराजिषु विहरिष्ये पवित्रसौम्याशिशिरावगाहां भगवतीं भागीरथीमवगाहिष्ये ।

---

**विरमेति** ॥ आवेगातिशयवशात् द्विर्वचनम् । प्रार्थनायां लोट् । **अतः परं** अस्मादुपरितनवृत्तकथनं दर्शनं च **न सोढा** सोढुं न समर्थः । कुत इत्यत्राह—**प्रत्यावृत्त इति** ॥ प्रतिनिवृत्त इत्यर्थः । **सः** पूर्वानुभूतः **मे** निमेषान्तरमप्यसहमानस्य । **तत्रभवताम्** अतिरिक्तबाहुबलशालितया सकललोकसंमतानां **कपिराक्षसानां** कपीनां राक्षसानां च **असंख्यातानि** अपरिच्छिन्नानि **उत्तरोत्तराणि** उपर्युपरि वीरमनोहराणि **कर्मान्तराणि** अपदानविशेषाः **आश्चर्याणि** सकललोकविस्मापनानि । **विश्रम्यतां** विरम्यताम् । चित्रदर्शनादिति शेषः । आर्यपुत्र अनेन चित्रदर्शनेन समुत्पन्नदोहलाया अस्ति मे विज्ञाप्यम् । जाने पुनरपि प्रसन्नगम्भीरासु वनराजिषु विहरिष्ये पवित्रसौम्याशिशिरावगाहां भगवतीं भागीरथीमवगाहिष्ये । **जाने** अभिरोचये । अत्र ज्ञानमात्रस्यानुपयोगात जानातिस्तद्विशेषभूतेऽभिलाषार्थेऽभिसंक्रामति । वाक्यार्थः कर्म । **प्रसन्नगम्भीरासु** प्रसन्नासु गम्भीरासु चेति कर्मधारयः । प्रसन्ना मनोऽनुकूलाः । गम्भीरा अपरिमेयपरिपोषाः । **वनराजिषु** वनपरंपरासु । **पवित्रसौम्यशिशिरावगाहां** पवित्रः पावनः सौम्यो मनःप्रीतिकरः शिशिरः संतापहरश्चावगाहो

---

१. न क्षमोऽस्मि

**रामः**—वत्स लक्ष्मण ।

**लक्ष्मणः**—एषोऽस्मि ।

**रामः**—वत्स, अचिरादेव संपादनीयो दौहद इति संप्रत्येव गुरुभिः संदिष्टम् । तदस्खलितसंपातं रथमुपस्थापय ।

**सीता**—अज्जउत्त, तुह्मेहिं वि तहिं[1] गन्दव्वम् ।

आर्यपुत्र, युष्माभिरपि तत्र[2] गन्तव्यम् ।

**रामः**—अयि कठिनहृदये, एतदपि वक्तव्यमेव ।

**सीता**—तेण हि पिअं मे । तेन हि प्रियं मे ।

**लक्ष्मणः**—यदाज्ञापयत्यार्यः । (इति निष्क्रान्तः ।)

**रामः**—प्रिये, इतो वातायनमुखे[3] संविष्टा भव ।

**सीता**—एव्वं होदु । पीडिआ[4] खु परिस्समजणिदाए णिद्दाए ।

एवं भवतु । पीडिता[5] खलु परिश्रमजनितया निद्रया ।

**रामः**—तेन हि निरन्तरमवलम्बस्व मामनुशयनाय[6] ।

---

यस्यास्ताम् । अचिरेत्यादिनाष्टावक्रवचनमनुस्मारयति । **अस्खलितसंपातम्** अव्याहतगतिम् । **उपस्थापय** सन्निधापय । आर्यपुत्र युष्माभिरपि तत्र गन्तव्यम् । अयीति संबोधनकाक्का नायमेतादृशवियोगाचिन्तावसर इति व्यज्यते । कठिनहृदय इत्यनेन चित्रदर्शनजनितं मम वैक्लव्यातिशयमवगम्य न खल्वीदृशं संभावयितुं तव समुचितमिति । **एतदपि** तव गमनेऽस्मत्साहाय्यमपि । **वक्तव्यमेवेति** ॥ अनुक्तमप्येतत् संपत्स्यत एवेति काक्का प्रकाश्यते । तेनहि प्रियं मे । इत इति सप्तम्यर्थे तासिः । **वातायनमुखे** वातायनोपकण्ठे शिशिरपवनसंचारमार्ग इति यावत् । **संविष्टा भव** उपविष्टा भव सम्यङ्निद्रिता भवेति वा । 'स्यान्निद्रा शयनं स्वापः स्वप्नः संवेश इत्यपि' इत्यमरः । एवं भवतु पीडिता खलु परिश्रमजनितया निद्रया । **तेन हीति** ॥ यदि निद्रा त्वां बाधते तर्हीत्यर्थः । **निरन्तरं** निबिडतरं यथेति क्रियाविशेषणम् । **अवलम्बस्व** समाश्रय । **मां** त्वत्परिचरणपरायणम् । **अनु** पश्चात् । मया त्वय्यवलम्बितायां पुनरहमपि सम्यगवलम्बनीय इत्यर्थः । **शयनाय** शयनलाघवमुपपादयितुम् । तुमर्थाच्चेत्यादिना चतुर्थी । अवलम्बनप्रकारमेव कथयति—**जीवयन्निति** ॥ बाहुः अधिकण्ठं अर्प्यतामिति संबन्धः । **अधिकण्ठं** कण्ठे । विभक्त्यर्थेऽव्ययीभावः । **अर्प्यतां** निधीयताम् । न केवलं

---

१. आगंदव्वम् २. आगन्तव्यम् ३. वातायनोपकण्ठे ४. ओहरिदह्मि परिस्समजणिदाए णिद्दाए ५. अपहृतास्मि परिश्रमजनितया निद्रया ६. मामनुगमनाय

**जीवयन्निव ससाध्वसश्रमस्वेदबिन्दुरधिकण्ठमर्प्यताम् ।**
**बाहुरैन्दवमयूखचुम्बितस्यन्दिचन्द्रमणिहारविभ्रमः ॥ ३४ ॥**

(तथा कारयन्सानन्दम् ।) प्रिये, किमेतत् ।

**विनिश्चेतुं शक्यो न सुखमिति वा दुःखमिति वा**
**प्रमोहो निद्रा वा किमु विषविसर्पः किमु मदः ।**
**तव स्पर्शे स्पर्शे मम हि परिमूढेन्द्रियगणो**
**विकारश्चैतन्यं जडयति च संमीलयति च ॥ ३५ ॥**

शयनसौकर्यायैवेत्याह—**जीवयन्निति** ॥ इवशब्दोऽवधारणे । चित्रदर्शनजनितेन विरहानुसंधानेन क्लान्तचेतनं मामाप्याययन्नित्यर्थः । अत्र हेतुमाह—**ऐन्दवमयूखचुम्बितस्यन्दिचन्द्रमणिहारविभ्रम इति** ॥ ऐन्दवमयूखैश्चन्द्ररश्मिभिश्चुम्बितस्य संस्पृष्टस्य, अत एव स्यन्दिनः स्यन्दवतः चन्द्रमणिहारस्य विभ्रमो विलासो यस्य सः । हारशब्दः करिकलभन्यायेन मालावाचकः । चन्द्रमणिहारसादृश्यमुपपादयति—**ससाध्वसश्रमस्वेदबिन्दुरिति** ॥ रावणापहरणाद्यालेख्यदर्शनजनितेन साध्वसेन श्रमेण च जनिताः स्वेदबिन्दवो यस्मिन् सः । अत्र निदर्शनालंकारः । बाहोश्चन्द्रमणिहारविभ्रमसंबन्धस्यासंभवेनौपम्ये पर्यवसानात् । तदुक्तं—'निदर्शना, अभवद्वस्तुसंबन्ध उपमापरिकल्पकः' इति । काव्यलिङ्गं चास्या अनुग्राहकमिति संकरः । अथ प्रियतमानिरतिशयस्पर्शानुभवविवशहृदय आह—**प्रिये किमेतदिति** ॥ एतच्छब्दो वक्ष्यमाणपरामर्शकः । **विनिश्चेतुमिति** ॥ तव स्पर्शे स्पर्शे विकारः मम चैतन्यं जडयति च संमीलयति च इत्यन्वयः । वीप्सायां द्विर्वचनम् । विकारशब्देन पूर्वस्मादवस्थान्तरमनुभवामीत्येतावन्मात्रमेव जानामीति द्योत्यते । **जडयति** जडं करोति । स्वपरस्वीयादिविभागानभिज्ञं करोतीत्यर्थः । **संमीलयति** आच्छादयति । बोधमात्रमप्यपाकरोति । ननु विकारश्चेत् कीदृश इति प्रतीयत इत्यत्राह—**सुखमिति वा दुःखमिति वा विनिश्चेतुं न शक्य इति** ॥ कुत इत्यत्राह—**परिमूढेन्द्रियगण इति** ॥ परिमूढो विषयग्रहणासमर्थ इन्द्रियगणो यस्मिन् सः । हिर्हेतौ । अथ प्रतिक्षणसमुदयिमानमिन्द्रियावसादमुत्प्रेक्ष्य कीदृशोऽयमिति संदिहान आह—**प्रमोह इति** ॥ दोषप्रकोपजनितः कश्चिद्व्याधिविशेषोऽयमित्युपदेशः । ननु बाह्याभ्यन्तरकरणोपरमाच्छिलावदवस्थानं मोहः किं पुनस्तथाविधोऽयमित्यत्राह—**निद्रा वेति** । ननु निद्रा नाम चैतन्यनिमीलनादन्तःकरणविलये सति बाह्येन्द्रियविलयः । तथा खलूक्तं शारीरके—'विहाय देहभारं च करणानि विसृज्य च । हृदयं

१. भ्रमयति

सीता—थिरप्पसादा तुह्मे इदो दाणिं किं अवरम् ।
स्थिरप्रसादा यूयमित इदानीं किमपरम् ।

रामः—

म्लानस्य जीवकुसुमस्य विकासनानि[1]
संतर्पणानि सकलेन्द्रियमोहनानि ।
एतानि ते सुचरितानि[2] सरोरुहाक्ष्याः
कर्णामृतानि मनसश्च रसायनानि ॥ ३६ ॥

च परित्यज्य यदा वा मणिपूरकम् ॥ शनैः प्रयाति जीवोऽसौ स्वप्नावस्था हि सा स्मृता ।' इति । इहतु प्रथमं त्वगिन्द्रियविलयः पुनरितरबाह्येन्द्रियविलयः पश्चादन्तःकरणविलयः ततश्चैतन्यनिमीलनमित्यत्राह—**किमु विषविसर्प इति** ॥ ननु हृदयतापशरीरसादादिजनकतया विषविसर्पो दुःखैकरूप एवेत्यत्राह—**किमु मद इति** ॥ अयमपि व्याधिभेदः । ननु शिरःपरिवर्तादिङ्मोहाद्यभावान्मदस्याप्यभाव एव अत इदानीमीदृशः कोऽपि विकारो जायत इति किमेतदिति संबन्धः । अत्र ससंदेहालंकारः, विषयस्य संदिह्यमानत्वात् । तदुक्तम्—'ससंदेहस्तु भेदोक्तौ तदनुक्तौ च संशयः' इति । एष च भेदोक्तेर्गम्यत्वेऽपि कण्ठोक्तेरभावात् शुद्ध एव । **स्थिरप्रसादा यूयमित इदानीं किमपरं** मयि प्रसादातिशयस्तवैवं प्रीतौ कारणमित्यर्थः । सीतावचनमाक्षिपति—**म्लानस्येति** ॥ ते एतानि सुचरितानि कर्णामृतानि मनसः रसायनानि च इत्यन्वयः । **ते** अबलाकुलमौलिभूतायाः **एतानि** मयेदानीमनुभूयमानानि **सुचरितानि** शोभनानि चरितानि कथासमुचितानि चेष्टितानीत्यर्थः । गतिस्थित्यालापादीनीति यावत् । **कर्णामृतानि** श्रवणरसायनानि श्रोतॄणां सर्वेषामेवेत्यर्थात् । **मनसः** बाह्येन्द्रियद्वारा तत्तद्विषयमनुभूय सम्यग्विज्ञातुः इत्यर्थः । **रसायनानि** प्रीतिकराणि । विचारदशायामपि मधुराणीति यावत् । अत्र कारणमाह—**सरोरुहाक्ष्या इति** ॥ यत्राकृतिस्तत्र गुणा वसन्तीति न्यायेन गुणानामाकृतिवैशिष्ट्याविनाभावादतिलोकगुणगणमहितायाः इत्यर्थः । अत्र कर्णामृतानीति मनसश्च रसायनानीति च निखिलश्रोतृजनविषयतया व्याख्येयम् । अन्यथा पौनरुक्त्यदोषापत्तेः । स्वानुभवप्रकारश्च कथमित्यत्राह—**म्लानस्येति** ॥ चिरदर्शनोद्बुद्धविरहभावनापरिक्षीणस्येत्यर्थः । **जीवकुसुमस्य** जीवस्यैव कुसुमस्य **विकासकानि** समुल्लासकराणि । **संतर्पणानीति** ॥ निखिलशरीरधातुप्रहर्षणत्वसाधर्म्याच्चिकित्साशास्त्रविहितबृंहणरूपतया सुचरितानामध्यवसायः । तथाच वाहटः 'उपक्रम्यस्य हि द्वित्वात्

१. विकासकानीति व्याख्यातृसंमतः पाठः २. सुवचनानि

सीता—पिअंवद एहि संविसह्म । प्रियंवद, एहि संविशावः ।

(इति समन्ततः पश्यति ।)

रामः—अयि किमन्वेष्टव्यम् ।

आविवाहसमयाद्गृहे वने शैशवे तदनु यौवने पुनः ।
स्वापहेतुरनुपाश्रितोऽन्यया रामबाहुरुपधानमेष ते ॥ ३७ ॥

द्विधैवोपक्रमो मतः । एक संतर्पणस्तत्र द्वितीयश्चापतर्पणः ॥ बृंहणं लङ्घनं चेति तत्पर्यायावुदाहृतौ । बृंहणं यद्बृहत्त्वाय लङ्घनम् लाघवाय यत् ॥ देहस्य भवतः प्रायो भौमापमितरच्च ते ।' इति । **सकलेन्द्रियमोहनानि** सकलेन्द्रियप्रीतिकराणि । एकेन्द्रियास्वाद इतरेन्द्रियाणामपि स्वस्वविषयविनिवर्तनेन तस्मिन्ननुप्रवेशात् सुचरितानां सकलेन्द्रियमोहनत्वमुपपद्यते । सुचरितानां पुनश्चक्षुरादीन्द्रियद्वारा शरीरधातुसंतर्पणत्वं तद्द्वारा च जीवकुसुमविकासकत्वम् । अत्र केचित् सुवचनानीति पाठमङ्गीकृत्य पौनरुक्त्यपरिहाराय प्रयतन्ते तदसारम् । पौनरुक्त्यस्य तादवस्थ्यात् । ननु सकलेन्द्रियमोहनानीत्यनेन सकलानां जनानामपीन्द्रियसामान्यमोहनत्वमभिधाय पश्चात्तद्विशेषाकांक्षायां सुवचनानां कर्णामृतत्वं मनसो रसायनत्वं च विधीयते इति व्याख्याने न पौनरुक्त्यमिति चेत् मैवम् वचनानामेवात्र विषयत्वात्तस्य चान्येन्द्रियग्राह्यताभावादिन्द्रियशब्दस्य सामान्यवाचित्वेऽपि श्रोत्ररूपे विशेष एव पर्यवसानात् स्फुटतरमेव पौनरुक्त्यप्रतीतेः । किंच सुवचनानीति बहुवचनस्यापि न काचित् गतिः । 'थिरप्पसादा तुह्मे इदो दाणिं किं अवरम्' इति केवलमेकस्यैव वचनस्यैतानीत्यनेन परामर्शनीयत्वात् । सुचरितानीति पाठे तु चित्रदर्शनमारभ्य वातायनमुखगमनपर्यन्तेषु चरितेषु वागिन्द्रियचेष्टाया अप्यन्तर्भावान्न काचिदनुपपत्तिः । ननु पदानामनेकत्वाद्बहुवचनोपपत्तिरिति चेन्मैवम् । एकार्थप्रतिपादनपरतयोपात्तानां हि पदानां तात्पर्यार्थस्य प्रत्येकमसंभवाद्वाक्यस्यैव वचनत्वोपपत्तेः । अतोऽस्मदुक्तैव व्याख्या सहृदयहृदयानुरञ्जिनीत्यास्तां तावत् । अत्र सुचरितानां संतर्पणत्वेन रूपणाद्रूपकमलंकारः । निरवयवत्वाच्चैतच्छुद्धम् । तदुक्तम्—निरङ्गं तु शुद्धमिति । पुनश्च तेषामेव कर्णामृतत्वादिरूपणान्मालारूपं च तत् । तदप्युक्तम्—माला तु पूर्ववदिति । प्रियंवद एहि संविशावः । प्रियमेव वदतीति प्रियंवदः । यौगिकी चेयं तादर्थिकी संज्ञा । इतिशब्द उक्तौ । **समन्ततः पश्यतीति** ॥ निद्रोपकरणवाञ्छया पारतो दृष्टिं व्यापारयतीत्यर्थः । किमिदानीमितरवस्तुगवेषणयेत्याह—**अयीति** ॥ किंशब्दः क्षेपे । सततमपीप्सितसंनिधाने किमर्थमन्यदन्विष्यते इत्यर्थः । किं वा पुनस्तादित्यत्राह—**आविवाहसमयादिति** ॥ ते उपधानमेष इति संबन्धः । ते अस्मदुच्छ्वसितहेतुभूतायाः । **उपधानम्**

सीता—(निद्रां नाटयन्ती) अत्थि अज्जउत्त, एदप्प अत्थि ।

अस्ति । आर्यपुत्र, एतदस्ति । (इति स्वपिति ।)

रामः—कथं प्रियवचना वक्षसि सुप्तैव । (विचिन्त्य)

इयं गेहे लक्ष्मीरियममृतवर्तिर्नयनयो-
रसावस्याः स्पर्शो वपुषि बहुलश्चन्दनरसः ।
अयं बाहुः कण्ठे शिशिरमसृणो मौक्तिकसरः
किमस्या न प्रेयो यदि परमसह्यस्तु विरहः ॥ ३८ ॥

---

उपबर्हणम् । एष इत्यभिनीयोक्तिः । कथमस्योपधानतेत्यत्राह—**रामबाहुरिति** ॥ बाहुर्व्यपदेशः । परामार्थतस्तु तवोपधानमेवेत्यर्थः । कुत इत्यत्राह—**स्वापहेतुरिति** ॥ अनर्घतरोपधानान्तरसंनिधानेऽपि तदुपरि मम बाहुमुपधायैव तव निद्रासुखलाभ इति भावः । सर्वं खलु वस्तुजातं देशवशात्कालवशाद्वा हृद्यतरं भवति अस्य पुनस्तन्नियमो नास्तीत्याह—**आविवाहसमयादिति** ॥ विवाहसमयमारभ्येत्यर्थः । **गृहे** अयोध्यानिवासे **वने** वनवासे **शैशवे** उपलाळनैकसाध्ये वयसि **यौवने** द्विविधकरणोपचारक्षमे । पुनश्शब्दो विशेषे । सर्वथाप्यभिनन्दनीयतामाह—**अनुपाश्रितोऽन्ययेति** ॥ त्वामन्तरेण कयापि नोपधानीकृत इत्यर्थः । अत्र बाहोरुपधानत्वेन रूपणाद्रूपकमलंकारः । तदुक्तम्—'तद्रूपकमभेदो य उपमानोपमेययोः' इति । आरोप्यमाणस्योपधानस्य प्रकृते स्वापकार्योपयोगात् परिणामो वा । तदुक्तम्—'आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणाम' इति । अस्ति आर्यपुत्र एतदस्ति । इतिशब्द उक्तौ । इत्युक्त्वा स्वपितीत्यर्थः । **वक्षसि सुप्तैवेति** ॥ एवशब्दो भिन्नक्रमः । वक्षस्येवेति । **विचिन्त्येति** ॥ एवं विस्रम्भातिशयवशात् स्ववक्षस्येव निद्रासुखमनुभवन्त्याः सीताया अनितरसाधारणं गुणातिशयं विमृश्येत्यर्थः । आहेति शेषः । वचनप्रकारमेव कथयति—**इयमिति** ॥ **इयं** अस्मदुरसि निद्रायमाणा । **गेहे** निखिलसम्पत्संपादनसमुचिते **लक्ष्मीः** पुष्टिकारिणी देवता । **अमृतवर्तिः** अमृतरूषिता वर्तिः । **बहुळः** प्रचुरः **चन्दनरसः** चन्दनद्रवः । **शिशिरमसृणः** शिशिरश्च मसृणश्चेति कर्मधारयः । शिशिरः शीतळः । मसृणो मृदुः । **मौक्तिकसरो** मौक्तिकदाम । अत्रेदृशानां गुणातिशयानामितरमहिलाजनसंबन्धिताभावानुसंधानादिदमः प्रतिवाक्यमुपादानम् । एवमेतत्संबन्धिनामन्वयमुखेन हृद्यत्वं प्रतिपाद्य व्यतिरेकेणापि तत् कथयति—**किमस्या इति** ॥ **प्रेयो** मनोहरम् । अथ सर्वाकाररमणीयतानुसंधानादपायदर्शी स्नेह इति न्यायेन यन्मनोहरं न भवति तदेतत्संबन्धि न भवतीति व्याप्तेः व्यापकविरुद्धोपलब्धिमाशङ्कते—**यदीति** ॥ यदिपरमिति परप्रकृतान्यथात्वे निपातसमुदायः ।

(प्रविश्य)

**प्रतीहारी**—देव, उवट्ठिदो। देव उपस्थितः।

**रामः**—अयि, कः।

**प्रतीहारी**—आसण्णपरिआरओ दुम्मुहो देवस्स।

आसन्नपरिचारको दुर्मुखो देवस्य।

**रामः**—(स्वगतम्) शुद्धान्तचारी दुर्मुखः। स मया पौरजानपदेष्वपसर्पः प्रयुक्तः। (प्रकाशम्) आगच्छतु।

(प्रतीहारी निष्क्रान्ता।)

(प्रविश्य)

**दुर्मुखः**—(स्वगतम्) हा कहं दाणिं सीतादेविं अन्तरेण ईरिसं अचिन्तणिज्जं जणाववादं देव्वस्स कहइस्सं। अहव णिओओ क्खु मे ईरिसो मन्दभाअस्स।

हा कथमिदानीं सीतादेवीमन्तरेणेदृशमचिन्तनीयं जनापवादं देवस्य कथयिष्ये। अथवा नियोगः खलु म ईदृशो मन्दभाग्यस्य।

---

एतत्संबन्धिष्वमनोहरं किंचिद्वक्तव्यं चेत् केवलं विरह एवेत्यर्थः। तुशब्दः पक्षव्यावृत्तौ। अपि नाम एवंविधायाः पूर्ववत् कदाचिदपि न वियोगदुःखमनुभवेयमिति भावः। अत्र सीतायां लक्ष्मीत्वाद्यारोपणाद्रूपकमलंकारः। देव उपस्थितः। आसन्नपरिचारको दुर्मुखो देवस्य। आसन्नोऽभ्यन्तरचारी परिचारको दासः स्नानशयनाद्यधिकारनियुक्त इत्यर्थः। **पौरजानपदेष्विति** ॥ पौरेषु जानपदेष्वपीत्यर्थः। **अपसर्पः** चरः। 'अपसर्पश्चरः स्पश' इत्यमरः। **प्रयुक्तः** प्रहितः। अपसर्पं विधाय प्रेषित इति यावत्। हा कथमिदानीं सीतादेवीमन्तरेण ईदृशमचिन्तनीयं जनापवादं देवस्य कथयिष्ये। हेति विषादानुभावः। कथमिति वितर्के। जनापवादं कथं कथयिष्ये इति संबन्धः। जनकथितोऽपवादो जनापवादः तम्। ननु लोकप्रसिद्धमेव त्वया कथनीयं ननु स्वकपोलकल्पितं किमपीत्यत्राह—**देवस्येति** ॥ ननु लोकप्रवादपरिज्ञानार्थमेव त्वं प्रेषितः इत्यत्राह - **सीतादेवीमन्तरेणेति** ॥ ननु त्वत्प्रेषणे तस्यापि परिज्ञेयतास्त्येवेत्यत्राह—**ईदृशमिति** ॥ कष्टतरत्वान्निर्देशानर्हमित्यर्थः। ननु तादृशमवगम्यैव परिहरणीयमित्यत्राह—**अचिन्तनीयमिति** ॥ सर्वाकारेणाप्यश्रद्धेयतया चिन्तयितुमप्यनुचितमित्यर्थः। ननु रावणभवनोषितायाः सीताया अपवादस्य कथमचिन्तनीयत्वमित्यत्राह—**इदानीमिति** ॥ अग्निप्रवेशादिसुचरितश्रवणेन निखिलजनविस्मयसमये

**सीता**—(स्वप्नायमाना) हा सोम्म अज्जउत्त, कहिं सि ।

**हा सौम्य आर्यपुत्र, कस्मिन्नसि ।**

**रामः**—सेयमेव रणरणकदायिनी चित्रदर्शनाद्विरहभावना देव्याः स्वप्नोद्वेगं करोति । (सस्नेहमङ्गमस्याः परामृशन् ।)

**अद्वैतं सुखदुःखयोरनुगतं सर्वास्ववस्थासु य-**
**द्विश्रामो हृदयस्य यत्र जरसा यस्मिन्नहार्यो रसः ।**

---

इत्यर्थः । कथनं विना का वा मम गतिरित्यत्राह—**अथवेति** ॥ अथवा नियोगः मे ईदृशो मन्दभाग्यस्य । **स्वप्नायमाना** स्वप्नमनुभवन्ती । सुखादिभ्यः कर्तृवेदनायामिति क्यङ् । आहेति शेषः । हा सौम्य आर्यपुत्र कस्मिन्नसि । **सौम्य** अप्रतिकूलचेष्टित । **कस्मिन्नसि** मां विहाय कुत्र गतोऽसि । **रणरणकदायिनी** हृदयवेदनादायिनी **विरहभावना** विरहस्य भावना । चित्रविलिखितविरहवृत्तदर्शनात्तद्भावभावनेत्यर्थः । **स्वप्नोद्वेगं** स्वप्नं विधाय पीडां करोतीत्यर्थः । जाग्रदवस्थायां दर्शनादिनाऽनुभूतं हि स्वप्ने पश्यति । तदुक्तं वाहटेन—'दृष्टः श्रुतोऽनुभूतश्च कल्पितः प्रार्थितस्तथा । भाविको दोषजश्चैव स्वप्नः सप्तविधः स्मृतः ॥' इति । एवं स्वत एव सीताया गुणगणार्णवनिमग्नहृदयश्चित्रदर्शनोद्बुद्धचतुर्दशसंवत्सरस्ववृत्ततया प्रत्यक्षमिव तस्यास्तत्तत्प्रदेशेषु परित्यक्तस्वशरीरं स्थिरानुवृत्तिसूचितं स्वविषयमनुरागातिशयमुपलभ्य स्वप्रमादादेव तस्यास्तादृशं व्यसनमनुचिन्त्य तस्यामप्यशक्तिसमुद्घोषणादिस्वव्यापारमनुस्मृत्य तस्य च शुद्धवंशसमुद्भूतायाः समग्रनायिकागुणमहितायाः ह्यलब्धपदतां चाकलय्य निर्वेददैन्यधृतिजडताहर्षचिन्तास्मृतिव्रीलामोहवितर्कमतिविषादशोकविस्मयादिव्यभिचारिवर्गतरङ्गिताशयः परमधीरोदात्तः परमानुकूलो महानायकः तामेवोत्तमनायिकां स्वसन्निकर्षाद्व्रीळाहर्षजडतावेपथुस्वेदसादादिभिरालिङ्गितां सत्सन्ततिगर्भां गर्भपरिश्रमालसामत एव विशेषमनोहरां स्ववक्षसि स्वप्नसुखमनुभवन्तीं निर्जितस्वाराज्ये स्वपुरे समुत्तुङ्गसौधोपरिवातायनसन्निकर्षे सहस्रयुगपरितृषितपीयूषरसक्रमेणानुभवन् परिबृंहितनिर्वृतिस्तस्याः स्वप्नप्रलापश्रवणाद्वियोगं प्रति अधिककातरः सन् निद्राभङ्गभयेन मृदुतरकरतलपरामर्शनेनाऽलिङ्गनमाचरन्नुन्मत्त इवानुभूयमानाया निर्जितजीवपरैक्यसुखाया दशायाः स्वयोरपरिच्युतिमाशंसते—**अद्वैतमिति** ॥ तस्य सुमानुषस्य भद्रमित्यन्वयः । अत्र भद्रशब्दयोगे षष्ठीविधानात्तस्याश्च श्रुतत्वात् भूयादिति गम्यते । ततश्च वाक्यस्य न न्यूनपदत्वं दोषः अध्याहारदोषो वा व्याख्यानस्य उपादानस्य प्रतीतिफलत्वात् । तस्येत्यनेन लोकोत्तरत्वादहमहमिकया बुद्ध्युपारूढं यद्वृत्तवाक्यार्थ-

---

१. उत्स्वप्नायते

**कालेनावरणात्ययात्परिणते यत्स्नेहसारे स्थितं**
**भद्रं तस्य सुमानुषस्य कथमप्येकं हि तत्प्रार्थ्यते[1] ॥ ३९ ॥**

सर्वस्वं सुमानुषं संक्रमयता तद्भद्रस्याशास्यत्वं द्योतयति । मानुषस्य भावो मानुषम् । युवादित्वात् भावे णः । भावशब्दश्च प्रवृत्तिनिमित्तवचनः । तच्च तेषामसाधारणः सर्वावयवानुगतो धर्मः । इहतु तस्य जन्मनान्तरीयकतया तत्फलं लक्ष्यते । फलं च यदर्थं सर्वं यच्च नान्यार्थमित्युक्तनीत्या पुमर्थत्वेन प्रसिद्धं विषयसुखमेव । नायकस्य परमश्रृङ्गारित्वात् । श्रृङ्गारिणो हि परब्रह्मसुखमप्यातिक्रम्य विषयसुखमेव सर्वोत्तरत्वेन बहुमन्यन्ते । यथा च रघुवंशे—'प्रेक्ष्य दर्पणतलस्थमात्मनो राजवेषमतिशक्रशोभिनम्' इत्यादि । साध्यसाधनभावश्च संबन्धः । यदुक्तम्—'न ध्यातं पदमीश्वरस्य विधिवत्' इत्यादि । लक्षणाफलं तु तदलभमानानां पशुप्रायत्वप्रकाशनम् । शोभनं मानुषं सुमानुषम् । शोभनत्वं चात्र परिपूर्णत्वम् । तच्च नायकयोरन्योन्यानुरागसाम्यनिश्चयात्मकचित्तवृत्त्यायत्तम् । तदुक्तम्—परस्परप्राप्तिनिराशयोर्वरमित्यादि, कामं प्रियेत्यादि, प्रेमार्द्राः प्रणयस्पृश इत्यादि, एकस्सुभ्रूर्विधेयेत्यादि च । **भद्रं** कल्याणम् । क्षणिकस्यापि वियोगदुःखस्याननुवेधादधरितपरब्रह्मास्वादीनिरुपमपरमानन्दैकहेतुतयावस्थानम् । अयमर्थः । अप्राप्तवियोगप्रसंगाम् अननुभूतानन्दातिशयदायिनीं प्रतिक्षणविवृद्धौत्सुक्यामीदृशीं प्रेममूर्च्छनादशामासेदुषोरावयोराजीवनान्तमविघ्नेन सर्वदैवानन्दमयीभवत्सकलेन्द्रियमानन्दानुभवो भूयादिति । इयं चाशंसनरूपा चित्तवृत्तिरङ्कुरितेव सपदि नायकस्वभावमहिम्ना पुनरेतादृशदशाविवशमिथुनसामान्यविषयतया परिणतेत्यवसेयम् । ततश्चाप्रस्तुतप्रशंसाभेदोऽयम् । तद्वृत्ताकांक्षितयद्वृत्तवाक्यान्युपन्यस्यन् प्रथमं तावदस्य सुखान्तरवद्दुःखसंपर्कराहित्यं प्रकटयति—**अद्वैतमिति** ॥ यत्सुखदुःखयोरद्वैतं भवतीति शेषः । सुखदुःखयोरिति सप्तमी । अधिकरणपरत्वादेकवद्भावाभावः । द्वितैव द्वैतं ऊनातिरेकरूपो भेद इत्यर्थः । तन्न विद्यते यस्मिन् । दुःखकारणानि न न्यूनतामापादयन्ति सुखकारणानि नोद्दीपयन्ति । स्वयमपरिच्छिन्नत्वात् यथोदधेरासारावग्रहवशाद्वृद्धिह्रासाभावः । यदुक्तम् एणीदृशामित्यादि सर्वत्र दयिताधीनमित्यादि च । इदं च वनवासाद्यनुभूताभिप्रायम् । यदुक्तम्—उद्यानं वनभूमय इत्यादि । नापि सजातीयविजातीयभावान्तरैरुपहतिरिति दर्शयति—**यत्सर्वास्ववस्थास्वनुगतमिति** ॥ सर्वासु देवतार्चनपितृपूजागुरुशुश्रूषादिष्ववश्यश्रद्धेयास्वपीत्यर्थः । अनुगतम् भावान्तरस्य न्यग्भावकत्वेन सर्वदानुस्यूतमित्यर्थः । ऐन्द्रपदादीनामपि अस्मादर्वाचीनतैवेत्याह—**यत्र हृदयस्य विश्राम इति** ॥ हृदयस्य उपर्युपरि सुखलिप्सोः विश्रामः कृतार्थतया सुसुखमवस्थानम् । अस्मिन्

१. प्राप्यते.

स्ति सर्वमनोरथानतिक्रम्य पुरुषः संपन्नमनोरथतयावतिष्ठत इत्यर्थः । अने-
नानन्दैकघनत्वमस्य द्योतितम् । तथापि अस्य विषयसुखरूपत्वात्तदुचितवयो-
नैयत्यादिना सुखान्तरसमकक्ष्यतामाशङ्क्य परिहरति—**जरसेति** ॥ यस्मिन्
रसः जरसा अहार्यः सोऽस्यातिशयः । **जरसा** देहे निर्वेदं जनयन्त्या
**अहार्यो** हर्तुमशक्यः । यस्य किंचिन्न्यूनतामपि कर्तुं जरा न पार-
यतीत्यर्थः । अत्र जरसेति जन्मान्तरादीनामप्युपलक्षणम् । तदुक्तम्—रम्याणि
वीक्ष्येत्यादि । परिणतौ स्वादुतमत्वमेवास्य स्यादिति दर्शयति—**काले-
नेति** ॥ यत् आवरणात्ययात् कालेन परिणते स्नेहसारे स्थितम् । आवरणं
भावगोपनं अत्ययः उपरतिः तामनुगम्येति ल्यब्लोपे पञ्चमी । परिचयोपजा-
यमानं विस्रम्भमनुगम्येति यावत् । यद्यत्स्वचित्ते स्फुरतीत्यादि विस्रम्भस्य लक्ष-
णम् । **कालेन** द्विविधकरणोपचारसहितेन । **परिणते** परिपाकं प्राप्ते उपभोग-
योग्यतां प्राप्ते इत्यर्थः । **स्नेहसारे** स्नेहस्याशीर्नित्यताभिलाषास्थानापच्छङ्कादिरू-
पस्य परमकाष्ठायां परस्परजीवितसर्वस्वाभिमानरूपचित्तवृत्तिकारणभूतायां रागाति-
भूम्यां स्थितमित्यर्थः । यदुक्तम्—रतिरङ्कुरितेत्यादि परिचयादुद्गाढरागोदया
इत्युक्तवत् । **स्थितम्** लब्धप्रतिष्ठमित्यर्थः । यद्वा यत्कालेनावरणात्ययात्
परिणते स्नेहसारे स्थितमित्यन्वयः । कालेन द्विविधकरणोपचारसहितेन आवरणं
भावगोपनम् अत्ययः उपरतिः । हेतौ तृतीयापञ्चम्यौ । आभ्यां रतिवीरुधः
कुसुमितावस्थास्थानीयस्नेहरूपावस्थापर्यन्तं विजृम्भणमुक्तम् । यदुक्तं—'बाह्या-
न्तरोपचारैर्यत्प्रेममानोपकल्पितैः । बध्नाति भावाविस्रम्भं सोऽयं प्रणय उच्यते ॥'
इति । 'विस्रम्भे परमां काष्ठामारूढे दर्शनादिभिः । यत्र द्रवत्यन्तरङ्गं स स्नेह
इति कथ्यते ॥' इति च । 'अङ्कुरपल्लवकलिकाप्रसूनफलभागभागियं क्रमतः ।
प्रेमा मानः प्रणयः स्नेहो रागोऽनुरागश्च ॥' इति च । स्नेहसार इति । सारशब्दो
लक्षणया प्रकर्षवाची । स्नेहप्रकर्षभूते राग इत्यर्थः । लक्षणाफलं च तस्य स्थि-
रतरत्वद्योतनम् । यदुक्तम्—'दुःखमप्यधिकं चित्ते सुखत्वेनैव रज्यते । येन
स्नेहप्रकर्षेण स राग इति गीयते ॥' इति । परिणते परमकाष्ठां प्राप्ते ।
माञ्जिष्ठरूप इत्यर्थः । यच्चोक्तमभियुक्तैः—'अचिरेणैव संयुक्तश्चिरादपि न
नश्यति । अतीव शोभते सोऽसौ माञ्जिष्ठो राग उच्यते ॥' इति । स्थितं
परस्परजीवितसर्वस्वाभिमानभूतमित्यर्थः । एतच्च भावसूचितमित्यनेन समानार्थः ।
अथैवं स्वानुभवस्य क्षेममाशंसमानस्तदतिगाढतया हतविधेर्दुर्विलसितमालोक्य
पुनरपि खिन्नमानसः तद्वैकल्यमाशङ्कते—**कथमपीति** ॥ लभ्यमिति शेषः ।
अतिकृच्छ्रेणैव लभ्यमित्यर्थः । औदार्यमेवेदं न भविष्यतीत्यर्थः । चिकीर्षि-
तप्रार्थनासंभ्रमवशादपायचिन्तापारवश्याच्च वाक्यापरिपूर्तिः । मा भवन्तम-
नलः पवनो वेत्यादिवत् । एवमाशङ्कितापायस्तान्निवारणार्थं स्वसुकृतसर्वस्व-

दुर्मुखः—(उपसृत्य) जेदु देव्वो। जयतु देवः।

रामः—ब्रूहि यदुपलब्धम्।

दुर्मुखः—उवट्टवन्ति देव्वं पौरजाणपदा जह विसुमरिदा अह्मे महाराअदसरहं रामदेव्वेणेत्ति।

उपस्तुवन्ति देवं पौरजानपदा यथा विस्मारिता वयं महाराजदशरथं रामदेवेनेति।

---

मुपयुञ्जान आह—एकं हीति ॥ मया तदेकं हि प्राथ्र्यते। हीत्यवधारणे नैवान्यव्यावृत्तौ सिद्धायामप्येकमित्युक्तिरन्यार्थमनुष्ठितान्यपि सुकृतान्यस्मिन्नेव विनियुज्यास्य परिपूरणमावश्यकमिति द्योतयितुम्। अयमर्थः। मया विदितसंसारेण चतुर्वर्गे त्रिकमपहायैतदेकमेव सर्वात्मना प्राथ्र्यते। प्राप्यत इति वा पाठः। प्राप्तुं यत्यत इत्यर्थः। अत्र सुखदुःखहेतुकभेदाभावे हेतुस्तस्य सर्वदानुस्यूतत्वं, तत्र हेतुर्निरतिशयत्वं, तत्र ज्ञापको हेतुर्जरसाप्यहार्यत्वं, तत्र हेतुः सौरूप्यान्तरङ्गगुणनिरपेक्षमनस्वितादिगुणैकनिबन्धनत्वम्। यदुक्तम्—'वैरूप्यमेव सखि तस्य चिराय कांक्षे येनायमन्यवनिताजनवर्जनीयः' 'कळत्रवन्तमात्मानम्' इत्यादि च। 'कल्या मूर्तिः' इत्याद्यपि। किंच सूक्ष्मेक्षिकायां तादृशोरुत्तमनायकयोः सौरूप्यादेर्विनयसौशील्याद्येव परस्परप्रीत्यतिशयहेतुरुपपद्यते। यदुक्तं विच्छिन्नाभिषेकप्रस्तावे सीतया—'दीक्षितं व्रतसंपन्नं वराजिनधरं शुचिम्' इत्यादि। अत्र स्वदारपरिरक्षणापटुत्वाद्यनुस्मृत्या स्वावमाननं निर्वेदः। तेनैव हेतुना निरोजस्कता चित्तस्य दैन्यम्। सीताचित्तवृत्तिस्फुटपरिज्ञानादिना पूर्णार्थता धृतिः। तथैव मनसोऽप्रतिपत्तिर्जडता। दिष्ट्यासौ विपद्गणादुत्तीर्णेति चेतःप्रसादो हर्षः। कथं मया तस्याः पातिव्रत्यमाहात्म्यं जानताऽपि कौलीनमारोपितमिति चिन्ता। अनुभवदाढर्यादनुभूतानामवस्थान्तराणां सातत्येन मनसि सन्निधानात् स्मृतिः। स्वनैष्ठुर्यादिपर्यालोचनया धाष्टर्याभावो व्रीळा। दुःखानुभवेन विचित्तता मोहः। आस्तामनुशोचनं प्राणिनां दुःखानुभवः स्वकर्मणा नियत एवेति तत्त्वज्ञानं मतिः। कदा मया त्यक्तावियोगसंगमसुखमनुभवितव्यमिति विचारस्तर्कः। स्वकृतघ्नतादिपर्यालोचनया सत्त्वसंक्षयो विषादः। शोकस्तदवस्थासमापन्नसीताविभावः करुणस्थायी। विस्मयस्त्वतिलोकसौशील्यदाक्षिण्यपातिव्रत्यमहिमादिसमाश्लिष्टनायिकाविभावः अद्भुतस्थायी। अथ पौरजानपदेभ्यः श्रुतस्य सीतापवादस्याकथनीयतामनुसंदधानो दुर्मुखस्तत्प्रसंगं प्रशंसावचनेन परिहर्तुं साटोपं जयोक्तिं करोति—जेदु देवो इति ॥ जयतु देवः। ब्रूहि सम्यक् कथय। यदुपलब्धमिति ॥ न प्रियाप्रियविचारस्ते भूयादिति भावः। उपस्तुवन्ति देवं पौरजानपदाः। देवमुपस्तुवन्तीति स्वकीयवचनेन सीतापवाद-

रामः—अर्थवाद एषः । दोषं तु कंचित्कथय येन प्रतिविधीयते ।
दुर्मुखः—(साम्रम्) सुणादु देव्वो । (कैण) एव्वं विअ ।
शृणोतु देवः । एवमिव ।
रामः—हहह, तीव्रसंवेशो वाग्वज्रः । (इति मूर्च्छति ।)
दुर्मुखः—अस्ससदु देव्वो । आश्वसितु देवः ।
रामः—(आश्वस्य)

हा हा धिक्परगृहवासगर्हणं य-
द्वैदेह्याः प्रशमितमद्भुतैरुपायैः ।
एतत्तत्पुनरपि दैवदुर्विपाका-
दालर्कं विषमिव सर्वतः प्रसृप्तम् ॥ ४० ॥

कथनं मा प्रसज्येदिति । पौरजानपदानामुपस्तवनप्रकारं कथयति—**जहेति** । यथा विस्मारिता वयं महाराजदशरथं रामदेवेनेति । **अर्थवादः** प्रशंसा । प्रवृत्तिनिवृत्तिरूपपुरुषार्थोपयोगिताभावादर्थवादश्रवणमनर्थमेवेति भावः । किमर्थं तर्हि पौरजानपदेष्वहं प्रेषित इत्यत्राह—**दोषं त्विति** ॥ दोषश्रवणेन किं फलमित्यत्राह—**येनेति** ॥ येन कथनेन प्रतिविधीयते स्वेनैव स्वदोषस्यावगन्तुमशक्यत्वादिति भावः । शृणोतु देवः । एवमेव । हहहेति खेदे । 'हहहेत्यद्भुते खेदे' इत्यमरः । **तीव्रसंवेश इति** ॥ तीव्रोऽसह्यः संवेशो वेदना यस्य सः । संवेशो वेदनेत्यमरः । **वाग्वज्रः** वागेव वज्रोऽशनिः अलक्षितोपनिपातत्वाप्रातविधेयत्वादिसाधर्म्यादध्यवसायः । आश्वासितु देवः । पुनः प्ररूढस्यापवादस्याप्रातिविधेयतामनुसंदधान आह—**हा हेति** ॥ वैदेह्याः तत्परगृहवासगर्हणं एतत् हा हा धिक् इत्यन्वयः । वैदेह्या इत्यनेन गर्हणस्यासंभावनीयता व्यज्यते । **तत्** परोक्षीभूतप्रक्षीणसंकथमित्यर्थः । **परगृहवासगर्हणं** परगृहवासजनितं गर्हणं लङ्कानिवासहेतुकं गर्हणमित्यर्थः । लोककर्तृकमित्यर्थात् । **एतत्** रथ्याजनगाथायमानम् । **हा हा धिगिति** ॥ अहो बतातिदारुणता दैवदुर्विलसितानामिति भावः । ननु तादृशमपि गर्हणं कालेन स्वयमेवोपशाम्येदित्यत्राह—**यत्प्रशामितमिति** ॥ किमु जिह्वाच्छेदादिबिभीषिकयेत्यत्राह—**उपायैरिति** ॥ विशुद्धिबोधकैर्व्यापारैरित्यर्थः । किंवा लौकिकैर्यादृशतादृशैरित्यत्राह—**अद्भुतैरिति** ॥ अतिमानुषैरग्निप्रवेशादिभिरित्यर्थः । तत्तु केवलं न प्रशान्तं प्रत्युत प्रवृद्धमेवेत्याह—**पुनरपीति** ॥ पुनश्शब्दो विशेषे ।

१. अर्थवाद एवैषः । दोषं तु मे कथंचित्कथय येन प्रतिविधीयते । २. परगृहवासदूषणं ३. प्रसक्तम्

तत्किमद्य मन्दभाग्यः करोमि। (विमृश्य सकरुणम्) अथवा किमन्यत्।

सतां केनापि कार्येण लोकस्याराधनं व्रतम्।
यत्पूरितं हि तातेन मां च प्राणांश्च मुञ्चता॥ ४१॥

संप्रत्येव च भगवता वसिष्ठेन संदिष्टम्। अपि च।

यत्सावित्रैर्दीपितं भूमिपालै-
र्लोकश्रेष्ठैः साधु शुद्धं चरित्रम्।
मत्संबन्धात्कश्मला किंवदन्ती
स्याच्चेदस्मिन्हन्त धिङ्मामधन्यम्॥ ४२॥

हा देवि देवयजनसंभवे, हा स्वजन्मानुग्रहपवित्रितवसुंधरे, हा निमिजनकवंशनन्दिनि, हा पावकवसिष्ठारुन्धतीप्रशस्तशीलशालिनि,

---

**सर्वतः** सर्वत्र **प्रसृतं** व्याप्तम्। पुनः प्ररोहे किं कारणमित्यत्राह—**दैवदुर्विपाकादिति**॥ तर्हीदानीमपि तत्समुच्छेदनाय प्रयत्यतामित्यत्राह—**आळर्कमिति**॥ आळर्कं अळर्कसंबन्धि। अलर्क उन्मत्तः श्वा। 'शुनको भषकः श्वा स्यादळर्कस्तु सयोगित' इत्यमरः। कालान्तरप्रक्षुभितस्याळर्कविषस्यासाध्यत्वं प्रसिद्धम्। अतो निपुणतरं विचार्यमाणेऽपि नास्य प्रतिविधेयतामनुपश्याम इति भावः। **तत्** तस्मात्। किंशब्दो जिज्ञासायाम्। इतिशब्दः स्वरूपे। **अद्य** प्रशमितस्यैव पुनरुद्बोधे सति। करणीयं वस्त्ववधारयति—**अथवेति**॥ **सतां** सकललोकसंमतानां जनानां **केनापि** अतिदुष्करेणापि **कार्येण** कर्मणा प्राणात्ययकारिणापीत्यर्थः। **लोकस्य** जनस्य विदुषोऽविदुषोऽपीति भावः। **आराधनं** तोषणं **व्रतं** नियमेनानुष्ठेयम्। आपद्यपि न परित्याज्यमिति भावः। उक्तमर्थमुपपादयति—**यदिति**॥ अत्र निजकरणीयप्रस्तावे सत्सामान्यवृत्तप्रशंसनादप्रस्तुतप्रशंसालंकारः। तदुक्तम्—'अप्रस्तुतप्रशंसा स्यात्सा यत्र प्रस्तुताश्रया। कार्ये निमित्ते सामान्ये विशेषे प्रस्तुते सति। तदन्यस्य वचस्तुल्ये तुल्यस्येति च पञ्चधा॥' इति। सत्सामान्यकरणीयत्वस्य तातपादवृत्तेन समर्थनादर्थान्तरन्यासोऽस्यानुग्राहक इति संकरः। वसिष्ठस्याप्येतदेवाभिप्रेतमित्याह—**संप्रतीति**॥ एवं लोकाराधने गुणोत्कर्षं प्रतिपाद्य वैपरीत्ये दोषमुद्भावयति—**अपिचेति**॥ **सावित्रैः** मन्वादिभिः **दीपितं** सप्रकाशं कृतम् **साधु** उत्कृष्टम् **शुद्धं** कलङ्कलेशरहितम् **चरित्रं** कुलवृत्तम्। **किंवदन्ती** अपवादः **अस्मिन्** कुलवृत्ते। हन्तेति विषादे। धिङ्

---

१. परम् २. तत्प्रतीतम् ३. चित्रं ४. मत्संबन्धा कश्मला ५. हा मुनिजनकनन्दिनि

हा राममयजीविते, हा महारण्यवासप्रियसखि, हा तातप्रिये, हा प्रियस्तोकवादिनि, कथमेवंविधायास्तवायमीदृशः परिणामः ।

त्वया जगन्ति पुण्यानि त्वय्यपुण्या जनोक्तयः ।
नाथवन्तस्त्वया लोकास्त्वमनाथा विपत्स्यसे ॥ ४३ ॥

(दुर्मुखं प्रति) दुर्मुख, ब्रूहि लक्ष्मणम् । एष नूतनो राजा रामः

---

निन्दायाम् । इत्थं लोकाराधनस्यावश्यानुष्ठेयतां निश्चित्य तस्य सीतासंनिधानेऽसंभवात् तत्परित्यागस्यावर्जनीयतामनुसंधाय सविषादमाह—**हा देवीति** ॥ **देवि** निखिलजनप्रशंसनीये । कुतः प्रशंसनीयत्वमित्यत्राह—**देवयजनसंभव इति** ॥ ननूपादानगुणानामेव कार्यगुणारम्भकत्वं दृष्टम् नतु निमित्तकारणगुणानामित्यत्राह—**स्वजन्मानुग्रहपवित्रितवसुन्धर इति** ॥ तेजसः सलिलाद्वा जननेऽप्ययोनिजत्वसिद्धेर्भूमेरुद्भवस्तस्या महानुग्रह एवेति भावः । आजनिपावन इति यावत् । नन्वसत्याः पावनेन किं जन्मनेत्यत्राह—**निमिजनकवंशनन्दिनीति** ॥ निजसंबन्धवशाज्जनककुलप्रशस्तिकारिणीत्यर्थः । ननु चारित्रशुद्धिः शीलगुणसमुन्नेयेति तदभावाद्दुर्यशःकळङ्कमालिन्यमित्यत्राह—**पावकवसिष्ठारुन्धतीप्रशस्तशीलशालिनीति** ॥ ननु शीलगुणेषु भर्तृभक्तिरेव प्रकृष्यते इत्यत्राह—**राममयजीवित इति** ॥ ननु तादृशी भर्तृभक्तिः कथं लोकैरवगम्यते इत्यत्राह—**महारण्यवासप्रियसखीति** ॥ ननु श्वश्रूश्वशुरादीनामवात्सल्यात् दुर्यशःप्रादुर्भाव इत्यत्राह—**तातप्रिय इति** ॥ ननु कटुकवचनसमुद्वेजितो लोकः कमपि दोषमारोपयेदित्यत्राह—**प्रियस्तोकवादिनीति** ॥ कथमिति वितर्के । **एवंविधायाः** प्रतिपादितगुणगणमहितायाः **तव** ईदृशदुर्विपाकमनुभवितुमनुचितायाः **अयं** अलक्षितोपनिपातः **ईदृशः** कष्टतरः **परिणामः** चरमकालानुभवः । उपस्थित इति शेषः । अनुपपत्तिमेव कथयति—**त्वयेति** ॥ हेतौ तृतीया । **जगन्ति** भूतानि **पुण्यानि** मङ्गलानि । त्वदधिष्ठितभुवनवासादेव सर्वभूतानामपि पुण्यत्वं जातमित्यर्थः । **त्वयि** तथाविधोत्कर्षशालिन्यां **अपुण्याः** अमङ्गलाः वक्तॄणां श्रोतॄणां च सुकृतक्षयकारिण्यः **जनोक्तयः** विदुषामविदुषामपि वाचः । अत्र हि जगत्पुण्यकारणत्वमपुण्यजनवादकारणत्वं चैकस्मिन् विषये विरुद्धमिति 'क्वचिद्यदतिवैषम्यान्न श्लेषो घटनामियात्' इत्याद्युक्तं विषममेवालंकारः । न विरोधः । प्रतीयमानस्य तस्य समाधेयताभावात् । आमुखप्रतिभासमानस्य विरोधस्य वाक्यार्थोत्पत्तिवेलायां समाधीयमानत्वे हि चमत्कारकारित्वम् । अत्र त्वसंघटमानयोः संघटनमेव वैचित्र्यमिति विवेकः । **एषः** नृशंसकर्मसमुद्युक्तः **नूतनः** असद्व्यवसायादभिनवः **राजा** लोकचित्ताराधनपरतया शक्याशक्यविवेकशून्यः **रामः**

समाज्ञापयति । (कर्णे) एवमेवम् ।

दुर्मुखः—हा, कहं दाणिं अग्गिपरिसुद्धाए गब्भट्ठिदपवित्तरहुसंताणाए देवीए दुज्जणवअणादो एव्वं ववसिदं देव्वेण ।

हा, कथमिदानीमग्निपरिशुद्धाया गर्भस्थितपवित्ररघुसंतानाया देव्या दुर्जनवचनादेवं व्यवसितं देवेन ।

रामः—[1]शान्तम् । कथं दुर्जनाः पौरजानपदाः ।

इक्ष्वाकुवंशोऽभिमतः प्रजानां
जातं च दैवाद्वचनीयबीजम् ।
[2]तच्चाद्भुतं कर्म विशुद्धिकाले
प्रत्येतु कस्तद्यतिदूरवृत्तम् ॥ ४४ ॥

---

दुःखानुभवायैव लब्धजन्मा । अत्र रामशब्दो निरुपयोगितया मुख्यार्थमुन्मुच्यार्थान्तरमभिसंक्रामतीत्यर्थान्तरसंक्रमितवाच्योऽयं ध्वनिभेदः । तदुक्तम्—'अविवक्षितवाच्यो यस्तत्र वाच्यं भवेद्ध्वनौ । अर्थान्तरे संक्रमितमत्यन्तं वा तिरस्कृतम् ॥' इति । **समाज्ञापयति** राजधर्मानुवर्तनपरतन्त्रवृत्तेर्मम का वा गतिरिति भावः । कथमिदानीमग्निपरिशुद्धाया गर्भस्थितपवित्ररघुसन्तानाया देव्या दुर्जनवचनादेवं व्यवसितं देवेन । अत्र त्रिभिर्विशेषणैः परित्यागानर्हता कथ्यते । दुर्मुखोक्तिमसहमान आह—**शान्तमिति** ॥ तव वचनश्रवणेन मम यद्दुरितमाचरितं तच्छममुपयात्वित्यर्थः । किमु तादृशं मयोक्तमित्यत्राह—**कथमिति** ॥ न खल्वस्मद्व्यतिरिक्ताः सर्व एव दुर्जना इति वक्तुं शक्यत इत्यर्थः । कथं तर्हि पावकपरिशुद्धचरिताया देव्याश्चरितं पौरजानपदा अपवदेयुरित्यत्राह—**इक्ष्वाकुवंश इति** ॥ प्रजानामिक्ष्वाकुवंशः अभिमतः दैवात् वचनीयबीजं जातं च विशुद्धिकाले तदद्भुतं कर्म कः प्रत्येतु च इत्यन्वयः । **प्रजानाम्** अस्मद्वंश्यपरिपाल्यानाम् । **इक्ष्वाकुवंशः** इक्ष्वाकूणां यशोधनानां वंशः कुलः **अभिमतः** निष्कलङ्कतया बहुमतः । कुल एव तेषां योगक्षेमहेतुत्वात् बहुमतिपूर्विका भक्तिः न तु तत्प्रसूतेष्वस्मदादिष्वित्यर्थः । मतिबुद्धीत्यादिना वर्तमाने क्तः । क्तस्येत्यादिना षष्ठी । **दैवादिति** ॥ को हि नाम दैवदुर्विपाकमन्यथाकर्तुं शक्नुयादिति भावः । वचनीयमपख्यातिः तस्या बीजं हेतुः परगृहवास इति । **जातं** केनापि कर्मणा दुरपनोदमभवत् । **विशुद्धिकाले** रावणापहृतायाः स्वीकरणीयताबोधनसमये **तत्** अतिमानुषम्

---

१. शान्तं पापं, शान्तं पापम् । दुर्जना नाम पौरजानपदाः २. यच्चाद्भुतं कर्म विशुद्धिकाले प्रत्येतु कस्तद्यदि दूरवृत्तम् ॥

तद्गच्छ ।

दुर्मुखः—हा देवि । (इति निष्क्रान्तः ।)

रामः—हा कष्टम् । अतिबीभत्सकर्मणा[1] नृशंसोऽस्मि संवृत्तः ।

शैशवात्प्रभृति पोषितां प्रियैः
सौहृदादपृथगाशयां प्रियाम् ।
छद्मना परिददामि मृत्यवे
सौनिको गृहशकुन्तिकामिव ॥ ४५ ॥[2]

तत्किमस्पर्शनीयः पातकी देवीं दूषयामि ।

---

अद्भुतं विस्मयकरम् कर्म पावकं प्रविश्योत्थानम् । किंशब्दः क्षेपे । अल्पप्रज्ञ एव सकललोक इति भावः । संप्रश्ने लोट् । विचार्य निश्चिनुयादित्यर्थः । चकारौ यौगपद्यद्योतकौ । लोकाप्रत्ययितत्वे कारणमाह—तद्धयति दूरवृत्तमिति ॥ हि हेतौ । पौरजानपदानामगम्ये लङ्काद्वीपे विहितमश्रद्धेयमेवेत्यर्थः । अतो गत्यन्तराभावात् परित्याग एव मम शरणमिति भावः । अत्राभिमननादीनां क्रियाणां यौगपद्यकथनात् समुच्चयोऽलंकारः । तदुक्तम्—'स त्वन्यो युगपद्या गुणक्रिया' इति । तदिति ॥ यतः परित्यागस्यापरिहरणीयता तस्मादित्यर्थः । गच्छ लक्ष्मणप्रतिबोधनायेति शेषः । हा देवीति ॥ अनुचित एव तवायमीदृशो विनिपात इति शेषः । हेति विषादानुभावः । कष्टमिति कृच्छ्रे । अतिबीभत्सकर्मणा अतिजुगुप्सितेन व्यापारेण । नृशंसः क्रूरः । किं वा तादृशं कृतमित्यत्राह—शैशवादिति ॥ एनां मृत्यवे परिददामीति संबन्धः । प्रकरणवशाद्विशेषणसामर्थ्याच्च एनामिति लभ्यते । मृत्यवे कृतान्ताय परिददामि उपहरामि । वर्तमानसामीप्याद्वर्तमाननिर्देशः । नृशंसतामुपमानेन स्पष्टयति—सौनिकः सूनोपजीवी । तेन जीवतीति ठक् । सूना हिंसा । गृहसंवर्धिता शकुन्तिका गृहशकुन्तिका कुक्कुटादिकेति यावत् । जुगुप्सितत्वातिशयमाह—छद्मनेति ॥ दौहृदसंपादनव्याजेनेत्यर्थः । अत्र साधारणधर्मानाह—शैशवादित्यादि ॥ पोषितां वर्धिताम् । प्रियैः अत्यन्तमभीष्टैरेव द्रव्यैः । सौहृदात् सुहृद्भावात् अपृथगाशयां हर्षशोकाद्यनुविधायिनीम् । अतिविश्वस्तामिति यावत् । प्रियां प्रतिप्रीतिविषयभूताम् । तत् तस्मात् । किंशब्दो वितर्के । अस्पर्शनीयः दूरपरिहरणीयः । अत्र हेतुमाह—पातकीति ॥ देवीं शुद्धशीलाम् दूषयामि स्पर्शनेन पातकसं-

---

१. अतिबीभत्सकर्मा २. शैशवात्प्रभृति पोषितां प्रियां सौहृदादपृथगाश्रयामिमाम् । छद्मना परिददामि मृत्यवे सौनिके गृहशकुन्तिकामिव ॥

(इति सीतायाः शिरः स्वैरमुन्नाम्य बाहुमाकर्षन्)

**अपूर्वकर्मचाण्डालमयि मुग्धे विमुञ्च माम् ।**
**श्रितासि चन्दनभ्रान्त्या दुर्विपाकं विषद्रुमम् ॥ ४६ ॥**

(उत्थाय) हन्त हन्त, विपर्यस्तः संप्रति जीवलोकः । पर्यवसितं जीवितप्रयोजनं, रामस्य शून्यमधुना कृतं जीर्णारण्यं जगत् । असार

---

पृक्तां करोमि । **स्वैरमिति** ॥ मन्दमित्यर्थः । स्वैरं स्वच्छन्दमन्दयोरित्यमरः । **उन्नाम्य** उन्नमय्य । उपधानीकृतादपरेण बाहुना किञ्चिदुद्धृत्येत्यर्थः । **बाहुमाकर्षन्निति** ॥ आहेति शेषः । तत्प्रकारश्च कथमित्यत्राह—**अपूर्वकर्मचाण्डालमिति** ॥ अपूर्वेण जन्मान्तराविहितेन कर्मणा चाण्डालमित्यर्थः । एतज्जन्मकृतेनेति यावत् । अथवा अपूर्वेण इतः पूर्वं केनाप्यकृतेन कर्मणा धर्मदारपरित्यजनेनेति । चण्डालः खल्वस्पर्शनीय एवेति भावः । अयीत्यनुनये । **मुग्धे** ऋजिव **विमुञ्च** मोचनस्यावसरः प्राप्तः । प्राप्तकाले लोट् । यदीदानीं न मुञ्चसि तत इतोऽपि गरीयान्दोष आपतेदिति भावः । **मां** अतिनृशंसम् । ननु त्वदपाश्रयः कथमहं त्वां परित्यजेयमित्यत्राह—**श्रितासीति** ॥ **चन्दनभ्रान्त्या** चन्दनबुद्ध्या **दुर्विपाकं** प्राणापहारिकुसुमपरिणामम् । अत्र भर्तृविषयायां श्रयणक्रियायां विषद्रुमश्रयणक्रियात्वाध्यारोपान्निदर्शनालंकारः । हन्तेति विषादे । भृशार्थे द्विर्वचनम् । **विपर्यस्तः** विपर्यासं प्राप्तः । पूर्वं सुखरूपतया अवगतानामिदानीं तद्वैपरीत्येनानुभवात् परिवृत्तपूर्वस्वभाव इत्यर्थः । कर्तरि क्तः । **संप्रति** देवीं परित्यज्योत्थानसमय एव । **जीवलोकः** दृश्यमानः सकल एव प्रपञ्चः । **पर्यवसितं** अतिक्रान्तम् । **जीवितप्रयोजनं** जीवितफलम् । उक्तमेवार्थमुपपादयति—**रामस्येति** ॥ अधुना रामस्य जगत् जीर्णारण्यं कृतमिति संबन्धः । **रामस्य** लोकरञ्जनव्यसनिनः । संबन्धार्थे षष्ठी । **जगत्** भुवनम् **जीर्णारण्यम्** उपादेयवस्तुविरहादरम्यं **कृतं** संभूतम् । ननु विविधवस्तुपरिपूर्णस्य जगतः कथमरम्यत्वमित्यत्राह—**शून्यमिति** ॥ प्रियतमाविनाशजनितेन निर्वेदेन निखिलेऽपि वस्तुन्युपभोग्यबुद्धिविरहादनादरणीयमित्यर्थः । यथा शून्यं प्रियव्यतिहृतं ददृशुस्त्रिलोकमिति । अत्र करणार्थस्यानुपयोगात् करोतिर्भवत्यर्थे । भवतिरपि क्वचित् करोत्यर्थे, क्रियासामान्यवाचित्वात् कृभ्वस्तीनाम् । यथा—'स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घना वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः । कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सह वैदेही तु कथं भविष्यति हहा हा देवि धीरा भव ॥' अत्र हि वैदेही तु कथं भविष्यतीति वैदेह्या वर्षारम्भाविजृम्भिवस्तुसंदर्शनात् तस्या जीवितमोचनसाहससंभाव्यत्वकथने भवत्यर्थस्यानुपयोगात् भवतिः करो-

एव च संसारः । काष्ठप्रायं शरीरकम् । अशरणोऽस्मि । किं करोमि । का गतिः । अथवा ।

दुःखसंवेदनायैव रामे चैतन्यमाहितम् ।
मर्मोपतापिभिः प्राणैर्वज्रकीलायितं हृदि ॥ ४७ ॥

हा अम्ब अरुन्धति, भगवन्तौ वसिष्ठविश्वामित्रौ, भगवन्पावक, हा देवि भूतधात्रि, हा तात जनक, हा मातरः, हा प्रियसख महा-

---

त्यर्थे प्रयुक्तः । संसारश्च असार एव इति योजना । लिङ्गविपरिणामेन कृत इति संबध्यते । **काष्ठप्रायम्** काष्ठतुल्यम् । कुत्सितं शरीरं **शरीरकम्** । अत्र करु- णाक्षिप्तहृदयतया जगति शून्यकक्ष्यतारोपणेऽपि पुनर्जीर्णारण्यत्वारोपणं, संसारेऽ- सारत्वारोपणेऽपि शरीरस्य काष्ठप्रायताभिधानं च पुनरुक्तप्रायमपि न दोषाय अपितु गुणायैव । यथा—'असारे संसारे परिमुषितरत्नं त्रिभुवनं निरालोकं लोकं मरणशरणं बान्धवजनम् । अदर्पं कन्दर्पं जननयननिर्माणमफलं जग- ज्जीर्णारण्यं कथमसि विधातुं व्यवसितः ॥' इति । परिणामोऽत्रालंकारः । शून्यकक्ष्यताद्यरोप्यमाणानां प्रकृते सीतावियोग उपयोगात् । कीदृशेन वा कर्मणा समाधेयमेतदित्यत्राह—**का गतिरिति** ॥ न खलु दैवोपनतस्यास्य प्रति- विधेयतेत्याह—**अथवेति** ॥ **दुःखसंवेदनायेति** ॥ दुःखानुभवनायैवे- त्यर्थः । तादर्थ्ये चतुर्थी वक्तव्येति चतुर्थी । अथवा संवेदनं ज्ञानम् । तुम- र्थाच्चेत्यादिना चतुर्थी । एतादृशं खलु दुःखस्य स्वरूपमिति ज्ञातुमित्यर्थः । **रामे** अपरिहरणीयपापकर्मणि **चैतन्यं** जीवनं **आहितं** आपादितं, विधिने- त्यर्थात् । ननु तीव्रतरदुःखानुभवजनितेनानुभूतचरेण रणरणकेन क्षणमपि जीवितं न संतिष्ठतीत्यत्राह—**मर्मोपतापिभिरिति** ॥ प्राणैः हृदि वज्रकीलायितमिति संबन्धः । **प्राणैः** उच्छ्वसितवायुभिः **हृदि** प्रकृष्टे जीवितनिवासस्थाने **वज्र- कीलायितं** वज्रकीलवदाचरितम् । वज्रमयैः कीलैरिव प्राणैः हृदि जीवितं कीलितमिव न निर्गच्छेदित्यर्थः । प्राणानां वज्रकीलसाधर्म्यमाह—**मर्मेति** ॥ वेदनातिशयदायिभिरित्यर्थः । सर्वं खलु दुःखजातमतिस्निग्धसंबन्धिजनसमाश्वा- सनवचनेनैव सर्वेषामिह सहनीयं भवति, मम तु प्रत्युत ईदृशं नृशंसतरकर्म- परिपन्थीकृतानां तेषां कटुतरवीक्षणतर्जनादिभिः दुःसहतरमित्याह—**अम्बेति** ॥ सततमपि निखिललोककल्याणाशंसिनीत्यर्थः । **अरुन्धति** बहुमतसीतापु- ण्यव्रते । **भगवन्तौ** साक्षात्कृतनिखिलतत्त्वौ अवगतसंसारतत्त्वौ **वसिष्ठ- विश्वामित्रौ** रघुकुलयोगक्षेमाचिन्तनपरौ । **भगवन्** अलङ्घनीयमहिमन् **पावक** पातकेतरविवेचक । **देवि** प्रमाणीकरणसमुचिते **भूतधात्रि** निखि-

---

१. मागतम्  २. मर्मोपघातिभिः

राज सुग्रीव, सौम्य हनूमन्, परमोपकारिन् लङ्काधिपते विभीषण, हा सखि त्रिजटे, मुषिताः स्थ, परिभूताः स्थ रामहतकेन। अथवा को वा तेषामहमिदानीमाह्वाने।

ते हि मन्ये महात्मानः कृतघ्नेन दुरात्मना।
मया गृहीतनामानः स्पृश्यन्त इव पाप्मना ॥ ४८ ॥

योऽहम्

विस्रम्भादुरसि निपत्य लब्धनिद्रा-
मुन्मुच्य प्रियगृहिणीं गृहस्य शोभाम्।
आतङ्कस्फुरितकठोरगर्भगुर्वीं
क्रव्याद्भ्यो बलिमिव दारुणः क्षिपामि ॥ ४९ ॥

लाधारे। **तात** प्रतीक्षणीयशासन **जनक** श्लाघ्यसंबन्धिन्। **मातरः** सीतावत्सलाः। **प्रियसख** अशङ्कनीयहृदय **महाराज** परिभवसागरपोतपात्र **सुग्रीव** अवन्ध्यीकृतमित्रकार्य। **सौम्य** अनूष्मलशील **हनूमन्** सीताचरितावगमनकुशल। **परमोपकारिन्** अनवेक्षितस्वजनपरिभव **लङ्काधिपते** अपर्याप्तप्रत्युपकृते **विभीषण** रावणभ्रातः। **सखि** सीतारक्षणपरायणे **त्रिजटे** धर्मैकतानहृदये। **मुषिताः स्थ** विप्रलब्धाः स्थ **परिभूताः स्थ** न्यक्कृताः स्थ **रामहतकेन** दुर्जनमतानुवर्तिना। अत्राम्बादिशब्दानां मुख्यार्थस्यानुपयोगात् कल्याणाशंसिनीत्याद्यर्थान्तरे संक्रमणादर्थान्तरसंक्रमितवाच्योऽयं ध्वनिभेदः। दशरथादीनां पुनररुन्धत्यादेः सीताशोकवैक्लव्यातिशयं संभाव्य तद्बोधनेष्वन्तरान्तरा दुःखसंवेगातिशयवशात् प्रतिसंबोधनं हेति विषादानुभावः। न खल्वीदृशस्य मम तेषां नामग्रहणमपि समुचितमित्याह—**को वेति**॥ किंशब्दः क्षेपे। **तेषां** अरुन्धत्यादीनां **अहं** महापातकी **इदानीं** पापकर्मानुष्ठानसमये **आह्वाने** नामग्रहणे। हेतुमाह—**ते हीति** ॥ **मन्ये** जानामि। वाक्यार्थः कर्म। **महात्मानः** अस्पृष्टपातकलेशाः। **कृतघ्नेन** पातकिषु प्रकृष्टतमेन **दुरात्मना** दुष्टमनसा **मया** अशक्यनिष्कृतिना **गृहीतनामानः** व्यपदेशग्रहणपूर्वकं संबोधिताः **स्पृश्यन्त इव** ईषल्लिप्यन्ते। इवशब्द ईषदर्थे। **पाप्मना** एनसा। उक्तमर्थमुपपादयति—**य इति** ॥ यः अहं प्रियगृहिणीं क्षिपामि इति संबन्धः। **प्रियगृहिणीं** इष्टां सहधर्मचारिणीं न तु यांकांचिदिति भावः। अनेन पातकस्य प्रकर्षः कथ्यते। **क्रव्याद्भ्यः** श्वापदेभ्यः। **क्षिपामि** परिददामि। क्रव्याद्गणपरिपूरिते वने प्रक्षेपो नाम तेषामामिषप्र-

१. लक्ष्मीम्

(सीतायाः पादौ शिरसि कृत्वा) देवि अपश्चिमस्ते रामशिरसा पादपङ्कजस्पर्शः। (इति रोदिति।)

(नेपथ्ये)

अब्रह्मण्यमब्रह्मण्यम्।

रामः—ज्ञायतां भोः, किमेतत्।

(पुनर्नेपथ्ये)

ऋषीणामुग्रतपसां यमुनातीरवासिनाम्।
लवणत्रासितः स्तोमः शरणं त्वामुपस्थितः॥ ५०॥

---

दानमेवेति भावः। वर्तमानसामीप्याद्वर्तमाननिर्देशः। तत् पुनः कथमित्यत्राह—**बलिमिवेति**॥ निष्करुणमिति यावत्। ततोऽपि प्रकृष्टतामाह—**विस्रम्भादिति**॥ विस्रम्भात् न त्वशालीनतया इति भावः। **उरसि** न पर्यङ्के **निपत्य** ननु समाश्लिष्य **लब्धनिद्रां** नहि जातनिद्रां **उन्मुच्य** उरसो विकृष्य। पुनरपि प्रकृष्टतामाह—**गृहस्य शोभामिति**॥ शोभनशीलामिति यावत्। ततोऽपि प्रकृष्टतरतामाह—**आतङ्केति**॥ आतङ्कस्फुरितेन आतङ्कयुक्तेन स्फुरितेन चलनेन सहितमातङ्कस्फुरितं तथाभूतेन कठोरेण पूर्णेन गर्भेण हेतुना गुर्वीं गौरवयुक्ताम्। अथवा स्फुरितातङ्केन जनितरुजा कठोरेण गर्भेण गुर्वीमिति। आहिताग्न्यादित्वान्निष्ठायाः परनिपातः। 'रुक् तापशङ्कास्वातङ्क' इत्यमरः। आतङ्कयुक्तं स्फुरितं आतङ्कस्फुरितं वेदनासहितं चलनम् तेन कठोरेण दुर्भरेण गर्भेणेति वा। एवंविधा कथं परित्यक्तेत्यत्राह—**दारुण इति**॥ अत्र विशेषणानां साभिप्रायत्वात् परिकरोऽलंकारः। उपमानुगृहीतं च काव्यलिङ्गमस्यानुग्राहकमिति संकरः। तदुक्तम्—'विशेषणैर्यत्साकूतैरुक्तिः परिकरस्तु सः' इति। 'साधर्म्यमुपमा भेदे' इति च। **अपश्चिमः** अचरमः। **ते** उत्कृष्टतमायाः **रामशिरसा** अनन्यपरायणस्य मूर्ध्ना **पादपङ्कजस्पर्शः** सुकृतैकलभ्य इति भावः। **इति रोदिति** एवमतिकरुणं भूयो भूयो विलप्य रोदितीत्यर्थः। **अब्रह्मण्यमिति**॥ त्रासातिशयवशात् द्विर्वचनम्। अब्रह्मण्यमवध्योक्तिः। **ज्ञायतामिति**॥ श्रूयमाणस्यार्तप्रलपितस्य कारणमन्विष्यतामित्यर्थः। **भो इति** तत्तत्कर्मव्यापृतानां परिचारकाणामाभिमुख्यकरणे। संबोधितानां च तेषां प्रतिवचनम्—**ऋषीणामिति**॥ ऋषिशब्दोऽत्र रूढ्या मुनिवाचकः। **उग्रतपसां** प्रकृष्टतपसाम्। उग्रशब्देन प्रकर्षो लक्ष्यते। यमुनातीरवासिनामित्यनेन नदीतीरपर्वतादिपुण्यस्थानकृतानां तपसां कोटिगुणितत्वस्मरणादवश्यरक्षणीयत्वं व्यज्यते। **लवणत्रासितः**

---

१. अयं पश्चिमस्ते रामशिरसि.

रामः—आः कथमद्यापि राक्षसत्रासः । तद्यावदस्य दुरात्मनो माधुरस्य कुम्भीनसीपुत्रस्योन्मूलनाय शत्रुघ्नं प्रेषयामि ।

(किंचित् परिक्रम्य पुनः प्रतिनिवृत्य)

हा देवि, कथमेवंगता भविष्यसि । भगवति वसुंधरे, श्लाघ्यां दुहितरमवेक्षस्व जानकीम् ।

जनकानां रघूणां च यत्कृत्स्नं गोत्रमङ्गलम् ।
यां देवयजने पुण्ये पुण्यशीलामजीजनः ॥ ५१ ॥

(इति रुदन्निष्क्रान्तः ।)

सीता—हा[२] सोम्म अज्जउत्त, (सहसोत्थाय) हद्धी हद्धी । दुस्सिविणएण विप्पलद्धम्हि । अज्जउत्तं अक्कन्दामि । (विलोक्य) हद्धी हद्धी । एआइणिं पसुत्तं मं उज्झिअ गदो । किं दाणिं एदं । होदु । से कुप्पिस्सं जइ तं पेक्खन्ती अत्तणो पहविस्सं । को एत्थ परिअणो ।

हा सौम्य आर्यपुत्र, हा धिक् हा धिक् । दुःस्वप्नेन विप्रलब्धास्मि । आर्यपुत्रमाक्रन्दामि । हा धिक् हा धिक् । एकाकिनीं प्रसुप्तां मामुज्झित्वा गतः । किमिदानीमेतत् । भवतु । अस्मै कोपिष्यामि यदि तं प्रेक्षमाणा आत्मनः प्रभविष्यामि । कोऽत्र परिजनः ।

---

लवणेन यज्ञादिविघ्नकारिणा त्रासितः **स्तोमः** समूहः । **शरणं** रक्षितारम् । 'शरणं गृहरक्षित्रोः' इत्यमरः । **उपस्थितः** प्राप्तः । **अद्यापीति** ॥ रक्षसां कुलेऽपि समुन्मूलिते इत्यर्थः । **माधुरस्य** मधुरावासिनः । **उन्मूलनाय** उन्मूलनं कर्तुम् । **प्रेषयामि** नियोजयामि । यावता योगात् भविष्यदर्थे लट् । **किञ्चित् परिक्रम्येति** ॥ कियन्त्यपि पदानि गत्वेत्यर्थः । **पुनः प्रतिनिवृत्य** पूर्वस्थानमेवाभिगम्य । **हा देवीति** ॥ अनुचितैव तवेदृशी विपत्तिरिति

---

१. शून्याम् इति व्याख्यातृसंमतः पाठः २. हा सोम्म अज्जउत्त, कहिंसि । (इति सहसोत्थाय) हद्धी हद्धी । दुस्सिविणरणरणअविप्पलद्धा अज्जउत्तसुण्णं विअ अत्ताणं पेक्खामि । (विलोक्य) हद्धी हद्धी । एआइणिं पसुत्तं मं उज्झिअ कहिं गदो णाहो । होदु । से कुप्पिस्सं जइ तं पेक्खन्ती अत्तणो पहविस्सं । को एत्थ परिअणो । हा सौम्य आर्यपुत्र, कुत्रासि । हा धिक् हा धिक् । दुःस्वप्नरणरणकविप्रलब्धा आर्यपुत्रशून्यमिवात्मानं पश्यामि । हा धिक् हा धिक् । एकाकिनीं प्रसुप्तां मामुज्झित्वा कुत्र गतो नाथः । भवतु । अस्मै कोपिष्यामि यदि तं प्रेक्षमाणा आत्मनः प्रभविष्यामि । कोऽत्र परिजनः ।

(प्रविश्य)

**दुर्मुखः**—देवि, कुमारलक्खणो विण्णवेदि—'सज्जो रहो । आरुहदु देवी ।'

देवि, कुमारलक्ष्मणो विज्ञापयति—'सज्जो रथः आरोहतु देवी ।'

**सीता**—इअं आरुहामि । (उत्थाय परिक्रम्य) पप्फुरइ विअ गब्भभारो । तं साणिअं गच्छह्म ।

इयमारोहामि । प्रस्फुरतीव गर्भभारः । तच्छनैर्गच्छावः ।

**दुर्मुखः**—इदो इदो देवी । इत इतो देवी ।

**सीता**—णमो रहुउलदेवदाणं । णमो तवोधणाणं ।

नमो रघुकुलदेवताभ्यः । नमस्तपोधनेभ्यः ।

(इति निष्क्रान्ताः सर्वे ।)

इति चित्रदर्शनं नाम प्रथमोऽङ्कः ।

---

भावः । कथमिति वितर्के । **एवंगता** शून्याटवीपरित्यक्ता **भविष्यसि** विनाशमेव नियतमनुभविष्यसीत्यर्थः । **भगवति** विदितनिखिलतत्त्वे **वसुन्धरे** दिव्यरत्नप्रसविनि **शून्यां** सहायविरहितां **दुहितरं** निखिलापायेभ्यो रक्षणीयामित्यर्थः । **अवेक्षस्व** परिपालय **जानकीं** श्लाघ्यशीलाम् । ननु चारित्रशुद्ध्यभावात्त्वया परित्यज्यते, तत् किमियं परिरक्षणीयेत्यत्राह—**जनकानामिति** ॥ **जनकानां** पितृकुलजानां **रघूणां** भर्तृकुलजानां **कृत्स्नं** निखिलं **गोत्रमङ्गलम्** उभयकुलाभ्युदयकारणमिति यावत् । अत्र हेतुमाह—**यामिति** ॥ अत्र पूर्वोत्तरयोर्वाक्यार्थयोर्मिथो हेतुहेतुमद्भावात् काव्यलिङ्गमलंकारः । हा सौम्य आर्यपुत्र । **सहसेति** ॥ दुःस्वप्नदर्शनजनितेन भयेन शीघ्रमुत्थायेत्यर्थः । हा धिक् दुःस्वप्नेन विप्रलब्धास्मि । आर्यपुत्रमाक्रन्दामि । एकाकिनीं प्रसुप्तामुज्झित्वा गतः । किमिदानीमेतत् । भवतु । कोपिष्यामि यदि तं प्रेक्षमाणा आत्मनः प्रभविष्यामि । कोऽत्र परिजनेषु । दुःस्वप्नेन कर्त्रा **विप्रलब्धास्मि** वञ्चितास्मि । **एकाकिनीं** असहायां **प्रसुप्तां** सुखसुप्तां **उज्झित्वा** परित्यज्य । किंशब्दो वितर्के । **इदानीं** अकाण्ड एव । **एतत्** परित्यज्य गमनं, भवत्वित्यान्तरानिर्णये । एतादृशस्य विप्रियस्य प्रतिकरणप्रकारो निर्णीत इत्यर्थः । यदीति सिद्धानुवादे । **तं** ईदृशालीककारिणं **प्रेक्षमाणा** दर्शनानुपदमनुसंहितानल्पविप्रियकलुषतरमवलोकयेत्यर्थः । **आत्मनः** स्वस्यैव । **प्रभविष्यामि** समर्था स्याम् । नियतमेवाहं प्रभवीति यदेरर्थः । सगियं यदि जीवितापहेत्यादिवत् । देवि

## द्वितीयोऽङ्कः ।

(नेपथ्ये)

स्वागतं तपोधनायाः ।

(ततः प्रविशत्यध्वगवेषा तापसी ।)

**तापसी**—अये वनदेवतेयं फलकुसुमपल्लवार्घ्येण मामुपतिष्ठते ।

(प्रविश्य)

**वनदेवता**—(अर्घ्यं विकीर्य)

यथेच्छाभोग्यं वो वनमिदमयं मे सुदिवसः
सतां सद्भिः सङ्गः कथमपि हि पुण्येन भवति ।

---

कुमारलक्ष्मणो विज्ञापयति—सज्जो रथः आरोहतु देवी । प्रस्फुरतीवं गर्भभारः । तच्छनैर्गच्छावः । **प्रस्फुरतीव** प्रचलतीव । आलस्यातिरेकवशादियत्तया परिच्छेत्तुमशक्यत्वादिवशब्दप्रयोगः । गर्भ एव भारो गर्भभारः । दुर्वहत्वसाधर्म्यादारोपः । इत इतो देवी । नमो रघुकुलदेवताभ्यः । नमस्तपोधनेभ्यः ॥ उत्तरे रामचरिते भवभूतिकवेः कृतौ । नाटके प्रथमोऽङ्कोऽयं यथाशक्ति विचारितः ॥

इति भावार्थदीपिकायामुत्तररामचरितव्याख्यायां प्रथमोऽङ्कः ॥

॥ अथ द्वितीयोऽङ्कः ॥

अथ वृत्तवर्तिष्यमाणकथांशसंघटनार्थं विष्कम्भकमुपनिबध्नंस्तन्मध्ये चूलिकां योजयन् 'णमो तवोधणाणम्' इत्यतीताङ्ककथावसानपरिसूचितं तापसीप्रवेशमाह । अत्र नैपथ्यपात्रभूतया वनदेवतया तापसीप्रवेशस्य सूचितत्वात् चूलिका । तदुक्तम्—'अन्तर्यवनिकासंस्थैश्चूलिकार्थस्य सूचना' इति । **अध्वगवेषेति** ॥ अध्वगानां पान्थानां वेषो यस्याः सा । अये इति स्मरणे । काचिद्वनदेवतेयमिति जानामीत्यर्थः । 'अये क्रोधे विषादे च संभ्रमे स्मरणेऽपि च' इत्यमरः । संभ्रमे वा संभ्रमविशेषत्वादादरे वा । इयमित्यभिनीयोक्तिः । **फलकुसुमपल्लवार्घ्येणेति** ॥ फलकुसुमादियुक्तेनार्घ्येणेत्यर्थः । **उपतिष्ठते** पूजार्थं सन्निधत्ते । अथार्घ्यप्रदानानन्तरं निजविभवमतिथिसात्करोति—**यथेति** ॥ इदं वनं वः यथेच्छाभोग्यमित्यन्वयः । **इदं** पुरोवर्ति **वनं** अस्मन्निवाससमुचितं **वः** अतिथिजनानां **यथेच्छाभोग्यं** इच्छानुगुणतयैव भोग्यं आतृप्ति परिभोगार्ह-

---

१. अये वनदेवता फलकुसुमपल्लवार्घ्येण दूरान्मामुपतिष्ठते

तरुच्छाया तोयं यदपि तपसो योग्यमशनं
फलं वा मूलं वा तदपि न पराधीनमिह वः ॥ १ ॥

तापसी—किमत्रोच्यते ।

प्रियप्राया वृत्तिर्विनयमधुरो वाचि नियमः
प्रकृत्या कल्याणी मतिरनवगीतः परिचयः ।

---

मित्यर्थः । इच्छा नामानुपहता साध्यविषया मानसी वृत्तिः । तदुक्तम्—'इदं मे स्यादिदं मे स्यादिति भेदविकल्पिनी । मानसी साध्यविषया वृत्तिरिच्छेति कथ्यते ॥' इति । इच्छाभोग्यमिति सिद्धे पश्चाच्छिवभागवतादिवत्समासः । अन्यथा यथेच्छभोग्यमिति स्यात् । यथेति पृथक्पदं वा यथावदित्यर्थः । नहि भवादृशोऽतिथिविशेषः सुलभ इत्याह—**अयं मे सुदिवस इति** ॥ हेतुमाह—**सतामिति** ॥ अत्र सतामिति वचनं निजोत्कर्षप्रतीतिकरमपि तत्र तात्पर्याभावान्न दोषः । क्वचित्तु तात्पर्ये सत्यपि यथार्थत्वे न दोषः । यथा 'सतां हि संदेहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः' इति । तथा चाह दण्डी—'आत्मप्रशंसनं दोषो नतु भूतार्थवादिनाम्' इति । **कथमपीति** ॥ अतिकृच्छ्रेणानुष्ठितेन पुण्येनेत्यर्थः । कथमपि भवतीति वा योजना । अत्रातिथिविशेषलाभे स्वकीयवस्तुसमर्पणरूपायाः पूजायाः करणीयत्वं 'सतां सद्भिः संगः कथमपि हि पुण्येन भवति' इति सामान्यकथनेनात्मनो दिनशोभनत्वप्रसाधनमुखेन प्रतिपादितमिति गर्भितत्वदोषाशङ्कावकाशः । किंतु परमकृपावशसमुन्मिषितविमलशेमुषीविलसितानामतिशायितशक्तिविशेषव्यर्थीकृतलोकवृत्तादिपर्यालोचनजनितनिपुणतापरपर्यायव्युत्पत्तिविशेषाणां महाकवीनामतिविशृङ्खलायां भणितावव्युत्पत्तिकृता ईदृशा दोषाः संभवन्तोऽपि शक्तितिरोहितत्वान्न स्फुटतरं प्रतीयन्ते। यथा 'स्रस्तां नितम्बादवलम्बमाना पुनः पुनः केसरदामकाञ्चीम् । न्यासीकृतां स्थानविदा स्मरेण द्वितीयमौर्वीमिव कार्मुकस्य ॥' इति । अत्र हि रसाभिनिविष्टचेतसो महाकवेर्भणितौ शक्तितिरोहितत्वादविमृष्टविधेयांशताख्यो दोषो न स्फुटतरं प्रतीयते । तदुक्तं ध्वनिकृता—'अव्युत्पत्तिकृतो दोषः शक्त्या संव्रियते कवेः । यस्त्वशक्तिकृतस्तस्य स झटित्यवभासते ॥' इति । इह तत्तदीप्सितवस्तूपभोगे पारतन्त्र्यमपि नास्तीत्याह—**तरुच्छायेत्यादि** ॥ वनदेवताकथितमनुवदति—**किमत्रोच्यते इति** ॥ उक्तेऽर्थे न कस्यापि विमतिरिति भावः । अत्रोक्तमर्थं सोपपत्तिकं प्रसाधयति—**प्रियप्रायेति** ॥ यत्साधूनां वृत्तिः प्रियप्राया वाचि नियमो विनयमधुरः मतिः प्रकृत्या कल्याणी परिचयः अनवगीतः तत्पुरो वा पश्चाद्वा अविपर्यासितरसं अनुपधि विशुद्धं इदं रहस्यं विजयते इत्यन्वयः । **वृत्तिः** शरीरव्यापारः । अभ्युत्थानप्रत्युद्गमनादयश्चेष्टाविशेषाः ।

**पुरो वा पश्चाद्वा तदिदमविपर्यासितरसं**
**रहस्यं साधूनामनुपधि विशुद्धं विजयते ॥ २ ॥**

(उपविशतः ।)

**वनदेवता**—कां पुनरत्रभवतीमवगच्छामि ।

**तापसी**—आत्रेय्यस्मि ।

---

**प्रियप्राया** प्रायेण प्रिया । प्रायःशब्देनेष्टानुवर्तनस्य दुष्करत्वं व्यज्यते । **नियमो** नितरां यमः । उपरम इत्यर्थः । मितभाषणमिति यावत् । **विनयमधुरः** प्रश्रयेण मधुरः हृदयंगम इति यावत् । **प्रकृत्या** स्वभावत एव **कल्याणी** शुभा । **अनवगीतः** अवगीतरहितः । अवगीतमवज्ञा । भावे निष्ठा । परिचयो हि प्रायेणावज्ञाकरो भवति । तदुक्तम्—'चिरपरिचयादवज्ञा भवति विशिष्टेऽपि वस्तुनि प्रायः' इति । सतां तु प्रत्युत आदरातिशयहेतुरिति भावः । **पुरः** इतरेतरपरिज्ञानात्पूर्वम् । वाशब्दो विकल्पे । **पश्चात्** परिचयदशायाम् । अविपर्यासितोऽपरिवृत्तो रसास्वादो यस्य तत् । एकरूपमित्यर्थः । **अनुपधि** निष्कैतवम् । 'उपधिश्छद्मकैतवे' इत्यमरः । **विशुद्धं** दुर्जनवचनादिना कालान्तरेऽपि कलुषीभावानर्हम् । **इदं** अविसंवादि । **रहस्यं** रहोभवम् । समागमानन्तरप्रवर्तनीयमितरजनाविज्ञेयं च मिथश्चित्तवृत्त्यैक्यं, चेष्टितमित्यर्थः । सख्यमिति यावत् । प्रियप्राया वृत्तिरिति पुरोऽविपर्यासितरसत्वे हेतुः, विनयमधुरो वाचि नियम इति पश्चादविपर्यासितरसत्वे, प्रकृत्या कल्याणी मतिरित्यनुपधित्वे, अनवगीतः परिचय इति विशुद्धत्वे । कायवाङ्मनोवृत्तीनामन्योन्यानुकूलतया हि सर्वेषां मिथः संगतस्य लोकोत्तरत्वम् । अतस्तादृशसज्जनसंगतलाभान्ममापि सुदिनं जातमिति भावः । एवं वाऽस्य संगतिः । यथेच्छेत्यादिवनदेवतावचनश्रवणजातहर्षा तत्कर्तृकस्य निखिलस्वविभवसमर्पणरूपस्योपचरणस्य निरतिशयत्वं प्रतिपादयितुं प्रशंसनमाक्षिप्य तापसी कथयति—किमत्रोच्यत इति । किंशब्दः क्षेपे । अत्र एवंविधेऽतिथिपूजने । उच्यते श्लाघ्यते । अत्र वचनमात्रस्यानुपयोगात्तद्विशेषभूते प्रशंसने पर्यवसानम् । विशिष्टस्य हि प्रशंसावचनेन न्यूनतैव स्यादिति भावः । तदुक्तम्—'मुसल्यं क्षुल्लत्वं नयति जडधीरीडनपदैः' इति । ईदृशस्योपचरणस्य लोकोत्तरत्वे हेतुमाह—प्रियप्रायेत्यादिना । साधूनां तत् रहस्यं इदं विजयते इत्यन्वयः । तच्छब्देन प्रियप्रायेत्यादिना प्रतिपादितोऽर्थः परामृश्यते । रहस्यं सारतरादपि सारत्वेनाभिमतं वस्तु । परोपच्छन्दनसिद्धान्त इति यावत् । इदं सर्वाकारेणापि मत्परतया त्वयि इदानीं उपलभ्यमानं विजयते निखिलमपि न्यक्कृत्यावतिष्ठत इति । कां पुनरत्रभवतीमवगच्छामीति वचोभङ्ग्या तापसीं प्रति भक्तिबहुमानादयः

वनदेवता—आर्ये आत्रेयि, कुतः पुनरिहागम्यते, किंप्रयोजनो दण्डकारण्योपवनप्रचारः ।

आत्रेयी—

अस्मिन्नगस्त्यप्रमुखाः प्रदेशे
भूयांस उद्गीथविदो वसन्ति ।
तेभ्योऽधिगन्तुं निगमान्तविद्यां
वाल्मीकिपार्श्वादिह पर्यटामि ॥ ३ ॥

वनदेवता—यदा तावदन्येऽपि मुनयस्तमेव हि पुराणब्रह्मवादिनं प्राचेतसमृषिं ब्रह्मपारायणायोपासते, तत्कोऽयमार्यायाः प्रवासव्यवसायः ।

आत्रेयी—तत्रहि महानध्ययनप्रत्यूह इत्येष दीर्घप्रवासोऽङ्गीकृतः ।

वनदेवता—कीदृशः ।

आत्रेयी—तत्र भगवतः केनापि देवताविशेषेण सर्वप्रकाराद्भुतं

---

प्रतीयन्ते । **कुतः** कस्माद्दिग्विभागात् । पुनःशब्दो वाक्यालंकारे । **अगस्त्यप्रमुखा इति** ॥ अगस्त्य एव प्रकृष्टं मुखं आदिर्येषां ते । अगस्त्यादधिकोऽत्र कोपि नास्तीति भावः । **भूयांसः** बहवः । **उद्गीथविद इति** ॥ उद्गीथोपासनादिविद इत्यर्थः । प्रणवस्योद्गीथात्मकतया श्रुतावुपास्यत्वविधानात् । **तेभ्यः** उपासनाविशेषविद्भ्यः **अधिगन्तुं** ज्ञातुम् प्राप्तुं वा **निगमान्तविद्याम्** निगमान्तप्रतिपादितां विद्याम् संसारमोचनसाधनभूताम् । स्वरूपोपासनमिति यावत् । **वाल्मीकिपार्श्वात्** वाल्मीकिपार्श्वं विहाय । ल्यब्लोपे पञ्चमी । यदेति हेतौ । तावच्छब्दो वाक्यालंकारे । **अन्येऽपि** तद्व्यतिरिक्ता बहवोऽपि । मुनय इत्यनेन साधनचतुष्टयसंपन्नत्वमाह । **तमेव** वाल्मीकिम् । एवशब्दार्थमुन्मीलयति—**पुराणब्रह्मवादिनमिति** ॥ **ब्रह्मपारायणाय** ब्रह्म साकल्येनाधिगन्तुम् । 'साकल्यासंगवचने पारायणपरायणे' इत्यमरः । **तत्** तस्मात् । किंशब्दः क्षेपे । **प्रवासव्यवसायः** प्रवासे देशान्तरगमने व्यवसायः समुद्योगः । आचार्यान्तरस्वीकरणप्रयत्न इति यावत् । **तत्र** वाल्मीकिपार्श्वे । हिशब्दः प्रसिद्धौ । **महान्** अपरिहरणीयः । **अध्ययनप्रत्यूहः** वेदान्ताभ्यसनप्रत्यूहः । 'विघ्नोऽन्तरायः प्रत्यूहः' इत्यमरः । इतिर्हेतौ । **दीर्घप्रवास इति** ॥ चिरायितप्रत्यापत्तिकं विदेशगमनमित्यर्थः । **कीदृश इति** ॥ अध्ययनप्रत्यूह इत्यनुषज्यते । **सर्वप्रकाराद्भुतमिति** ॥

स्तन्यत्यागमात्रके वयसि वर्तमानं दारकद्वयमुपनीतम् । तत्खलु न केवलमृषीणामपि तु चराचराणां भूतानामान्तराणि तत्त्वान्युपस्नेहयति ।

**वनदेवता**—अपि तयोर्नामसंविज्ञानमस्ति ।

**आत्रेयी**—तयैव किल देवतया तयोः कुशलवाविति नामनी प्रभावश्चाख्यातः ।

**वनदेवता**—कीदृशः प्रभावः ।

**आत्रेयी**—तयोः किल सरहस्यानि जृम्भकास्त्राणि जन्मसिद्धानीति ।

**वनदेवता**—अहो नु भोश्चित्रमेतत् ।

**आत्रेयी**—तौ च भगवता वाल्मीकिना धात्रीकर्म वस्तुतः प्रतिगृह्य

---

आकृत्या मतिवैभवेन महासत्त्वतया प्रभावेन च सकलजनविस्मयनीयामित्यर्थः । **स्तन्यत्यागमात्र इति** ॥ स्तन्यत्यागः स्तन्यपानपरिहरणम् । तदेव मात्रा परिच्छेदो यस्य तस्मिन् । अवधारणे वा मात्रशब्दः । स्तन्यत्याग एव केवलं यस्मिन् तस्मिन्नित्यर्थः । अत ईदृशातिरिक्तं वयोऽनेन व्यावर्त्यते । वयोऽवलम्बमानमित्यर्थः । गार्हस्थ्ये वर्तत इत्युक्तेर्गार्हस्थ्यमवलम्बत इत्यर्थः । तद्वदिहापीति द्रष्टव्यम् । **दारकद्वयम्** अर्भकद्वयम् । **उपनीतं** समीपं नीतम् । स्तन्यपानावसानकाल एवानीतमिति यावत् । **आन्तराणि** अन्तर्वर्तीनि । **तत्त्वानि** इन्द्रियाणि मनोबुद्ध्यादीन्यन्तःकरणानीत्यर्थः । तथाचाहुः—'मनो बुद्धिरहंकारश्चित्तं चेति चतुर्विधम् । संशयो निश्चयो गर्वः स्मरणं विषया अमी ॥' इति । **उपस्नेहयति** स्वगुणातिशयवशादनुरञ्जयति । **नामसंविज्ञानमिति** ॥ नाम्नः संविज्ञानं सम्यग्विज्ञानम् । **तयैव** दारकद्वयोपनेत्र्या देवतयैव । किलेति वार्तायाम् । **आख्यातं** कथितम् । **सरहस्यानि** मुष्टिप्रयोगसंहारादिरहस्ययुक्तानि । **जन्मसिद्धानि** जन्मना सहैव सिद्धानि स्वतःसिद्धानीति यावत् । **चित्रं** विस्मयकरं **एतत्** अस्त्राणां जन्मसिद्धत्वम् । भगवता वाल्मीकिना धात्रीकर्म वस्तुतः प्रतिगृह्य तौ पोषितौ रक्षितौ चेति योजना । **वस्तुतः** परमार्थतः । सम्यगित्यर्थः । उपादेयबुद्ध्येति यावत् । वस्तुशब्दः परमार्थभूतवस्तुस्वरूपवाची । तथा चोक्तम्—'विकल्पो वस्तुनिर्भासादसंवादादुपप्लवः' इति । अथवा आभिजात्यादिगुणवचनो वस्तुशब्दः । तदुक्तं मालविकाग्निमित्रे—'आकृतिविनयप्रत्ययान्नैनामूनवस्तुकां संभावयामि' इति । **प्रतिगृह्य** सादरं स्वीकृत्य । अशनदानादिकं पोषणं, शरीरबाधापरिहरणं

पोषितौ रक्षितौ च। निर्वृत्तचौलकर्मणोश्च तयोस्त्रयीवर्जमितरास्तिस्रो विद्याः सावधानेन परिनिष्ठापिताः। तदनन्तरं भगवता गर्भैकादशे वर्षे क्षात्रेण कल्पेनोपनीय त्रयीविद्यामध्यापितौ। न त्वेताभ्यामतिप्रदीप्तप्रज्ञाभ्यामस्मदादेः सहाध्ययनयोगोऽस्ति। यतः—

वितरति गुरुः प्राज्ञे विद्यां यथैव तथा जडे
न तु खलु तयोर्ज्ञाने शक्तिं करोत्यपहन्ति वा।
भवति हि पुनर्भूयान्भेदः फलं प्रति तद्यथा
प्रभवति शुचिर्बिम्बोद्ग्राहे मणिर्न मृदां चयः॥ ४॥

**वनदेवता**—असावयमध्ययनप्रत्यूहः।

---

रक्षणम्। **तयोः** कुशलवयोः। अधिकरणे सप्तमी। **त्रयीवर्जमिति**॥ उपनयनानन्तरमेव त्रय्यामधिकाराद्वेदवेदाङ्गपरिकरव्यतिरेकेणैवेत्यर्थः। **इतरास्तिस्र इति**॥ राज्ञामधिकृतासु चतसृष्वात्मज्ञानार्थानर्थावबोधनयानयज्ञानोपायभूता आन्वीक्षिक्याद्यास्तिस्रो विद्या इत्यर्थः। तथाच कामन्दकः—'आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्च शाश्वती। विद्याश्चतस्र एवैता लोकसंस्थितिहेतवः॥' इति। **परिनिष्ठापिताः** सम्यक् स्थिरीकृताः। **गर्भैकादश इति**॥ क्षत्रियाणां तथा विधानात्। **क्षात्रेण कल्पेन** क्षत्रियोचितक्रियाकलापेन। **अध्ययनयोगः** अध्ययनोपायः। 'योगः सन्नहनोपायध्यानसंगतियुक्तिषु' इत्यमरः। अत्र हेतुमाह—**अतिप्रदीप्तप्रज्ञाभ्यामिति**॥ सामान्येन विशेषं समर्थयति—**वितरतीति**॥ **वितरति** उपदिशति। अत्र वितरणं तद्विशेषभूत उपदेशे परिणमति। **गुरुः** आचार्यः। **प्राज्ञे** बुद्धिमति। **विद्यां** पुरुषार्थज्ञानसाधनभूतं शब्दार्थराशिम्। **यथैव** यावता प्रपञ्चेन। **तथा** अविकलमेव। **जडे** सकृद्ग्रहणासमर्थेऽपि। **तयोः** प्राज्ञजडयोः। **ज्ञाने** ग्रहणे। **शक्तिं** नैपुण्यं **करोति** संपादयति **अपहन्ति** प्रतिबध्नाति। **भूयान्** अतिशयितः। **भेदो** विशेषः। तरतमभाव इति यावत्। **फलं प्रति** विद्वत्तायाम्। तच्छब्देन फलं प्रति भूयान् भेदो भवतीति वाक्यार्थः परामृश्यते। **शुचिः** निर्मलः। **बिम्बोद्ग्राहे** अभिमुखावस्थितवस्तुप्रतिबिम्बने। **मृदां** विशकलितानामवयवानां **चयः** पिण्डीभूतोऽवयवी। अत्र विशेषे प्रस्तुते सामान्यप्रशंसनादप्रस्तुतप्रशंसालंकारः। स च दृष्टान्तेनानुगृहीत इति संकरः। असौ अध्ययनविघ्नः अयं इति योजना। **असौ** इदानीमेव त्वया कथितः। **अयं** सहाध्ययनयोगाभावरूपः। काका प्रश्नः। न केवलमयमेवेत्याह—**अन्यच्चेति**॥

आत्रेयी—अन्यच्च ।

वनदेवता—अथापरः कः ।

आत्रेयी—अस्ति स ब्रह्मर्षिरेकदा मध्यंदिनसवने नदीं तमसामनुप्रपन्नः । तत्र युग्मचारिणोः क्रौञ्चयोरेकं व्याधेन वध्यमानं ददर्श । आकस्मिकप्रत्यवभासां देवीं वाचमव्यतिकीर्णवर्णामानुष्टुभेन छन्दसा परिच्छिन्नामभ्युदैरयत् ।

मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।
यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम् ॥ ५ ॥

वनदेवता—आम्नायादन्यत्र नूतनश्छन्दसामवतारः ।

आत्रेयी—तेन पुनः खलु समयेन तं भगवन्तमाविर्भूतशब्दब्रह्मप्र-

---

विघ्नकारणवस्तुमात्रपरामर्शनादन्यदित्युक्तम् । चकारः समुच्चये । **अथापरः क इति** ॥ अध्ययनप्रत्यूह इत्यनुषज्यते । तमपि कथयति—**अस्तीति** ॥ तिङन्तप्रतिरूपकमिदमव्ययं वाक्यारम्भे । **मध्यंदिनसवने** मध्याह्नकाले । **वध्यमानमिति** ॥ वध हिंसायामिति भौवादिकात् । **आकस्मिकप्रत्यवभासाम्** आकस्मिको निर्हेतुः प्रत्यवभासः प्रकाशो यस्याः तां देवीं **वाचम्** संस्कृतभाषाम् **अव्यतिकीर्णवर्णाम्** असंकीर्णवर्णविभागाम् स्थानप्रयत्नादिजनितवर्णशुद्धिमतीमित्यर्थः । **आनुष्टुभेन** अनुष्टुभा छन्दसा । 'स्वार्थेऽण्वाच्यः' इति स्वार्थेऽण् । **छन्दसा** वृत्तेन **परिच्छिन्नां** नियमिताम् । अनुष्टुप्छन्दोविहितवर्णगणविन्यासामित्यर्थः । **अभ्युदैरयत्** अवोचत् । तामेव कथयति—**मा निषादेति** ॥ हे निषाद त्वं शाश्वतीः समाः प्रतिष्ठां मा अगमः इत्यन्वयः । **शाश्वतीः** शश्वदेव प्रवर्तमानाः । मनुष्यलोकसंबन्धिन्य इति यावत् । अथवा शश्वद्भवाः शाश्वता देवाः तत्संबन्धिन्य इति । दिव्याः समा इति यावत् । अत्यन्तसंयोगे द्वितीया । **प्रतिष्ठां** स्थितिं शुभगतिमिति वा । अडागमश्छान्दसः । अनेकदिव्यसंवत्सरातिक्रमणेऽपि तव संसरणदुःखात् उत्तारो मा भूदित्यर्थः । किं पुनस्तादृशं मया कृतमित्यत्राह—**यदिति** ॥ पुनः पापस्य प्रकृष्टतामाह—**क्रौञ्चमिथुनादेकमिति** ॥ ततो विप्रकर्षमाह—**काममोहितमिति** ॥ आम्नायादन्यत्र छन्दसां नूतनः अवतारः चित्र इति योजना । आम्नायो वेदः । **तेन** अभ्युदीरणपरिच्छिन्नेन । पुनःशब्दो विशेषे । खलुरवधारणे । समयेनेति करणे तृतीया । अत्र समयस्यावगमनाक्रियाकारणसामग्र्यन्तर्भावमात्रेण साधकतमत्वमुपचर्यते । रामायणकथाप्रणयनरूपस्य वचनक्रियाफलस्यात्र लब्धत्वादपवर्गे वा तृतीया ।

काशमृषिमुपसंगम्य भगवान्भूतभावनः पद्मयोनिरवोचत्—'ऋषे, प्रबुद्धोऽसि वागात्मनि ब्रह्मणि। प्रब्रूहि रामचरितम्। अव्याहतं ज्योतिरार्षं ते चक्षुः प्रातिभम्। आद्यः कविरसि।' इत्युक्त्वा तत्रैवान्तर्हितः। अथ स भगवान्प्राचेतसः प्रथमं मनुष्येषु शब्दब्रह्मणस्तादृशं विवर्तमितिहासं रामायणं प्रणिनाय।

**वनदेवता**—हन्त मण्डितः संसारः।

---

**तं** दिव्यवाणीसमुदीरकं तं **भगवन्तं** ऐश्वर्यादिषड्गुणविशिष्टम्। **आविर्भूतेति**॥ आविर्भूतः शब्दब्रह्मणो वैखरीसंज्ञितस्य पराविवर्तस्य प्रकाशो यस्मिंस्तम् **ऋषिं** तपोगरिष्ठम्। **भगवान्** शब्दब्रह्मप्रकाशवेदी। **पद्मयोनिः** गर्भवासाद्यनुपहतज्ञानेन्द्रियः। **ऋषे** तपस्विवर्य। **प्रबुद्धः** प्रबोधवान्। कर्तरि क्तः। **वागात्मनि** शब्दब्रह्मणि विषये। **प्रब्रूहि** संदर्भेण कथय। **रामचरितम्** श्रुतिमनोमधुरम्। नन्वविदितस्वरूपं तद् कथमहं कथयेयमित्यत्राह—**अव्याहतमित्यादि**॥ ते चक्षुरिति संबन्धः। **ते** समुल्लसितदिव्यवाणीविलासस्य। **चक्षुः** निखिलपदार्थप्रकाशकमिन्द्रियम्। मदनुग्रहादस्त्येवेति शेषः। ननु कुड्यकुसूलादिवस्तुव्यवहितं वस्तु न चक्षुः प्रकाशयेदित्यत्राह—**अव्याहतमिति**॥ देशकालादिव्यवहितवस्तुप्रकाशकमित्यर्थः। नन्वालोकसहायमेव चक्षुः स्वविषये ज्ञानं जनयेदित्यत्राह—**ज्योतिः** प्रकाशान्तरानपेक्षमित्यर्थः। नन्वाशयादिदोषसंभवे विपर्ययेणैव चक्षुरवगमयेदित्यत्राह—**आर्षमिति**॥ ननु संबन्धमन्तरेण चक्षुषः कथं ज्ञानजनकत्वमित्यत्राह—**प्रातिभमिति**॥ प्रतिभैव प्रातिभम्। प्रज्ञादित्वाद स्वार्थेऽण्। **आद्यः** प्राथमिकः। कौति शब्दायति इति कविः। तत्तद्रसाद्यनुगुणप्रतिभानुप्राणितविभावादिवर्णनात्मकान् संदर्भान् करोतीत्यर्थः। तथा चोक्तम्—'प्रज्ञा नवनवोन्मेषशालिनी प्रतिभा मता। तदनुप्राणनाजीवद्वर्णनानिपुणः कविः॥' इति। कु शब्द इति धातुः। इतिशब्दः प्रकारे। **तत्रैव** वाल्मीकिपुरत एव। अथशब्द आनन्तर्ये। पद्मयोनेरन्तर्धानानन्तरमित्यर्थः। **सः** पितामहेनैवमनुगृहीतः सन् **भगवान्** दिव्यज्ञानसंपन्नः **प्राचेतसः** वाल्मीकिः। मनुष्येष्विति सप्तम्या अनन्यत्रभावोऽर्थः। **शब्दब्रह्मणः** सूक्ष्माया वाचः **तादृशं** शब्दतोऽर्थतश्च मधुरं **विवर्तं** परासंज्ञितायाः परादेवतायाः वैखर्यात्मकतृतीयोपाधिपरिच्छिन्नं स्वरूपम् **इतिहासं** सुहृत्संमितत्वने पुरुषार्थोपदेशप्रवणं संदर्भविशेषं **प्रणिनाय** प्रणीतवान्। विरचितवानित्यर्थः। हन्तेति हर्षे। **मण्डितः** अलंकृतः। रामचरितप्रणयनादिति भावः। **संसारो** मनुष्यजन्म। अत्र संसार इति बन्धहेतौ मनुष्य-

आत्रेयी—तस्मादेव हि ब्रवीमि तत्र महानध्ययनप्रत्यूह इति ।
वनदेवता—युज्यते ।
आत्रेयी—विश्रान्तास्मि भद्रे संप्रत्यगस्त्याश्रमस्य पन्थानं ब्रूहि ।
वनदेवता—इतः पञ्चवटीमनुप्रविश्य गम्यतामनेन गोदावरीतीरेण ।
आत्रेयी—(सास्रम्) अप्येतत्तपोवनं पञ्चवटी । अपि सरिदियं गोदावरी । अप्ययं गिरिः प्रस्रवणः । अपि जनस्थानवनदेवता वासन्ती त्वम् ।
वनदेवता—अस्त्येतत्सर्वम् ।
आत्रेयी—हा वत्से जानकि ।

स एष ते वल्लभवस्तुवर्गः
प्रासङ्गिनीनां विषयः कथानाम् ।
त्वां नामशेषामपि दृश्यमानः
प्रत्यक्षदृश्यामिव नः करोति ॥ ६ ॥

जन्मन्यध्यवसायः । पश्चादिजन्मनि तु धर्माधर्मविधानासंभवेन शरीरबन्धहेतुत्वाभावात् । पूर्वोक्तं निगमयति—**तस्मादिति** ॥ **युज्यत इति** ॥ अध्ययनप्रत्यूहः इत्यनुषज्यते । **विश्रान्तास्मि** विगतक्लमास्मि । **संप्रतीति** ॥ अध्वपरिश्रमापनोदपर्यन्तमेव हि पथिकजनानां कुत्रचिदवस्थानमिति भावः । **अगस्त्याश्रमस्य पन्थानं** अगस्त्याश्रमगामिनं मार्गं, **इतः** अस्मात्प्रदेशात् । **पञ्चवटीमनुप्रविश्येति** ॥ पुरतो दृश्यमानं पञ्चवटीसंज्ञितं वनं प्रविश्येत्यर्थः । **गम्यतामिति** ॥ अस्याभ्यन्तरभूतेनैव मार्गेण गन्तव्यमित्यर्थः । **गोदावरीतीरेणेति** ॥ पञ्चवटीवनातिक्रमणेऽपि पुनर्गोदावरीतीरं न मोक्तव्यमिति भावः । अथ वनदेवतावचनजातप्रत्यभिज्ञा तापसी सशोकं पृच्छति—**अप्येतदिति** । अस्तीत्येतदनुवादद्योतकमव्ययम् । त्वया पृष्टं सकलमपि तथैवेत्यर्थः । **स इत्यादि** ॥ वल्लभानामिष्टानां वस्तूनां वर्गः समूहो **वल्लभवस्तुवर्गः** । **प्रासंगिनीनाम्** प्रकृष्ट आसंगः प्रासंगः तद्वतीनाम् । प्रासंगिकीनामिति वा पाठः । प्रसंगवशादागतानामित्यर्थः । **नामशेषां** कथामात्रावशेषाम् । **प्रत्यक्षदृश्यामिवेति** ॥ नयनविषयीकरणोचितामिवेत्यर्थः । **नः** अस्माकम् । अशक्यवस्त्वन्तरकरणात्मा विशेषोऽत्रालंकारः ।

१. तथैव तत्सर्वम् २. शाखिवर्गः; बन्धुवर्गः. ३. प्रासङ्गिकीनां ४. दृष्टामिव

**वासन्ती**—(सभयम्। स्वगतम्।) कथं नामशेषेत्याह। (प्रकाशम्।) किमत्याहितं सीतादेव्याः।

**आत्रेयी**—न केवलमत्याहितम्, सापवादमपि। (कर्णे) एवमेवम्।

**वासन्ती**—हहह दारुणो दैवनिर्घातः। (इति मूर्च्छति।)

**आत्रेयी**—भद्रे, समाश्वसिहि समाश्वसिहि।

**वासन्ती**—हा प्रियसखि, ईदृशस्ते निर्माणभागः। हा रामभद्र। अथवा अलं त्वया। आर्ये आत्रेयि, अथ तस्मादरण्यात्परित्यज्य निवृत्ते लक्ष्मणे सीतायाः किं वृत्तमिति काचिदासीत्प्रवृत्तिः।

**आत्रेयी**—नहि नहि।

**वासन्ती**—हा कष्टम्। अरुन्धतीवसिष्ठाधिष्ठितेषु कुलेषु जीवन्तीषु च वृद्धासु राज्ञीषु कथमिदं जातम्।

**आत्रेयी**—ऋश्यशृङ्गसत्रे गुरुजनस्तदासीत्। संप्रति परिसमाप्तं

---

ननु स्मरणं, सदृशवस्त्वन्तरदर्शनाभावात्। तदुक्तम्—'विना प्रसिद्धमाधारमाधेयस्य व्यवस्थितिः। एकात्मा युगपद्वृत्तिरेकस्यानेकगोचरा॥ अन्यत् प्रकुर्वतः कार्यमशक्यस्यान्यवस्तुनः। तथैव करणं चेति विशेषस्त्रिविधः स्मृतः॥' इति। अथ तापसीवचनपरिशङ्कितसीताविपत्तिर्वनदेवता सविषादं पृच्छति—**किमत्याहितमिति**॥ अत्याहितं जीवितनिरपेक्षं कर्म। 'अत्याहितं महाभीतिः कर्म जीवानपेक्षि च' इत्यमरः। सीतादेव्या इत्यनेनात्याहितस्यासंभावनीयता द्योत्यते। न केवलमित्यनेनान्यदप्यश्रद्धेयं किमपि जातमिति व्यज्यते। किं पुनस्ततोऽप्यधिकमित्यत्राह—**सापवादं चेति**॥ अत्याहितमित्यनुषज्यते। हहहेति खेदे। **दारुणः** क्रूरः। **दैवनिर्घात इति**॥ दैवस्य नितरां घातो दैवनिर्घातः। दैवोपहतिरित्यर्थः। दैवाज्जातो निर्घात इति वा। प्रतिकूलदिग्भवयोर्वातयोरितरेतराभिहतिरूपः प्रचण्डरवः कश्चिदुत्पातविशेषः। अप्रतिविधेयत्वादिसाधर्म्यादपवादेऽध्यवसायः। निर्माणस्य सृष्टेः भागो विशेषः **निर्माणभागः**। ईदृशी खलु ते सृष्टिरित्यर्थः। अथवा निर्माणस्य प्रारब्धकर्मणो भागः पर्यन्तो निर्माणभाग इति। अथशब्दः प्रश्ने। **वृत्तमिति**॥ भावे क्तः। इतिर्हेतौ। काचिदासीत् प्रवृत्तिः इत्यत्र काकुः। सीतावृत्तान्तमवगन्तुं त्वया किं प्रयतितमित्यर्थः। **अरुन्धतीवसिष्ठाधिष्ठितेषु** अरुन्धतीवसिष्ठाभ्यां संरक्षितेषु। **जीवन्तीषु** वर्तमानासु **वृद्धासु** शक्याशक्यविवेचनकुशलासु **राज्ञीषु** अनतिक्रमणीयशासनासु। **ऋश्यशृङ्गसत्रे** जामातृयज्ञे **गुरुजनः** अरुन्धतीवसिष्ठौ मातरश्च **तदा** सीताप-

द्वादशवार्षिकं सत्रम् । ऋश्यशृङ्गेण च संपूज्य विसर्जिता गुरवः । ततो भगवत्यरुन्धती नाहं वधूरहितामयोध्यां गच्छामीत्याह । तदेव राममातृभिरनुमोदितम् । तदनुरोधाद्भगवतो वसिष्ठस्य[१] परिबुद्धा मतिः—वाल्मीकितपोवनं गत्वा तत्र वत्स्याम इति ।

**वासन्ती**—अथ स राजा किमाचारः संप्रति ।

**आत्रेयी**—तेन राज्ञा क्रतुरश्वमेधः प्रक्रान्तः ।

**वासन्ती**—हहह धिक् । परिणीतमपि ।

**आत्रेयी**—शान्तम् । नहि नहि ।

**वासन्ती**—का तर्हि यज्ञे सहधर्मचारिणी ।

**आत्रेयी**—हिरण्मयी सीताप्रतिकृतिः ।

**वासन्ती**—हन्त भोः

वज्रादपि कठोराणि मृदूनि कुसुमादपि ।
लोकोत्तराणां चेतांसि को हि निज्ञातुमर्हति ॥ ७ ॥

---

रित्यागकाले । **विसर्जिताः** अयोध्यां प्रतीति शेषः । **ततः** विसर्जनानन्तरं **भगवती** तत्क्षणप्रवृत्तदिव्यज्ञानसंपन्ना । **वधूरहितां** सीतावियुक्ताम् । **तदेव** अरुन्धतीकथितमेव । **राममातृभिः** कौसल्यादिभिः । **अनुमोदितम्** अश्लाघि । **तदनुरोधात्** अरुन्धत्यादीनामिच्छया । अनो रुध काम इति धातुः । **भगवतः** दिव्यज्ञानवतः । **परिबुद्धा** जाता **मतिः** आगामिविषया । तथा चाहुः—'बुद्धिस्तात्कालिकी प्रोक्ता मतिरागामिगोचरा' इति । **सः** धर्मदारपरित्यागी **राजा** लोकानुरञ्जनपरः **किमाचारः** कीदृशव्यापारपरः । **तेन** सीतापरित्यागिना **राज्ञा** स्वार्थविमुखेन **प्रक्रान्तः** आरब्धः । हहहेति खेदे । धिङ्निन्दायाम् । **परिणीतमपीति** ॥ न केवलमियं गुणवती परित्यक्ता, या काचिदपि स्वीकृता चेति कष्टमस्याविमृश्यकारितेत्यपिशब्देन द्योत्यते । **शान्तमिति** ॥ महदुपालम्भश्रवणेन मम यत् पातकमुपजातं तच्छमम्पयात्वित्यर्थः । **न हि न हीति** ॥ पुनः परिणयनं न कृतमित्यर्थः । का तर्हीत्यनेन क्रत्वनुष्ठानस्यानुपपत्तिः सूचिता । **हिरण्मयी** स्वर्णमयी **सीता-प्रतिकृतिः** सीताप्रतिच्छन्दः । अथ तथाविधप्रियतमापरित्यागानुसारेण रामभद्रस्यातिनृशंसतामुत्प्रेक्ष्य पुनरपि सीताप्रतिकृतिसहायतयैव क्रत्वनुष्ठानश्रवणादनितरसाधारणमहिम्नः तस्य चित्तवृत्तिपरिज्ञानाय शतधृतेरपि मनीषा न

---

१. वसिष्ठस्यापि श्रद्धा ; वसिष्ठस्य परिशुद्धा वाचो

**आत्रेयी**—विसृष्टश्च वामदेवानुमन्त्रितो मेध्याश्वः। उपकॢप्ताश्च यथाशास्त्रं तस्य रक्षितारः। तेषामधिष्ठाता लक्ष्मणात्मजश्चन्द्रकेतुरवाप्तदिव्यास्त्रसंप्रदायश्चतुरङ्गसाधनान्वितोऽनुप्रहितः।

**वासन्ती**—(सहर्षस्नेहकौतुकास्रम्) कुमारलक्ष्मणस्यापि पुत्र इति मातर्जीवामि।

**आत्रेयी**—अत्रान्तरे ब्राह्मणेन मृतं पुत्रमुत्क्षिप्य राजद्वारि सोरस्ताडमब्रह्मण्यमुद्घोषितम्। ततो न राजापचारमन्तरेण प्रजायामकालमृत्युः संचरतीत्यात्मदोषं निरूपयति करुणामये रामभद्रे, सहसैवाशरीरिणी वागुदचरत्—

---

पारयतीति सामान्येन समर्थयति—**हन्त भो इति**॥ अत्र दुर्बोधे वस्तुनि सुबोधताप्रत्ययजनितानुशये निपातसमुदायः। **वज्रादपि** कठिनतरादपि **कठोराणि** कठिनानि **मृदूनि** अशक्तानि **कुसुमादपि** मृदुतमादपि। **लोकोत्तराणां** अपरिमेयमहिम्नाम् **चेतांसि** हृदयानि। किंशब्दः क्षेपे। हिरवधारणे। **निर्ज्ञातुं** साकल्येनावधारयितुम् **अर्हति** समर्थो भवति। प्रस्तुतरामभद्रहृदयापरिज्ञेयत्वस्य अप्रस्तुतसामान्येन समर्थनादप्रस्तुतप्रशंसालंकारः। **विसृष्टः** संचारितः। **वामदेवानुमन्त्रित इति**॥ वसिष्ठस्य तत्रासन्निधानादिति भावः। **मेध्याश्वो** हिंस्याश्वः। मेधृ हिंसायामिति धातुः। **उपकॢप्ताः** कल्पिताः। **यथाशास्त्रमिति**॥ विधिवचनमनतिक्रम्येत्यर्थः। **तस्य** अश्वस्य **रक्षितारः** प्रत्येकं शतसंख्या दण्डिनिषङ्गयादयः। **तेषां** रक्षितॄणां पुरुषाणाम् **अधिष्ठाता** रक्षिता **चतुरङ्गसाधनान्वितः** गजतुरगादिचतुर्विधाङ्गसहितेन साधनेन सैन्येनान्वितः **अनुप्रहितः** पश्चात् प्रेषितः। लक्ष्मणस्य पुत्रजननाद्धर्षः तद्विषयश्च स्नेहः। अवाप्तदिव्यास्त्रसंप्रदाय इति कौतुकम्। बालकस्य सतः क्रूरे कर्मण्यनुप्रेषणादस्रं, सीतापुत्रप्रेषणसमुचिते कर्मणि लक्ष्मणपुत्रप्रेषणानुस्मृतसीतापरित्यागव्यथया वा। **जीवामि** जीवनफलमनुभवामि। **अत्रान्तरे** अस्मिन्नवसरे। **ब्राह्मणेन** विषयवासिना **मृतं** जननमात्र एव गतजीवितं **पुत्रं** स्वसंतानम् **उत्क्षिप्य** रक्षितृजननिवेदनरीत्या विसृज्य **राजद्वारि** जनसंचरणमार्गे **अब्रह्मण्यं** राजदुश्चेष्टितं **उद्घोषितं** उच्चैः समुदीरितम्। **ततः** तथाविधनिजदोषसमुदीरणानन्तरं **राजापचारमन्तरेण** राजदुर्वृत्तं विना। प्रजायामिति जातावेकवचनम्। इति हेतौ। **आत्मदोषं** स्वप्रमादम् **निरूपयति** विचिन्तयति **करुणामये** करुणाविधेये **रामभद्रे** परदुःखदुःखिनि **अशरीरिणी** शरीरमनाश्रिता **उद्-**

शम्बूको नाम वृषलः पृथिव्यां तप्यते तपः।
शीर्षच्छेद्यः स ते राम तं हत्वा जीवय द्विजम् ॥ ८ ॥

इत्युपश्रुत्यैव कृपाणपाणिः पुष्पकमधिरुह्य सर्वा दिशो विदिशश्च शूद्रतापसान्वेषणाय जगत्पतिः संचरितुमारब्धवान्।

वासन्ती—शम्बूको नाम धूमपः शूद्रोऽस्मिन्नेव जनस्थाने तपश्चरति। तदपि नाम रामभद्रः पुनरिदं वनमलंकुर्यात्।

आत्रेयी—भद्रे, गम्यतेऽधुना।

वासन्ती—आर्ये आत्रेयि, एवमस्तु। कठोरीभूतस्तु दिवसः। तथाहि—

कण्डूलद्विपगण्डपिण्डकषणाकम्पेन संपातिभि-
र्घर्मस्रंसितबन्धनैः स्वकुसुमैरर्चन्ति गोदावरीम्।
छायापस्किरमाणविष्किरमुखव्याकृष्टकीटत्वचः
कूजत्क्लान्तकपोतकुक्कुटकुलाः कूले कुलायद्रुमाः ॥ ९ ॥

(इति परिक्रम्य निष्क्रान्ते।)

इति शुद्धविष्कम्भः।

---

**चरत्** उपरिभागादभूत्। सा पुनः कीदृशीत्यत्राह—**शम्बूक इति** ॥ **वृषलः** तपस्यनधिकारी। **पृथिव्यामिति** ॥ यत्र कुत्रापीति भावः। तप्यत इति करोत्यर्थे। तप आर्जयतीति लब्धोऽर्थः। अत्र कर्मनिर्देशेऽपि कर्तुर्वृषलस्यात्मीयतपनक्रिययैव त्वगस्थिभावेन क्रियाफलाश्रयत्वात् कर्मवद्भावेन 'तपस्तपःकर्मकस्यैव' इत्यनेन कर्मकर्तरि यक्। **शीर्षच्छेद्यः** शीर्षच्छेदार्हः **सः**। **तम्** अनधिकृतकर्मविधायिनं विरुद्धकारिणं वृषलं **हत्वा** निगृह्य **जीवय** सप्राणं कुरु **द्विजं** अवश्यरक्षणीयम्। **इत्युपश्रुत्यैव** ॥ दिव्यवागुपलब्धिसमय एव। **जगत्पतिः** लोकरक्षणव्यसनी। **अपि नामेति** ॥ दैवप्रार्थनायामयं निपातसमुदायः। पुनश्शब्द आवृत्तौ। **अलंकुर्यादिति** ॥ संभावनायां लिङ्। गम्यत इति भावे, प्राप्त्यर्थस्यात्र विवक्षाभावात्। तापसीकथितमनुवदति—**एवमस्त्विति**। **कठोरीभूत इति** ॥ जरठीभूत इत्यर्थः। दिवस इत्यातपदिवसयोरभेदोपचारेणोक्तम्। उक्तमर्थमुपपादयति—**तथाहीति** ॥ तथाहि कूले कुलायद्रुमाः गोदावरीमर्चन्ति इत्यन्वयः। **तथा** दिवसकठोरतया, हिर्हेतौ। **कूले** तीरे कुलायभूता द्रुमाः **कुलायद्रुमाः**। पक्षिणां

---

१. नामाधोमुखः

(ततः प्रविशति पुष्पकस्थः सदयोद्यतखड्गो रामः ।)

रामः—

हे हस्त दक्षिण मृतस्य शिशोर्द्विजस्य
जीवातवे विसृज शूद्रमुनौ कृपाणम् ।
रामस्य बाहुरसि निर्भरगर्भखिन्न-
सीताप्रवासनपटोः करुणा कुतस्ते ॥ १० ॥

---

निलयनद्रुमा इत्यर्थः । कुलाययुक्ता द्रुमाः कुलायद्रुमा इति वा । 'कुलायो नीडमस्त्रियाम्' इत्यमरः । **गोदावरीं** स्वकीयसंपत्कारणभूताम् **अर्चन्ति** पूजयन्ति । कथमित्यत्राह—**स्वकुसुमैरिति** ॥ यथालाभसमुचितोपचारयोग्यैरित्यर्थः । तत्प्रसादैकलब्धानां कुसुमानां प्रत्यर्पणं कुर्वन्तीवेति गम्यमानेयमुत्प्रेक्षा । कीदृशा वृक्षा इत्यत्राह—**छायेति** ॥ छायायामनातप एव देशेऽपस्किरमाणैर्भक्षणार्थं चरणनखैर्भुवमवलिखद्भिर्विष्किरैः पक्षिभिः मुखेन चञ्च्वा व्याकृष्टाः कीटत्वचः कीटजग्धास्त्वचो येषां ते । 'अपाच्चतुष्पाच्छकुनिष्वालेखने' इति सुट् । हर्षजीविकाकुलायकरणेष्विति वक्तव्यमित्यात्मनेपदम् । पुनरपि कीदृशा इत्यत्राह—**कूजदिति** ॥ कूजन्ति क्षुधा तृषा क्रन्दन्ति क्लान्तानि आतपोष्मणा सीदन्ति कपोतकुक्कुटानां कुलानि येषु ते । कीदृशैः कुसुमैरित्यत्राह—**कण्डूलद्विपगण्डपिण्डकषणाकम्पेन संपातिभिरिति** ॥ आतपावशुष्कमदनिष्यन्दरुद्धकटविवरतया कण्डूलानां कण्डूसहितानां द्विपगण्डपिण्डानां गर्भितमदजलतया नितरामेव पिण्डीभूतानां वनकरिकपोलानां कषणैर्य आकम्पः समन्ताच्चलनं तेन संपातिभिः सम्यगवश्यमेव पतद्भिरित्यर्थः । आवश्यकाधमर्ण्ययोरित्यादिनाऽऽवश्यकार्थे णिनिः । कण्डूलशब्दः सिद्धादिषु द्रष्टव्यः । ननु तीरद्रुमाणां नीरसंसर्गवशाद्दृढतरवृन्तबन्धनानि कुसुमानि कथं करिकपोलकषणैः परिपतेयुरित्यत्राह—**घर्मस्रंसितबन्धनैरिति** ॥ घर्मेणातपोष्मणा स्रंसितं शिथिलबन्धनं वृन्तसंश्लेषो येषां तैः ॥ **इति विष्कम्भकः** ॥ अथ शूद्रमुनिसमाधिसंदर्शनसमयसमुदीयमानामात्मनो दयाविधेयतां रघुपतिः स्वभुजे समारोप्य साधिक्षेपमाह—**हे हस्तेति** ॥ **हे हस्त** मनोऽभिलषितसंपादकेषु कर्मेन्द्रियेषु प्रधानभूत । **दक्षिण** वामेतरभूत । अनेन सततमपि ममेप्सितकारिणस्तवेदानीं न प्रातिकूल्यमुचितमिति व्यज्यते । कस्मिन् कार्ये मयानुकूलेन भवितव्यमित्यत्राह—**कृपाणं विसृजेति** ॥ **कृपाणं** निग्रहसमर्थम् । दृढग्रहणाद्विमोचनमात्रमेव त्वया कार्यं, निग्रहे पुनरयं समर्थ एवेत्यर्थः । कृपू सामर्थ्ये इत्यस्मादौणादिक आणक्प्रत्ययः । **विसृज** प्रक्षिप । ननु विरोधिष्वेव कृपाणविसर्जनमुचितं नात्र

(कथंचित्प्रहृत्य) कृतं रामसदृशं कर्म । अपि जीवेत्स ब्राह्मणवत्सः ।

(प्रविश्य)

दिव्यपुरुषः—जयतु देवः ।

दत्ताभये त्वयि यमादपि दण्डधारे
संजीवितः शिशुरसौ मम चेयमृद्धिः ।
शम्बूक एष शिरसा चरणौ नतस्ते
सत्सङ्गतानि[1] निधनादपि तारयन्ति ॥ ११ ॥

कश्चिद्विरोधी दृश्यत इत्यत्राह—**शूद्रमुनाविति** ॥ दण्डनीयपदवीमनुवर्तमान इत्यर्थः । ननु स्वोत्कर्षमात्रपरतया तपस्यन्नयं न निग्राह्य इत्यत्राह—**मृतस्येति** ॥ **मृतस्य** एतत्तपसैव गतजीवितस्य **शिशोः** अर्भकस्य **द्विजस्य** अवश्यरक्षणीयस्य **जीवातवे** जीवनौषधं संपादयितुम् । क्रियार्थेत्यादिना चतुर्थी । शूद्रमुनिगळच्छेद एव द्विजबालजीवनौषधमित्यर्थः । अथवा जीवनौषधवाचिनाऽत्र जीवातुशब्देन तत्कार्यभूतं जीवनं लक्ष्यते । दोषशङ्कानिवर्तनं च फलम् । नन्वतिकृपणेऽस्मिंस्तपस्विनि कथमहं कृपाणं विसृजेयमित्यत्राह—**रामस्येति** ॥ **रामस्य** निर्दयजनमूर्धाभिषिक्तस्य **बाहुः** ईप्सितविधायी । अत्र रामशब्दो निर्भरगर्भखिन्नसीताप्रवासनपटोरिति विशेषणानुगृहीतत्वेन निर्दयार्थत्वमभिसंक्रामति । **कृतं रामसदृशं कर्मेति** ॥ पूर्वमत्युदात्तचरिता सहधर्मचारिणी मया परित्यक्ता, इदानीं पुनस्तथाविधस्तपस्वी निहत इत्यहो मे राजधर्मानुवर्तनपरतन्त्रतेति भावः । अत्रापिशब्दः प्रश्नार्थमुन्मुच्य जिज्ञासायां पर्यवस्यति । संभावनायां लिङ् । **सः** गोपुरद्वारि मृतकः समानीतः **ब्राह्मणवत्सः** अकर्तव्यशतकरणेनापि समुज्जीवयितुमुचितः । अथ रघुनाथशस्त्रप्रहारप्रभावजातदिव्यशरीरस्य शूद्रमुनेः पुण्यलोकप्राप्तिं वक्तुमुपक्रमते—**प्रविश्येति** ॥ **दिव्यपुरुषः** अणिमाद्यैश्वर्यसंपन्नः । **दत्ताभय इति** ॥ यमादपीत्यपिशब्देन निराकृतयमभयस्य तवेतरभयसमुच्छेदने कियान् प्रयास इति व्यज्यते । **दण्डधारे** दण्ड्यदण्डविधायिनि । रक्षितरीति यावत् । **असौ** यस्य जीवनमिदानीं युष्माभिरभिलभ्यते । **संजीवितः** युष्मत्प्रभावेन समुपजातजीवनः । **मम** अन्त्यजन्मतया निकृष्टस्यापि **इयम्** अवाङ्मनसगोचरा **ऋद्धिः** अभ्युदयसंपत्तिः । अभूदिति शेषः । एतादृशसमृद्धियुक्तः को वा भवान् इह वा किमर्थमागतः इत्यत्राह—**शम्बूक इति, शिरसा चरणौ नतस्त इति च** ॥ द्विजसुतवृत्तमात्मवृत्तं च सामान्येन समर्थयति—**सत्संगतानीति** ॥ निधनादपीति ल्यब्लोपे पञ्चमी । निधनं विधा-

१. सत्सङ्गजानि निधनान्यपि तारयन्ति

रामः—द्वयमपि प्रियं नः । तदनुभूयतामुग्रस्य तपसः परिपाकः ।

यत्रानन्दाश्च मोदाश्च यत्र पुण्यादिसंभवः[1] ।
वैराजा नाम ते लोकास्तैजसाः सन्तु ते ध्रुवाः[2] ॥ १२ ॥

शम्बूकः—युष्मत्प्रसादोपादान एष महिमा । किमत्र तपसा । अथवा महदुपकृतं तपसा ।

अन्वेष्टव्यो यदसि भुवनैर्भूतनाथः[3] शरण्यो
मामन्विच्छन्निह[4] वृषलकं योजनानां शतानि ।

---

यापीत्यर्थः । **तारयन्ति** शुभगतिं प्रापयन्ति । अर्थान्तरन्यासोऽत्रालंकारः । **द्वयमपीति** ॥ **द्वयं** द्विजबालजीवनं तावकाभ्युदयश्चेत्यर्थः । **तत्** तस्मात् । अनुभूयतामिति प्राप्तकाले लोट् । **उग्रस्य** क्रूरस्य । कृच्छ्रोपार्जितत्वादक्षुद्रफलस्येत्यर्थः । **परिपाकः** तत्तद्भोगरूपेणैव परिणामः । स पुनः कुत्रेत्यत्राह—**यत्रेति** ॥ ते वैराजा नाम ते लोकाः सन्तु इत्यन्वयः । **ते** उत्कृष्टतपसः **वैराजा** विराट्संबन्धिनः । अत्र विराडिति विराडन्तर्यामी कथ्यते । प्रपञ्चव्यतिरेकेण विराट्शब्दवाच्यस्य कस्यचिदनुपपत्तेः । यस्तु स्थावरजङ्गमात्मकस्य प्रपञ्चस्य नियन्ता विष्णुः तस्य लोकाः वैकुण्ठाख्या इत्यर्थः । **तैजसाः** तेजोमयाः । ब्रह्माण्डाद्बहिर्भूतत्वेन दिवाकरादितेजःप्रतिभासनासंभवात् स्वयंप्रकाशा इत्यर्थः । **ते** तादृग्भूताः । निरुक्तिपदवीमतिक्रान्ता इत्यर्थः । **लोका इति** ॥ पूजायां सर्वत्र बहुत्वमिष्टमिति बहुवचनम् । स्वर्गादिलोकेभ्यः को वा तेषामतिशय इत्यत्राह—**यत्रेति** ॥ निर्विषयं सुखमानन्दः । सविषयं तु मोदः । ननु सुकृतवशलभ्यानां तद्विनाशपर्यन्तत्वे कीदृशस्तेषामतिशय इत्यत्राह—**पुण्यादिसंभव इति** ॥ ब्रह्मोपासनाजनितपुण्यवशात्तद्वासिनां न कदाचिद्विच्युतिरित्यर्थः । एतदेवाह—**ध्रुवा इति** ॥ **युष्मत्प्रसादोपादान इति** ॥ युष्मत्प्रसाद एवोपादानः कारणं यस्य सः । **एषः** इदानीं लब्धः **महिमा** देवैरप्यसुलभ उत्कर्षः । किंशब्दः क्षेपे । **अत्र** अस्मिन् महिम्नि **तपसा** हेतौ तृतीया । तपो न कारणमित्यर्थः । आक्षिप्तमेव पुनः समाधत्ते—**अथवेति** ॥ **महदुपकृतं** अतिशयेनोपकृतम् । भावे निष्ठा । उक्तमर्थमुपपादयति—**अन्वेष्टव्य इति** ॥ त्वं वृषलकं मां अन्विच्छन् योजनानां शतानि क्रान्त्वा इह प्राप्तः यत् सः इह तपसः संप्रसादः इत्यन्वयः । असीति त्वमर्थेऽव्ययम् । **वृषलकं** अतिनिकृष्टं शूद्रं **मां** अनधिकृतकर्मविधायिनम् **अन्विच्छन्** अन्वेषणं कुर्वन् । हेतौ शतृ । **क्रान्त्वा** अतिक्रम्य **इह** अस्मिन् प्रदेशे **प्राप्तः** समा-

---

१. पुण्याश्च संपदः २. शिवाः ३. भुवने लोकनाथः ४. मामन्विष्यन्

क्रान्त्वा प्राप्तः स इह तपसः संप्रसादोऽन्यथा हि
कायोध्यायाः पुनरुपगमो दण्डकायां वनेऽस्मिन् ॥ १३ ॥

रामः—किं नाम दण्डकेति । (सर्वतोऽवलोक्य) हा, कथम्—

स्निग्धश्यामाः क्वचिदपरतो भीषणाभोगरूक्षाः
स्थाने स्थाने मुखरककुभो झांकृतैर्निर्झराणाम् ।
एते तीर्थाश्रमगिरिसरिद्गर्तकान्तारमिश्राः
संदृश्यन्ते परिचितभुवो दण्डकाविन्ध्यभागाः ॥ १४ ॥

---

गतवान् यत् स इति विधेयलिङ्गतया । **इह** एतादृशादिव्यत्वलाभे **तपसः** अविहितस्यापि **संप्रसादः** सम्यक्प्रसादः । अधिकारिलभ्यादुत्कृष्टफलनिर्वाहकत्वमिति यावत् । अत्र हेतुमाह—**अन्वेष्टव्य इति** ॥ न केवलमस्माभिरित्याह—**भुवनैरिति** ॥ अत्रापि हेतुमाह—**भूतनाथ इति** ॥ भूतानामीशितेत्यर्थः । अत एवाह—**शरण्य इति** ॥ तत्र साधुरिति यत् । शरणे समाश्रयणे योग्य इत्यर्थः । शाखादित्वादिवार्थे वायं—शरणं गृहं, तद्वदाश्रयभूतेत्यर्थः । एवं समागमस्य तपःप्रसादैकलभ्यतामन्वयमुखेन प्रतिपाद्य व्यतिरेकेणापि कथयति—**अन्यथेति** ॥ हिरवधारणे भिन्नक्रमः । को वेत्यर्थः । को वेत्यसंभावनायाम् । पुनश्शब्दो भेदे आवृत्तौ वा । इह पूर्वोपगमः पितृनियोगात्, इदानीं तु तपसः संप्रसादादित्यर्थः । दण्डकायामिति अधिकरणे सप्तमी । दण्डकाश्रयेऽस्मिन् वन इति । इतरथा दण्डकायां वन इति सामानाधिकरण्यानुपपत्तेः । यद्वा संज्ञात्वेन नियतलिङ्गतया 'वेदाः प्रमाणम्' इत्यादिवत् । विन्ध्यशैलाधित्यकायाः कश्चित्प्रदेशो दण्डका । तथाच वक्ष्यति—'एते तीर्थाश्रमगिरिसरिद्गर्तकान्तारमिश्राः संदृश्यन्ते परिचितभुवो दण्डकाविन्ध्यभागाः' इति । **किं नामेति** ॥ किंशब्दो जिज्ञासायाम् । नामेति संभावनायाम् । इतिशब्द उक्तौ । इह दण्डकेति कथितं कथं वा भवेदित्यर्थः । 'किं पृच्छायां जुगुप्सने' इति 'नाम प्राकाश्यसंभाव्यक्रोधोपगमकुत्सने' इति चामरः । किमयमेव प्रदेशो दण्डकेति कथ्यते उतान्यः कश्चनेति सम्यगवधारयितुं सर्वतो दत्तदृष्टिः सैवेयमिति प्रत्यभिजानाति—**हेति** ॥ कथं परिचितभुवो दण्डकाविन्ध्यभागा एते संदृश्यन्ते हा इत्यन्वयः । कथमिति वितर्के । वितर्कश्चात्र निश्चयासन्नः । उभयथा खलु इह कथंशब्दो निष्पन्नः । एको वितर्कद्योतको निपातः । अन्यस्तु थमुप्रत्ययान्तः किंशब्दप्रकृतिकः प्रश्नाद्यर्थः । अयं तु वितर्कद्योतको निपातः । **परिचितभुव इति** ॥ परिचिता भुवः प्रदेशा येषु ते । सीताविस्रम्भसाक्षिभूता इति यावत् । दण्डकासंज्ञका विन्ध्यभागा दण्डकाविन्ध्यभागाः । एत

---

१. तपसां २. न्यथा चेत् ३. वने वः ४. दण्डकारण्यभागाः

**शम्बूकः**—दण्डकैवैषा । अत्र किल पूर्वं निवसता देवेन

चतुर्दश सहस्राणि चतुर्दश च राक्षसाः[1] ।
त्रयश्च दूषणखरत्रिमूर्धानो रणे हताः ॥ १५ ॥

येन च सिद्धक्षेत्रे जनस्थानेऽस्मिन्मादृशामपि जानपदानामकुतोभयः संचारः संवृत्तः ।

**रामः**—न केवलं दण्डकैव, जनस्थानमपि ।

---

इत्यभिनीयोक्तिः । कुत इत्यत्राह—**स्निग्धेति** ॥ स्निग्धाश्च श्यामाश्चेति कर्मधारयः । वृक्षलतादिशून्याः कोमळनीलबहुळतृणसंछन्नाः केचित्प्रदेशा इत्यर्थः । अपरत इति सप्तम्यर्थे तसिः । **भीषणेति** ॥ भीषणेन भयजनकेनाभोगेन परिपोषेण रूक्षा नयनोद्वेगकारिणः । श्वापदसंकुलतया निबिडतरतरुवृन्दबद्धलतापटलनिरुद्धनिखिलावकाशतया च दुर्विगाहा इत्यर्थः । स्थाने स्थान इति वीप्सायां द्विर्वचनम् । **निर्झराणां** क्षुद्रनदीनाम् । **झात्कृतैः** प्रवाहस्खलनध्वनिभिः । **मुखरककुभः** नादितदिशः । **तीर्थाश्रमगिरिसरिद्गर्तकान्तारमिश्रा इति** ॥ तीर्थैः पावनैः, आश्रमैः मुनिजननिवासैः, गिरिभिः, सरिद्भिः, गर्तैः गुहाभवनैः, कान्तारैश्च मिश्राः । अत्र गर्तशब्देन वनवासवेलायां सीताया विलासमन्दिरभूताः सुसंवृतापवरकगृहायमाणा गुहा एव विवक्ष्यन्त इति बोद्धव्यम् । तथाच बालरामायणे—'त्वक् तारवी निवसनं मृगचर्म शय्या गेहं गुहा विपुलपत्रपुटा घटाश्च । मूलं दलं च कुसुमं च फलं च भोज्यं पुत्रस्य जातमटवीगृहमेधिनस्ते ॥' इति । उक्तमेवार्थमनुवदति—**दण्डकैवेति** ॥ संप्रतिपत्तिमप्युपपादयति—**अत्रेति** ॥ अत्र निवसता त्वया राक्षसाः हताः किल इत्यन्वयः । **निवसता** निवासं कुर्वता । कस्मिन्नवसर इत्यत्राह—**पूर्वमिति** ॥ वनवासवेलायामिति भावः । किलेति वार्तायाम् । किमितरबलसहायेनेत्यत्राह—**देवेनेति** ॥ किमु ये केचिदेवेत्यत्राह—**चतुर्दश सहस्राणीति** ॥ किं वा केचित्पदातय एव त इत्यत्राह—**चतुर्दश चेति** ॥ किं वा सैनिकास्तदध्यक्षाश्चैवेत्यत्राह—**त्रयश्चेति** ॥ किमुत छद्मना कथंचिदित्यत्राह—**रण इति** ॥ **येनेति** ॥ हननेनेत्यर्थः । चशब्दोऽवधारणे । **सिद्धक्षेत्रे** पुण्यक्षेत्रे **जनस्थाने** तन्नामधेये **अस्मिन्** वने **मादृशां** निस्सारतया जन्तुमात्रगणनार्हाणाम् । अपि विरोधे । **जानपदानां** काननवासकातराणाम् । कुतोऽपि भयं नास्तीति **अकुतोभयः** ॥ अथ प्रासंगिकं जनस्थानकथनमुपश्रुत्य सविषादमाह—**न केवलमिति** ॥ क्षते क्षारार्पणकल्पं ममेदानीं जनस्थानदर्शनमिति भावः । बाढमित्यनुवादे ।

---

१. रक्षसां भीमकर्मणां

शम्बूकः—बाढम् । एतानि खलु सर्वभूतरोमहर्षणान्युन्मत्तचण्डश्वापदकुलाक्रान्तविकटगिरिगह्वराणि जनस्थानपर्यन्तदीर्घारण्यानि दक्षिणां दिशमभिप्रवर्धन्ते[1] । तथाहि—

निष्कूजस्तिमिताः क्वचित्क्वचिदपि प्रोच्चण्डसत्त्वस्वनाः
स्वेच्छासुप्तगभीरघोरभुजग[2]श्वासप्रदीप्ताग्नयः ।
सीमानः प्रदरोदरेषु विरलस्वल्पाम्भसो यास्वयं
तृष्यद्भिः प्रतिसूर्यकैरजगरस्वेदद्रवः पीयते ॥ १६ ॥

अत्रापि संप्रतिपत्तिमाह—**एतानीति** ॥ **सर्वभूतरोमहर्षणानि** सर्वभूतभयजनकानि । भयेनापि रोमाञ्चः संभवेदेव । हेतुमाह—**उन्मत्तेति** ॥ उन्मत्तानामहंकृतानां चण्डानामतिक्रूराणां श्वापदानां हिंस्रमृगाणां कुलैर्यूथैः आक्रान्तानि स्वीकृतानि विकटानि विस्तृतानि गिरिगह्वराणि पर्वतकन्दराणि येषु तानि । **जनस्थानपर्यन्तदीर्घाणि** जनस्थानस्य पर्यन्तोऽवधिर्यावत् तावद्दीर्घाणि । एतानीत्यभिनीयोक्तिः । **दक्षिणां दिशमभिप्रवर्धन्ते** दक्षिणदिशमभिमुखीकृत्य प्रवर्धन्ते । उक्तमेव प्रतिपादयति—**तथाहीति** ॥ तथाहि प्रदरोदरेषु सीमानः क्वचिन्निष्कूजस्तिमिताः क्वचिदपि प्रोच्चण्डसत्त्वस्वनाः क्वचिच्च स्वेच्छासुप्तगभीरघोरभुजगश्वासप्रदीप्ताग्नयः इत्यन्वयः ॥ **तथा** उक्तरूपतया । हिर्हेतौ ॥ **प्रदरोदरेषु** प्रदराणां कन्दराणाम् उदरेषु अन्तर्भागेषु **सीमानः** प्रदेशाः । 'सीमसीमे स्त्रियामुभे' इत्युक्तेः स्त्रीलिङ्गता । **निष्कूजस्तिमिताः** तत्तत्प्राणिविरुतश्रवणाभावान्निर्विकारा इत्यर्थः । अथवा निश्चलत्ववाचकेन स्तिमितशब्देनापरिच्छेद्यत्वं लक्ष्यते । एकार्थसमवायः संबन्धः । अक्षोभ्यताप्रतीतिः फलम् । बलवतापि कारणेन चाञ्चल्यरहितानां हि स्वरूपं दुर्विज्ञेयमेव । 'स्तिमितं निश्चले क्लिन्ने' इति विश्वः ॥ **प्रोच्चण्डेति** ॥ प्रोच्चण्डाः श्रवणकटवः सत्त्वस्वना यासु ताः ॥ **स्वेच्छासुप्तगभीरघोरभुजगश्वासप्रदीप्ताग्नयः** स्वेच्छासुप्तानाम् अत एव गभीराणाम् अपरिमेयसत्त्वानां घोराणां क्रूराणां भुजगानां श्वासैः प्रदीप्ता अग्नयो यासु ताः । निस्साराणां हि जन्तूनां बलवत्सत्त्वभीत्या न स्वेच्छया निद्रागमः । न केवलमेतावता सर्वभूतोद्वेगजनकत्वम् अपितु मरुप्रायतयापीत्याह— **विरलस्वल्पाम्भस इति** ॥ विरलं दुर्लभतरं स्वल्पाम्भः स्वल्परूपमप्यम्भो यासु ताः । तथाच बालरामायणे—'विन्ध्याध्वानो विरलसलिलास्तर्षिणी तत्र सीता' इति । उक्तमेवार्थमुपपादयति—**यास्विति** ॥ यासु सीमासु । अयमित्यभिनीयोक्तिः ॥ **तृष्यद्भिः** पिपासद्भिः **प्रतिसूर्यकैः** सूर्यप्रतिकूलतयैव सततमवस्थानात्तन्नामकैर्मृगवि-

१. दिशमभिवर्तन्ते २. गभीरभोगभुजग

**रामः—**

**पश्यामि च जनस्थानं भूतपूर्वं खरालयम् ।**
**प्रत्यक्षमिव वृत्तान्तान्पूर्वाननुभवामि च ॥ १७ ॥**

(सर्वतोऽवलोक्य) **प्रियरामा हि सर्वथा वैदेह्यासीत् । एतानि नाम कान्ताराणि । किमतः परं भयानकं स्यात् ।** (सास्रम् ।)

---

शेषैः **अजगरस्वेदद्रवः** अजगराणां घर्मजलनिष्यन्दः **पीयते** तृट्प्रतीकारार्थमुपयुज्यते । प्रतिसूर्यः कृकलास इति केचित् । 'कृकलासस्तु सरटः प्रतिसूर्य' इति शब्दरत्नाकरे । वाहसोऽजगरः शयुरिति वैजयन्ती । अथ शम्बूकवचनसमुपजातदृढप्रत्ययस्तदुक्तिमनुवदन्नाह—**पश्यामीति** ॥ **पश्यामि** अवलोकयामि । **भूतपूर्वं खरालयमिति** ॥ चिरकालमेव खरालयतया स्थितमित्यर्थः । प्रत्यक्षमित्यनुभवक्रियाविशेषणम् । **वृत्तान्तान्** शूर्पणखासंपाततद्विरूपकरणखरवधसीतापहरणादिकान् पूर्वान् वृत्तान्तान् **अनुभवामि** विगलिततदंशतया प्रत्येमि । अत्र जनस्थानदर्शनपूर्ववृत्तान्तानुभवक्रिययोर्यौगपद्यकथनात्तुल्ययोगिता । यौगपद्यद्योतकश्चात्रालंकारः । प्रत्यक्षमिवेत्यत्र तु पूर्ववृत्तान्तादुत्प्रेक्षा । ननु स्मरणक्रियैवानुभूतिक्रियात्वेन किमिति न संभाव्यते इति चेन्नैवम् । उत्प्रेक्षायामध्यवसायप्राधान्यतया क्रियायाः क्रियान्तरेण संबन्धानुपपत्तेः । अत एव हि—'लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः' इत्यत्र व्यापनादिक्रिया लेपनादिक्रियात्वेन नोत्प्रेक्ष्यते किंतु तत्क्रियत्वेन तम एव । नचात्मगतधर्मस्येवार्थत्वानुपपत्तेः वस्तुगतधर्म एवोत्प्रेक्षानिमित्तमिति वाच्यम् । 'मृगानुसारिणं साक्षात्पश्यामीव पिनाकिनम्' इत्यत्रात्मगतायाः दर्शनक्रियाया उत्प्रेक्षानिमित्तत्वेन व्याख्यातृभिरभिहितत्वात् । नचात्मावस्थोत्प्रेक्ष्येति न राजाज्ञेत्यालंकारिकवचनाच्च । अथ मन्थराप्रोत्साहितकेकयेश्वरसुताप्रथमनिबन्धनान् प्रियतमापरित्यागपर्यन्तान् सर्वानपि वृत्तान्तान् निमज्जनोन्मज्जनन्यायेनानुसंदधानो रघुपतिर्मृदुलतरशिरीषकुसुमकेसरलवपरिपतनमप्यसहमानायाः सीतायाः घोरतरवनवासानुवृत्तिव्यवसायेन परिस्फुटं स्वविषयमनुरागातिशयमनुचिन्त्य नितरां परिमूढहृदय आह—**प्रियरामेति** ॥ प्रियः प्राणेभ्यो गरीयान् रामो यस्याः सा । हिरवधारणे । **सर्वथा** लोकापवादपरिदूषितचरितापीत्यर्थः । सर्वावस्थासु वर्तमानेन रामेण सहावस्थानेऽपीति वा । कृतघ्नेन तु मया तदानीं किमपि न निरूपितामिति बलवती खल्वियमविमृश्यकारितेति भावः । कथं पुनरिदानीमेतदवधार्यत इत्यत्राह—**एतानीति** ॥ वागिन्द्रियातिवर्तीनीत्यर्थः । नामेति कुत्सायाम् । किंशब्दः क्षेपे ।

---

१. प्रियारामा २. एतानि तानि नाम

त्वया सह निवत्स्यामि वनेषु मदगन्धिषु ।
इतीहारमतैवासौ स्नेहस्तस्याः स तादृशः ॥ १८ ॥

अपि च ।

अकिंचिदपि कुर्वाणः सौख्यैर्दुःखान्यपोहति ।
तत्तस्य किमपि द्रव्यं यो हि यस्य प्रियो जनः ॥ १९ ॥

---

**अतः** अस्मात् । वागिन्द्रियाविषयतया वस्तुक्रमपरामर्शनादेकवचनम् । **परम्** अन्यत् उपरीति वा । संभावनायां लिङ् । एतत्स्वरूपे परामृश्यमाने सकलमपि भयानकभूतं वस्तु हृदयानुकूलमेवेत्यर्थः । अतः किमित्यत्राह—**त्वयेति** ॥ असौ मदगन्धिषु वनेषु त्वया सह निवत्स्यामि इति इह अरमत एव इत्यन्वयः । **असौ** वैदेही **मदगन्धिषु** वनमहीरुहेषु मत्तकरिकपोलकषणेनातिबहुलविनिस्सरद्गजमदगन्धवाहितया नितरां भयानकेष्वित्यर्थः । इतिशब्द उक्तौ । **इह** वने **अरमत** अप्रीयत । कथं पुनरस्मत्साहाय्ये तादृशभयनिवृत्तिरित्यत्राह—**स्नेहस्तस्याः स तादृश इति** ॥ तस्या इत्यनेन सीतास्नेहस्य स्वस्नेहाद्व्यतिरेकं द्योतयति । **सः** तत्तदवस्थासु परिदृष्टः । **तादृशः** येन वा दुःखरूपेष्वपि सुखप्रतीतिः स्यात् तावानित्यर्थः । तदुक्तम्—'दुःखमप्यधिकं चित्ते सुखत्वेनैव रज्यते । येन स्नेहप्रकर्षेण स राग इति गीयते ॥' इति । उक्तमर्थं सामान्येन समर्थयति—**अपिचेति** ॥ सौख्यैः कुर्वाणः दुःखानि अकिञ्चिदपि अपोहतीत्यन्वयः । **सौख्यैः** सुखहेतुत्वेन प्रसिद्धैः पदार्थैः **कुर्वाणो** व्याप्रियमाणः **दुःखानि** शारीराणि मानसानि च **अकिञ्चिदपि** न किञ्चिदपि । प्रसज्यप्रतिषेधे नञ् । अश्राद्धभोजीत्यादिवत्समासः । पर्युदासे वा नञ् । पर्युदासो हि निषेधवैपरीत्यम् । बहुकुर्वाणोऽपीत्यर्थः । केवलं न त्यजति प्रत्युत करोत्येवेति काका प्रकाश्यते इति । एवं वा—अकिञ्चिदपीत्यत्र अ इति निषेधवाचको निपातः । 'निषेधे न ह्य नो नापि' इत्यमरः । दुःखानि कुतो न त्यजतीत्यत्राह—**तदिति** ॥ यः जनः यस्य प्रियः तत्तस्य किमपि द्रव्यं हीति योजना । **यस्य** जनस्य । तदिति विधेयलिङ्गतया जनमाचष्टे । **किमपि** अनिर्वचनीयं **द्रव्यं** प्रधानतमं वस्तु । द्रव्यमिति समर्थेऽर्थे इवार्थयदन्ततया 'द्रव्यं च भव्ये' इति सूत्रे निपातनात् सिद्धम् । पुष्पफलत्वात् दुरिवेष्टसाधनक्षमः प्रियजन इत्यर्थः । द्रूयते गम्यते रसादिभिरिति द्रव्यशब्देनौषधं वा कथ्यते । प्रियजन एव सर्वेषां दुःखापनोदनक्षममौषधमित्यर्थः । 'द्रव्यं गुणानामाधारे भेषजे योग्यवित्तयोः' इति वैजयन्ती । अतः सर्वथापि वैदेही प्रियरामैवासीदिति पूर्वेण संबन्धः । अत्र

---

१. मधुगन्धिषु २. न किंचिदपि

शम्बूकः—तदलमेभिर्दुरासदैः । अथैतानि मदकलमयूरकण्ठ-कोमलच्छविभिरवकीर्णानि पर्वतैः, अविरलनिविष्टनीलबहुलच्छाय-तरुणतरुषण्डमण्डितानि असंभ्रान्तविविधमृगयूथानि पश्यतु महानु-भावः प्रशान्तगम्भीराणि मध्यमारण्यानि ।

इह समदशकुन्ताक्रान्तवानीरवीरु-
त्प्रसवसुरभिशीतस्वच्छतोया वहन्ति ।
फलभरपरिणामश्यामजम्बूनिकुञ्ज-
स्खलनमुखरभूरिस्रोतसो निर्झरिण्यः ॥ २० ॥

सौख्यैरकिंचिदपि कुर्वाणो दुःखान्यपोहतीत्यनेन प्रस्तुतस्य वैदेह्याः प्रियरा-मत्वस्य समर्थनाद्विशेषप्रस्तावे सामान्यकथनरूपाप्रस्तुतप्रशंसा । अथ जनस्था-नकाननसंदर्शनेन परिदूयमानमानसं रघुपतिं प्रति शम्बूकस्यानुनयमाह—**अल-मिति** ॥ एभिः काननैरलमिति संबन्धः । अलमिति निषेधे । हेतुमाह—**दुरा-सदैरिति** ॥ चेतस्संमोहदायिभिरित्यर्थः । कुत्र वा पुनर्नयने विनोदनीये इत्यत्राह—**अथेति** । अथ महानुभावः एतानि मध्यमारण्यानि पश्यतु इति संबन्धः । अथशब्दो व्यतिरेकं द्योतयति । महानुभाव इति युष्मदर्थे ॥ यथा महाभागपुण्यात्मप्रभृतयः । **मध्यमारण्यानि** मध्यभवान्यरण्यानि । मध्यान्म इति मः । एतानि किमन्येभ्यो दर्शनीयानि इत्यत्राह—**प्रशान्त-गम्भीराणीति** ॥ नयनानुद्वेगकारित्वं प्रशान्तत्वम्, अपरिमेयपरिपोषता गाम्भीर्यम् । द्वितयमप्येतत् सोपपत्तिकं प्रसाधयति—**अवकीर्णानीति** ॥ निचितानीत्यर्थः । **पर्वतैः** महाशैलैः । कीदृग्भूतैरित्यत्राह—**मदकलमयूर-कण्ठकोमलच्छविभिरिति** ॥ मदकलानां सर्वकालीनेन काननशीतलिम्ना प्रवृद्धमदानां मयूराणां कण्ठैः कोमला स्निग्धनीला छविर्येषां तैः । **अवि-रलनिविष्टनीलबहुलच्छायतरुणतरुषण्डमण्डितानि** अविरलानि अत एव नीलबहुलच्छायानां तरुणानां पुष्पफलादिसमृद्धिमतां तरूणां षण्डैः समू-हैर्मण्डितान्यलंकृतानि । ननु श्वापदकुलाक्रान्तानीत्याह—**असंभ्रान्तमृगयू-थानीति** ॥ असंभ्रान्तान्यभीतानि मृगयूथानि येषु तानि । अतिशयितं चैत-द्विनोदनस्थानमित्याह—**इहेति** ॥ इह निर्झरिण्यः वहन्ति इत्यन्वयः । **इह** मध्यमारण्ये **निर्झरिण्यः** क्षुद्रनद्यः **वहन्ति** अविच्छेदेन स्यन्दन्ते । कथं-भूता इत्यत्राह—**समदशकुन्ताक्रान्तेति** ॥ समदैः शकुन्तैराक्रान्तानां व्याकुलीकृतानां वानीरवीरुधां प्रसवैः पुष्पैः सुरभि सौरभ्ययुक्तं शीतं प्रच्छा-

१. वानीरमुक्तप्रसव

अपि च ।

माद्यद्दन्तिकपोलमण्डलगलद्दानाम्बुसिक्तद्रुमाः
क्रीडत्क्रोडकुलार्धचर्वितदलन्मुस्तारसामोदिताः ।
अन्तःसुस्थितपान्थमन्थरमरुल्लोलल्लतामण्डपाः
एतास्ता न हरन्ति कस्य हृदयं मध्यस्थलीभूमयः ॥२१॥

दधति कुहरभाजामत्र भल्लूकयूना-
मनुरसितगुरूणि स्त्यानमम्बूकृतानि ।

---

यशीतलं स्वच्छं च तोयं यासु ताः । पुनः कीदृशा इत्यत्राह—**फलभरप-रिणामेति** ॥ फलभराणां फलसमृद्धीनां परिणामेन परिपाकेन श्यामेषु नीलेषु जम्बूनिकुञ्जेषु स्खलनेन मुखराणि घोषवन्ति भूरीणि च स्रोतांसि यासु ताः । दृढतरुमूलाभिघातपरिलघुसलिला इत्यर्थः । 'निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे' इत्यमरः । एवं निर्झरिण्युत्कर्षप्रतिपादनद्वारा मध्यमारण्यानामवलोकनीयतां प्रतिपाद्य तदाश्रयभूतानां मध्यस्थलीप्रदेशानां विशेषतोऽपि गभीरतां प्रतिपादयति—**अपिचेति** ॥ एता मध्यस्थलीभूमयः कस्य हृदयं न हरन्तीत्यन्वयः । सर्वेषामपि हृदयं बलादपहरेयुरेवेत्यर्थः । कुत इत्यत्राह—**माद्यदिति** ॥ पृथिवीविशेषान्मदकरद्रव्यबाहुल्याच्च सदैव मत्तानां दन्तिनां कपोलमण्डलेभ्यः गलद्भिर्दानाम्बुभिः सिक्ता वर्धिता द्रुमा यासु ताः । तरूणां हि गजमदो वृद्धिहेतुः । तदुक्तं मातङ्गलीलायाम्—'प्राप्नुवन्त्यार्तवीं वृद्धिं मदवृष्ट्या महीरुहाः' इति । विन्ध्याटवीवर्णने च कादम्बर्याम्—'वनकरिकुलमदजलसेकसंवर्धितैरतिविकसितधवलकुसुमनिकरमत्युच्छ्रिततया तारागणमिव शिखरदेशलग्नमुद्वहद्भिः पादपैः' इति । पुनरपि गम्भीरतामाह—**क्रीड-दिति** ॥ क्रीडतां पल्वलादिस्थानेषु स्वच्छन्दं विहरतां क्रोडकुलानां वराहयूथानाम् अर्धचर्वितेन दलन्तीनां मुस्तानां रसैरास्यविगलितैर्द्रवैरामोदिताः सुरभीकृता इत्यर्थः । ततो विप्रकृष्टतामाह—**अन्तरिति** ॥ अन्तस्सुस्थितपान्थाः कुहरविश्रान्तपथिकनिवहाः मन्थरमरुता मन्दमारुतेन लोलन्तस्तरलिता लतामण्डपा यासु ताः । पुनरप्यतिशयमाह—**दधतीति** ॥ अत्र कुहरभाजां भल्लूकयूनाम् अम्बूकृतानि स्त्यानं दधति इत्यन्वयः । **अत्र** मध्यस्थलीभूमिषु **कुहर-भाजां** तत्तत्कन्दरवर्तिनाम् **भल्लूकयूनाम्** अत्युद्धतानां वानरविशेषाणाम् ॥ 'ऋक्षाच्छभल्लभल्लूका' इत्यमरः । **अम्बूकृतानि** सनिष्ठीवानि । 'अम्बूकृतं सनिष्ठीवम्' इत्यमरः । **स्त्यानं** संघातीभावम् नैबिड्यमिति यावत् । **दधति** प्राप्नु-

**शिशिरकटुकषायः स्त्यायते सल्लकीना-**
**मिभदलितविशीर्णग्रन्थिनिष्यन्दगन्धः ॥ २२ ॥**

**रामः**—(सबाष्पस्तम्भम् ।) **भद्र, शिवास्ते पन्थानो देवयानाः । प्रलीयस्व पुण्येभ्यो लोकेभ्यः ।**

**शम्बूकः**—**यावत्पुराणब्रह्मवादिनमगस्त्यमृषिमभिवाद्य शाश्वतं पद-मत्र प्रविशामि ।** (इति निष्क्रान्तः ।)

---

वन्ति । स्त्यै ष्ट्यै शब्दसंघातयोरिति धातुः । **अनुरसितगुरूणि** अनुरसितैः प्रतिध्वानैः गुरूणि परिपुष्टानि । **सल्लकीनां** तत्र तत्र प्राचुर्येणावस्थितानाम् **इभदलितविशीर्णग्रन्थिनिष्यन्दगन्धः** इभदलितानाम् अत एव विशीर्णानां ग्रन्थीनां पल्लवोद्भेदस्थानानां निष्यन्दस्य निर्यासद्रवस्य गन्धः परिमलः **स्त्यायते** एकीभवति । सर्वतो व्यापनादेव बहूनां गन्धानामैक्यसंभवात् व्याप्नोतीत्यर्थः । अर्थात्समुच्चयः । कीदृश इत्यत्राह—**शिशिरेति** ॥ शिशिरः शीतलः कटुः मरिचः कषायः तिक्तमधुरः । 'कटुतिक्तकषायाश्च सौरभ्येऽपि प्रकीर्तिताः' इत्युक्तेः कट्वादयो गन्धेऽपि, 'अमुनैव कषायितस्तनी' इति कालिदासवचनात् । शिशिरकटुभ्यां कषायः संमिश्र इति वा । रञ्जित इति यावत् । सबाष्पस्तम्भमिति वचनक्रियाविशेषणम् । आहेति शेषः । भद्रेति तदीयोत्कर्षानुसंधानात् । **शिवाः** शुभाः **ते** अपरिमेयमहिम्नः । **देवयाना इति** ॥ देवो विष्णुः प्राप्यते यैस्ते । क्रममुक्तिमार्गा इत्यर्थः । तत्प्रकारश्च—'ऊर्ध्वलोककुतुकी तु मूर्धतः सार्धमेव करणैर्निरीयते । अग्निवासरवलक्षपक्षगैरुत्तरायणजुषा च दैवतैः ॥ प्रापितो रविपदं भवत्पदे मोदवान् ध्रुवपदान्तमीयते । आस्थितोऽथ महरालये यदा शेषवक्त्रदहनोष्मणार्द्यते ॥ ईयते भवदुपाश्रयस्तदा वेधसः पदमतः पुरैव वा । तत्र वा तव पदेऽथवा वस् प्राकृतप्रलय एति मुक्तताम् ॥ स्वेच्छया खलु पुरापि मुच्यते संविभिद्य जगदण्डमोजसा । तस्य च क्षितिपयोमहोऽनिलव्योमहत्प्रकृतिसप्तकावृतीः ॥ तत्तदात्मकतया विशन् सुखी याति ते पदमनावृतं विभो ॥' इत्यस्मद्गुरुभिः श्रीमद्गुरुवायुनाथस्त्रोत्ररत्ने सम्यक् प्रपञ्चित एव । **प्रलीयस्व** सूक्ष्मशरीरो भव । **पुण्येभ्यः** शुभतरेभ्यः **लोकेभ्यः** लोकाननुभावितुम् । क्रियार्थेत्यादिना चतुर्थी । स्वाभिसन्धिर्न तथेत्याह—**यावदिति** ॥ अगस्त्यमृषिमभिवाद्य अत्र शाश्वतं पदं यावत् प्रविशामि इति संबन्धः । **पुराणब्रह्मवादिनं** चिरन्तनब्रह्मवादिनम् । अगस्त्यमुखाद्वेदान्तश्रवणेन जीवब्रह्मैक्यज्ञानं संपाद्य **अत्र** इहैव । ब्रह्मभूयाय लोकान्तरे न गन्तव्यमित्यर्थः । तदुक्तं शेषेण—'मोक्षस्य नैव किंचिद्धामास्ति न चापि गमनमन्यत्र । अज्ञानमयग्रन्थिभेदो यस्तं विदुर्मोक्षम् ॥' इति ।

रामः—

एतत्तदेव हि वनं पुनरद्य दृष्टं
यस्मिन्नभूम चिरमेव पुरा वसन्तः ।
आरण्यकाश्च गृहिणो निरताः स्वधर्मे
सांसारिकेषु च सुखेषु वयं रसज्ञाः ॥ २३ ॥

अपि च ।

एते त एव गिरयो विरुवन्मयूरा-
स्तान्येव मत्तहरिणानि वनस्थलानि ।
आमञ्जुवञ्जुललतानिचितान्यमूनि
नीरन्ध्रनीरनिचुलानि सरित्तटानि ॥ २४ ॥

**शाश्वतं** नित्यम् **पदं** स्थानम् । तत्प्रवेशो नाम भौतिकदेहपरित्यागः । सद्योमुक्तिमेवाभिलषामि, न पुनः क्रममुक्तिमित्यर्थः । यावता योगात् भविष्यदर्थे लट् । अलमेभिरित्यादिशम्बूकवचनेन जनस्थानकाननेभ्यो निवर्तितदृष्टिर्मध्यमारण्येषु पुरोवर्तितया नयनगोचरीभूतं किमपि काननमवलोक्य सानुतापमाह—**एतदिति** ॥ अद्य पुनः दृष्टं एतद्वनं तदेव इत्यन्वयः । **अद्य** इदानीं **पुनः** जनस्थानकाननपरिहरणादनन्तरं **दृष्टम्** अत्यादरेणावलोकितम् **एतत्** पुरोवर्ति **वनं** तरुलतादिभिर्निबिडभूतं **तदेव** पूर्वपरिचितमेव । प्रत्यभिज्ञामुद्रेचयति—**यस्मिन्निति** ॥ यस्मिन् वसन्तः वयम् आरण्यकाश्च गृहिणश्च स्वधर्मे निरताश्च सांसारिकेषु सुखेषु रसज्ञाश्च चिरमेव अभूम इत्यन्वयः । **आरण्यकाः** वैखानसवृत्तयः । **गृहिणः** गृहस्थाश्रमिणः । **स्वधर्मे** क्षत्रियोचिते रक्षाधिकारे **निरताः** तदेकपरायणाः । **सांसारिकेषु** संसारभवेषु । अध्यात्मादित्वात् ठञ् । **सुखेषु** विषयजेष्वित्यर्थः । **रसज्ञाः** उपभोक्तारः । सीताविवाहानन्तरमेव वनगमनादिति भावः । न केवलं वनमेवेत्याह—**अपि चेति** ॥ एते गिरयः त एव इत्यन्वयः । **एते** दृश्यमाना **गिरयः** पर्वताः **त एव** पूर्वानुभूता एव । अत्रापि प्रत्यभिज्ञां द्रढयति—**विरुवन्मयूरा इति** ॥ अनेन मदकलेत्यादिशम्बूकवचनमुद्घाटयति । **वनस्थलानि** वनभूमयः **तान्येव** पूर्वानुभूतान्येव । अत्रापि प्रत्यभिज्ञां स्फुटयति—**मत्तहरिणानीति** ॥ मत्ताः स्वेच्छाविहारिणो हरिणा येषु तानि । अनेनापि असंभ्रान्तेत्यादिवचनमुन्निद्रयति । **सरित्तटानि तान्येव** पूर्वनिवासभूता-

१. एतत्पुनर्वनमहो कथमद्य दृष्टं २. आमञ्जुवञ्जुलरुतानि च तान्यमूनि नीरन्ध्रनीपनिचुलानि सरित्तटानि

मेघमालेव यश्चायमारादिव विभाव्यते ।
गिरिः प्रस्रवणः सोऽयं यत्र गोदावरी नदी ॥ २५ ॥

तथाहि—

अस्यैवासीन्महति शिखरे गृध्रराजस्य वास-
स्तस्याधस्ताद्वयमपि रतास्तेषु पर्णोटजेषु ।
गोदावर्याः पयसि विततानोकहश्यामलश्री-
रन्तःकूजन्मुखरशकुनो यत्र रम्यो वनान्तः ॥ २६ ॥

अत्रैव सा पञ्चवटी यत्र चिरनिवासेन विविधविस्रम्भातिप्रसङ्गसा-

---

न्येव । अत्रापि प्रत्यभिज्ञामुपोद्बलयति—**आमञ्जुवञ्जुललतानिचिता-नीति** ॥ आमञ्जुभिराभीक्ष्ण्येन मञ्जुभिर्मनोहराभिः वञ्जुललताभिः निचितानि व्याप्तानि निबद्धवितानानीत्यर्थः । अनेन पुनः इह समदशकुन्तेत्याद्युक्तिमुत्सूत्र-यति । विलासभवनवैशिष्ट्यमाह—**नीरन्ध्रनीरनिचुलानीति** ॥ पार्श्वप्र-रूढैर्नीरनिचुलैर्बद्धभित्तीनीत्यर्थः । 'निचुलो हिज्जुलोऽम्बुज' इत्यमरः । अनेन तावदन्तस्सुस्थितपान्थेत्यादिवचनमुद्भावयति । एवं काननादिकं प्रत्यभिज्ञाय प्रस्रवणाख्यं गिरिमपि प्रत्यभिजानाति—**मेघमालेति** ॥ यश्च गिरिः मेघ-मालेव आरादिव विभाव्यते अयं सः प्रस्रवण इत्यन्वयः । **आरादिव** निकट इव । आराद्दूरसमीपयोरित्यमरः । **विभाव्यते** दृश्यते । इदंशब्देन पूर्वनि-र्दिष्टो गिरिः परामृश्यते । **सः** चिरनिवासभूतः **प्रस्रवणः** प्रस्रवणसंज्ञया प्रसिद्धः । तत्र चिरनिवाससौख्यमाह—**यत्रेति** ॥ यत्र प्रस्रवणे । प्रत्यभिज्ञां द्रढ-यति—**तथाहीति** ॥ अस्यैव महति शिखरे गृध्रराजस्य वास आसीत् वयमपि तस्य अधस्तात् तेषु पर्णोटजेषु रता इत्यन्वयः । **अस्यैव** पुरतो दृश्यमानस्यैव **महति** अत्युन्नते **शिखरे** कूटे **गृध्रराजस्य** जटायुषः **वासः** निलयनं **तस्य** गृध्रराजनिवासभूतस्य **अधस्तात्** उपत्यकायां **तेषु** अतिरमणीयेषु पर्णनिर्मितेषूटजेषु **रताः** । अयोध्यानिवाससौख्यमपि विस्मृत्योषितामित्यर्थः । कथं पुनः काननवासेन नगरीसुखविस्मरणमित्यत्राह—**यत्रेति** ॥ **रम्यो** मनोऽनुकूलः । वनमेव वनान्तः । रम्यत्वमेवोपपादयति—**अन्तःकूजन्मु-खरशकुन इति** ॥ अन्तरित्यनेन काननैबिड्याच्छकुनानां नयनागो-चरतामाह । कूजद्भिः कुसुमरसास्वादनमुदितैर्मुखरैरितरेतरविरोधिभिः शकुनै-रुपेत इत्यर्थः । अत्र हेतुमाह—**श्यामलानोकहश्रीरिति** ॥ अत्रापि हेतुमाह—**गोदावर्या इति** ॥ **पयसि** ननु तटभूमावेव । **वितते** व्याप्तः । तीरप्रदेशाज्जलमवगाह्य स्थित इत्यर्थः । **अत्रैव** प्रस्रवणोपत्यका-

क्षिणः प्रदेशाः प्रियायाः प्रियसखी च वासन्ती नाम वनदेवता। तत् किमिदमापतितमद्य रामस्य। संप्रति हि—

चिराद्वेगारम्भी प्रसृत इव तीव्रो विषरसः
कुतश्चित्संवेगात्प्रचल इव शल्यस्य शकलः।
व्रणो रूढग्रन्थिः स्फुटित इव हृन्मर्मणि पुनः
पुराभूतः शोको विकलयति मां नूतन इव॥ २७॥

तथापि तावत्पूर्वसुहृदो भूमिभागान् पश्यामि। (निरूप्य) अहो अन-

यामेव। **सा** पूर्वानुभूता। पञ्चानां वटानां समाहारः पञ्चवटी। तद्वत्त्वात् कानने रूढिः। **यत्र** पञ्चवट्याम्। **चिरनिवासेन** रम्यतातिशयप्रयुक्तेन चिरकालावस्थानेन। हेतौ तृतीया। **विविधातिप्रसंगसाक्षिणः** विविधानां अतिप्रसंगानां सीताविस्रम्भचेष्टितानां साक्षिणो द्रष्टारः **प्रदेशाः** विहारभूमयः। **किं** स्वरूपतोऽतर्क्यम् **इदम्** अनुभवैकगम्यम् **आपतितं** दैवाज्जातम्। अथवा तत् तस्मात्। किंशब्दो जिज्ञासायाम्। इदं पूर्वनिवासस्थानम्। आपतितं दैववशात् दृष्टिगोचरीभूतम्। **अद्य** अस्यामवस्थायाम्। **रामस्य** कष्टतरजीवितस्य। नन्वस्यामवस्थायां पूर्वसुहृद्दर्शनेन किमप्याश्वासः संभवेदेवेत्यत्राह—**संप्रतीति**॥ शोकः मां विकलयति इति संबन्धः। **शोकः** हृदयोपप्लवकरं दुःखं **मां** शम्बूकगतिदर्शनेन द्विजसुतजीवितलाभजीवनश्रवणेन च किमपि चारितार्थं **विकलयति** विह्वलयति। को वा पुनरिदानीं तादृशः शोक इत्यत्राह—**पुरोभूत इति**॥ प्रियतमाविनिपातज इत्यर्थः। ननु चिरातीतस्य कथं विह्वलीकरणसामर्थ्यमित्यत्राह—**नूतन इवेति**॥ कथमस्य नूतनवदतिदारुणत्वमित्यत्राह—**संप्रतीति**॥ पूर्वसुहृत्संदर्शनसमय इत्यर्थः। कीदृशी पुनर्विह्वलतेत्यत्राह—**विषरसः पुनः प्रसृत इवेति**॥ रसो वीर्यम्। 'रसो रागे विषे वीर्ये' इति वैजयन्ती। प्रसृतो व्याप्तः। ननु विषरसो झटित्येव मूर्च्छामापादयेदित्यत्राह—**चिराद्वेगारम्भीति**॥ तादृशस्य न नितरां शरीरसादादिजनकत्वमित्यत्राह—**तीव्र इति**॥ तर्हीन्द्रियावसादसंभवाच्च वेदनानुभव इत्यत्राह—**कुतश्चिदिति**॥ येन केनापीत्यर्थः॥ **संवेगात्** पीडया। शरीरायासदायिना केनापि कर्मणेत्यर्थः॥ **प्रचलः** पूर्वस्थानादुच्चलितः। कुतोऽपि कारणात् संवेगमुत्पाद्येति ल्यब्लोपे पञ्चमी। **शल्यस्य** दुर्वेधलग्नस्य शरफलस्य **शकलः** विशीर्णः कश्चिदवयवलेशः। ननु सोऽप्यपनेतुं शक्यः, ततो न तीव्रा वेदनेत्यत्राह—**व्रण इति**॥ **व्रणः** पिटकादिः। **गूढग्रन्थिः** निबद्धकिणः॥ **स्फुटितो** भिन्नः **हृन्मर्मणि** वेदनातिरेकिणि स्थाने। पुनश्शब्द आवृत्तौ। यद्येवं तर्ह्येतद्दर्शनान्निवर्तस्वेत्य-

वस्थितो भूसंनिवेशः। तथाहि—

पुरा यत्र स्रोतः पुलिनमधुना तत्र सरितां
विपर्यासं यातो घनविरलभावः क्षितिरुहाम्।
बहोर्दृष्टं कालादपरमिव मन्ये वनमिदं
निवेशः शैलानां तदिदमिति बुद्धिं द्रढयति॥ २८॥

हन्त हन्त। परिहरन्तमपि मां पञ्चवटी स्नेहाद्बलादाकर्षतीव।
(सकरुणम्।)

यस्यां ते दिवसास्तया सह मैथा नीता यथा स्वे गृहे
यैत्संबन्धकथाभिरेव सततं दीर्घाभिरस्थीयत।
एकः संप्रति नाशितप्रियतमस्तांमेव रामः कथं
पापः पञ्चवटीं विलोकयतु वा गच्छत्वसंभाव्य वा॥ २९॥

त्राह—तथापीति॥ तावच्छब्दोऽवधारणे भिन्नक्रमः। तथापि पूर्वसुहृदो भूमिभागान् पश्यामि तावत् इति संबन्धः। पूर्वसुहृद इति हेतुगर्भं विशेषणम्। अहो इति खेदे। **अनवस्थितः** परिवृत्तः **संनिवेशः** अवयवसंस्थानम्। उक्तमेवार्थमुपपादयति—**तथा हीति**॥ **विपर्यासं** वैपरीत्यम्। **घनविरलभावः** घनभावो विरलभावश्च। यत्र पूर्वं क्षितिरुहां घनभावः तत्रेदानीं विरलभावो जातः, यत्र विरलभावः तत्र घनभावश्चेत्यर्थः। **अपरमिव** अदृष्टपूर्वमिव। कुत इत्यत्राह—**बहोर्दृष्टं कालादिति**॥ कथं प्रत्यभिज्ञायत इत्यत्राह—**निवेश इति**॥ निवेशः संस्थानम्। **तदिदमिति बुद्धिं** प्रत्यभिज्ञाबुद्धिम्। हन्तेति खेदे। **बलात् कर्षतीवेति**॥ अनिच्छन्तमपि मां स्वस्मिन्निबद्धदृष्टिं करोतीत्यर्थः। इदानीं पुनरशक्यप्रतिकरणे महति संकटे पतितास्मीत्याह—**यस्यामिति**॥ रामः पञ्चवटीं कथं विलोकयतु वा असंभाव्य वा गच्छतु इति संबन्धः। **रामः** असमीक्ष्यकारी **पञ्चवटीं** हृदयप्रक्षोभदायिनीम्। कथमिति मनसो विधेयीकरणापटुत्वजनितवितर्के। **विलोकयतु** दर्शनादरः क्रियताम्। कामचारे लोट्। वाशब्दोऽवधारणे। 'वा स्याद्विकल्पोपमयोरेवार्थेऽपि समुच्चये' इति विश्वः। **असंभाव्य** सादरमनवलोक्य। **गच्छतु** इतः प्रचलतु। अत्र हेतुमाह—**तामेवेति**॥ को वा पुनः पञ्चवट्या विशेष इत्यत्राह—**यस्यामिति**॥ यस्यां ते दिवसाः तथा नीता इत्यन्वयः। **यस्यां** पञ्चवट्यां **ते** पितृवियोगराज्यभ्रंशादिदुः-

१. भूतसन्निवेशः; भूमिसन्निवेशः २. मया ३. यत्संबन्धि ४. रास्थीयत ५. तामद्य

(प्रविश्य)

**शम्बूकः**—जयतु देवः। भगवानगस्त्यो मत्तः श्रुतभवत्संनिधानस्त्वामाह—'परिकल्पितावतरणमङ्गला प्रतीक्षते वत्सला लोपामुद्रा, सर्वे च महर्षयः। तदेहि। संभावयास्मान्। अथोग्रतरसा सुखप्रजविना पुष्पकेण स्वदेशमुपगत्याश्वमेधाय सज्जो भव' इति।

**रामः**—यथाज्ञापयति भगवान्।

**शम्बूकः**—इतस्तर्हि देवः प्रवर्तयतु पुष्पकम्।

**रामः**—(पुष्पकं प्रवर्तयन्।) भगवति पञ्चवटि, गुरुजनोपरोधात्क्षणं क्षम्यतामतिक्रमो रामस्य।

**शम्बूकः**—देव, पश्य।

---

स्वैरशक्ययापनाः **दिवसाः** चतुर्दशसंवत्सरपरिमिताः **तथा** तादृशव्यथापरिगणनं विनैव **नीताः** अतिक्रान्ताः। कथमित्यत्राह—**यथेति** ॥ स्वशब्दस्य सर्वनामत्वेऽपि पूर्वादिभ्यो वेति विकल्पात स्मिनोऽभावः। अत्र हेतुं कथयति—**तया सहेति** ॥ नहि पञ्चवटीसदृशं काननं क्वचिदपीत्याह—**यत्संबन्धकथाभिरिति** ॥ पञ्चवटीसंबन्धाभिः कथाभिरित्यर्थः। कर्तरि तृतीया। सततमित्यनेन वर्णनीयवस्तुबाहुल्यं व्यज्यते। एतदेवाह—**दीर्घाभिरिति** ॥ **अस्थीयत** अवस्थितम्। एवशब्देनेतराः कथा व्यावर्त्यन्ते। यदि तादृशीयं तर्हि स्वैरमवलोक्यतामित्यत्राह—**संप्रतीति** ॥ इदानीं को वा विशेष इत्यत्राह—**एक इति** ॥ प्रियतमाविरहित इत्यर्थः। ननु विरहिणामीदृशमेव विनोदनस्थानमित्यत्राह—**नाशितप्रियतम इति** ॥ अत्र कारणमाह—**पाप इति** ॥ **मत्तः श्रुतभवत्सन्निधान इति** ॥ अस्मद्वचनविदितभवदुपगम इत्यर्थः। **परिकल्पितावतरणमङ्गला** परिकल्पितानि संपादितानि अवतरणमङ्गलानि अवतरणयोग्यानि मङ्गलानि नीराजनसमालम्भनीयादीनि यया सा **प्रतीक्षते** विरतनिखिलव्यापारा तिष्ठति। चकारः समुच्चये। **महर्षयः** आश्रमवासिनः **सर्वेऽपि** प्रतीक्षन्त इति विभक्तिपरिणामेनानुषञ्जनीयम्। **तत्** तस्मात् **एहि** आगच्छ। **संभावय** दर्शनदानेन प्रीणय। अथशब्द आनन्तर्ये। **उग्रतरसा** अतिवेगवता **सुखप्रजविना** सुखं यथा तथा प्रजवितुं प्रकर्षेण जवितुं शीलं यस्य तेन। विमानवरमाहात्म्यात्तत्स्थानादतिवेगगमनं न परिज्ञातुं शक्यमित्यर्थः। 'प्रजोरिनिः' इति इनिः। **पुष्पकं प्रवर्तयन्निति** ॥ अगस्त्याश्रमाभिमुखं कारयन्नित्यर्थः। सुखदुःखविधाने पञ्चवट्याः स्वातन्त्र्यमारोप्य भगवच्छब्दनिर्देशः। **पञ्चवटि** चिरसेविते **गुरुजनोपरोधात्**

गुञ्जत्कुञ्जकुटीरकौशिकघटाघूत्कारवत्कीचक-
स्तम्बाडम्बरमूकमौकुलिकुलः क्रौञ्चावतोऽयं गिरिः ।
एतस्मिन्प्रचलाकिनां प्रचलतामुद्वेजिताः कूजितै-
रुद्वेल्लन्ति पुराणरोहिणतरुस्कन्धेषु कुम्भीनसाः ॥ ३० ॥

अपि च ।

एते ते कुहरेषु गद्गदनदद्गोदावरीवारयो
मेघालम्बितमौलिनीलशिखराः क्षोणीभृतो दक्षिणाः[1] ।
अन्योन्यप्रतिघातसंकुलचलत्कल्लोलकोलाहलै-
रुत्तालास्त इमे गभीरपयसः पुण्याः सरित्संगमाः ॥ ३१ ॥

(इति निष्क्रान्तौ ।)

पञ्चवटीप्रवेशो नाम द्वितीयोऽङ्कः ।

---

गुरुजनपारतन्त्र्यात् । क्षम्यतामिति प्रार्थनायां लोट् । **अतिक्रमः** संभाव्यसंभावनालङ्घनं **रामस्य** अस्वतन्त्रवृत्तेः । **गुञ्जदिति** ॥ क्रौञ्चावतः गिरिः अयमिति संबन्धः । क्रौञ्चावतसंज्ञया प्रसिद्धो गिरिः इदानीं नयनगोचरीभूत इत्यर्थः । स तु कीदृश इत्यत्राह—**गुञ्जदिति** ॥ गुञ्जत्कुञ्जकुटीरेण शब्दायमानलतागृहाभ्यन्तरेण कौशिकघटाघूत्कारवता उलूकयूथहुंकृतिमता कीचकस्तम्बाडम्बरेण मारुतपूरितरन्ध्रकीचकस्वनेन मूकं निश्शब्दम् मौकुलिकुलं काककुलं यस्मिन् । सकुटीरशब्देनाभ्यन्तरार्थो लक्ष्यते । गुञ्जन्त्याः शब्दायमानायाः कुञ्जकुटीरायाः लतागृहनिषण्णायाः कौशिकघटायाः उलूकश्रेण्याः घूत्कारं वदता अनुवदता अपवदता वा कीचकस्तम्बाडम्बरेण मूकं मौकुलिकुलं यस्मिन्निति वा विग्रहः । कानननैबिड्यजनितेनान्धकारेण दिवाऽपि रजनीबुद्ध्या घूत्कुर्वतां तत्तल्लताकुलायवासिनामुलूकयूथानां स्वनमनुकुर्वद्भिः कीचकध्वनिभिः वित्रस्तवायसकुलसहित इत्यतिगम्भीराभोगोऽयं गिरिरित्यर्थः । वदतेः अन्येभ्योऽपि दृश्यत इति विच् । माङ औकुलिजिति माङ औणादिक औकुलिच्प्रत्ययः । मेङ् प्रणिदान इति धातुः । 'आत्मघोषो महानेमिरन्यवापश्च मौकुलिः' इति शब्दरत्नाकरे । करिबृंहितवाचिनात्राडम्बरशब्देन ध्वनिसामान्यं लक्ष्यते । भीतिकारित्वौचित्यं व्यङ्ग्यम् । 'आडम्बरस्तु संरम्भे पटहे करिगर्जिते' इति वैजयन्ती । पुनरपि कीदृश इत्यत्राह—**एतस्मिन्निति** ॥ एतस्मिन् पुराणरोहिणतरु-

---

1. दाक्षिणाः

## तृतीयोऽङ्कः ।

(ततः प्रविशति नदीद्वयम् ।)

**एका—सखि मुरले, किमसि संभ्रान्तेव ।**

---

स्कन्धेषु कुम्भीनसाः उद्वेल्लन्ति इति संबन्धः । **एतस्मिन्** गिरौ **पुराणरोहिणतरुस्कन्धेषु** पुराणानां जीर्णानां रोहिणतरूणां चन्दनतरूणां स्कन्धेषु शिखरमूलेषु विवरसन्निकृष्टेषु प्रदेशेष्वित्यर्थः । **कुम्भीनसाः** सर्पविशेषाः **उद्वेल्लन्ति** मूलदेशं परित्यजन्ति उपरि परिवेष्टयन्तीत्यर्थः । श्लथसंवेष्टना भवन्तीति वा । अत्र हेतुमाह—**प्रचलतामिति** इतस्ततो निष्पततामित्यर्थः । **प्रचलाकिनां** मयूराणां **कूजितैः** केकारावैः **उद्वेजिताः** उद्वेगं प्रापिताः । भीता इति यावद् । न केवलं क्रौञ्चावत एवेत्याह—**अपिचेति** ॥ दक्षिणाः ते क्षोणीभृतः एते इत्यन्वयः । **दक्षिणाः** विन्ध्यगिरेर्दक्षिणपार्श्वभवाः । **ते** प्रसिद्धाः । **क्षोणीभृतः** पर्वताः । एत इत्यभिनीयोक्तिः । कीदृग्भूता इत्यत्राह—**कुहरेषु गद्गदनद्गोदावरीवारय इति** ॥ **कुहरेषु** कन्दरेषु । गद्गदध्वनिसहितं यथा तथा नदन्ति गोदावरीवारीणि येषु ते । पुनः कीदृशा इत्यत्राह—**मेघालम्बितमौलिनीलशिखरा इति** ॥ मेघालम्बिमौलीनि अत एव नीलानि शिखराणि येषां ते । सरित्संगमाः एते इति संबन्धः । ते प्रसिद्धाः **सरित्संगमाः** तत्तद्गिरिसंभूतानां सरितां संगमाः । एत इत्यभिनीयोक्तिः । कीदृग्भूता इत्यत्राह—**अन्योन्यप्रतिघातसंकुलचलत्कल्लोलकोलाहलैरुत्ताला इति** ॥ अन्योन्यप्रतिघातेन इतरेतरवेगनिरोधेन संकुलानां संभ्रान्तानां चलतां व्यावल्गतां कल्लोलानां महतां तरङ्गाणां कोलाहलैर्ध्वनिभिः उत्ताला उन्मदिष्णवः । महत्सूल्लोलकल्लोलाविल्यमरः । दुरवगाहतामाह—**गभीरपयस इति** ॥ अवगाहनयोग्यतामाह—**पुण्या इति** ॥

अङ्को द्वितीयोऽपि यथाबलं मया विचारितोऽयं गुरुपादसंश्रयात् ।
विलोक्य दोषानपि वा गुणान् बुधाः कुर्वन्तु वा हानमुतान्यदेव ॥

इति भावार्थदीपिकायाम् उत्तररामचरितव्याख्यायां द्वितीयोऽङ्कः ॥

---

॥ अथ तृतीयोऽङ्कः ॥

अथ विष्कम्भकमारभमाणः 'पुण्यास्सरित्संगमा' इति समनन्तरातीताङ्कावसानपरिसूचितं नदीदेवताप्रवेशमाह—**ततः प्रविशति नदीद्वयमिति** ॥ किंशब्दः प्रश्ने । असीति त्वमर्थेऽव्ययम् । **संभ्रान्ता** त्वरितहृदया । इवशब्द ईषदर्थे । इङ्गिताकारचेष्टाभिः किंचित्त्वरितहृदयां त्वामुपलक्षये तत्कथय कार-

**मुरला**—भगवति तमसे, प्रेषितास्मि भगवतोऽगस्त्यस्य पत्न्या लोपामुद्रया सरिद्वरां गोदावरीमभिधातुम् । जानास्येव यथा वधूपरित्यागात्प्रभृति

**अनिर्भिन्नो गभीरत्वादन्तर्गूढघनव्यथः ।**
**पुटपाकप्रतीकाशो रामस्य करुणो रसः ॥ १ ॥**

---

णमित्यर्थः । वचनपारुष्यपरिहारार्थमिवशब्दप्रयोगः । संभ्रमहेतुमाह—**भगवतीति** ॥ **प्रेषिता** प्रहिता । अत्र शम्बूकवचनादगस्त्यसंदर्शनार्थमागतस्य रामभद्रस्य सीतावियोगजनितामतिप्रवृद्धामस्वस्थतामुपलभ्य शून्याटवीप्रदेशेष्वन्यथा कथंचिदप्याश्वासासंभवादियं गोदावरीं वक्तुं प्रेषितेति संगतिरनुसंधेया । जानास्येवेत्यारभ्य स्वैरं प्रेषितैस्तर्पयेत्यन्तो ग्रन्थो लोपामुद्रावचनप्रकारः । जानास्येवेत्यनेन तु लोपामुद्रा रामस्यावस्थां गोदावरीमनुस्मारयति । यथेत्यारभ्य रामस्य करुणो रस इत्यन्तेन तु गोदावर्या विदितमेव रामवृत्तमनूद्य कथ्यते । तमवलोक्येत्यारभ्य कम्पितमिव सबन्धनं हृदयमित्यनेन स्वात्मना निरूपितं वस्तु कथ्यते । अधुना चेत्यारभ्य महान्ति प्रमादस्थानानि शङ्कनीयानि इत्यन्तेन वक्ष्यमाणस्यावश्यकत्वं प्रतिपादयति । तद्भगवतीत्यारभ्य तर्पयेत्यन्तेन गोदावर्या करणीयं कार्यं कथ्यते इति विभागः । तत्र प्रतिग्रन्थमादित आरभ्य किंचिद्व्याख्यायते । वधूपरित्यागात्प्रभृति रामस्य करुणो रसः इत्यन्वयः । वर्तत इति शेषः । तत्कुतो नोपलक्ष्यत इत्यत्राह—**गभीरत्वादिति** ॥ प्रभाववशादित्यर्थः । तथा चाहुः—'यस्य प्रभावादाकारे हर्षक्रोधभयादयः । सन्तोऽपि नोपलक्ष्यन्ते तद्गाम्भीर्यमुदाहृतम् ॥' इति । **अनिर्भिन्न इति** ॥ द्रष्टॄणां नोपलक्षयितुं शक्यत इत्यर्थः । बहिरलक्ष्यश्चेदन्तर्भागेऽपि स्वल्प एवेत्यत्राह—**अन्तर्गूढघनव्यथ इति** ॥ गूढत्वादेवातितीव्रव्यथ इत्यर्थः । निगूढस्य तु किं तादृशी वृत्तिरित्यत्राह—**पुटपाकप्रतीकाश इति** ॥ यथा किल पुटपाके महत ऊष्मणो बहिरनिर्गमादन्तर्गतमौषधादिकं क्षिप्रमेव परिपच्येत तथैव शोकप्रसरनिरोधात् अस्य हृदयमतितरां दह्यत इत्यर्थः । एषोक्तिः धीरोदात्तगुणगणोपलक्षितस्य रघुनाथस्य तथाविधः शोकावेगः साधारणीकृतनिखिलविभावादिपरिकरः सकलप्रमातृजनस्थायिचित्तवृत्त्यास्वादापरपर्यायकरुणरसपरिपाटीमनुप्रविष्ट इति द्योतनार्थम् । तथैव सकलप्रमातृगतस्याभिव्यक्तावस्थस्यैव स्थायिनो रत्यादिकस्य विगलितवेद्यान्तरत्वेन रसनीयत्वाद्रसत्वोपपत्तेः । स्वशब्देन शृङ्गारादिशब्देन वाऽभिधेयत्वं निषिद्धमिति विभावादिविरहादभिव्यज्यमानस्य रामभद्रगतस्य स्थायिनः करुणरसशब्दाभ्याममत्राभिधानं 'रसादिलक्षणस्त्वर्थः स्वप्नेऽपि न वाच्य' इति आलंकारिकपरिवृढस्य

तेन च तथाविधेष्टजनकष्टविनिपातजन्मना प्रकर्षं गतेन दीर्घशोकसंतानेन संप्रति परं परिक्षीणो रामभद्रः। तमवलोक्य कम्पितमिव सबन्धनं मे हृदयम्। अधुना च रामभद्रेण प्रतिनिवर्तमानेन नियतमेव पञ्चवटीवने वधूसहनिवासविस्रम्भसाक्षिणः प्रदेशा द्रष्टव्याः। तेन च निसर्गधीरस्याप्येवंविधायामवस्थायामतिगम्भीराभोगशोकक्षोभसंवेगात्पदे पदे महान्ति प्रमादस्थानानि शङ्कनीयानि। तद्भगवति गोदावरि, त्वया तत्र सावधानया भवितव्यम्।

काव्यप्रकाशकारस्य वचनेन न विरुद्धमिति बोद्धव्यम्। **तेन** हृदयनिगूढेन। चशब्दो वाक्यालंकारे। **तथाविधेष्टजनकष्टविनिपातजन्मना** तथाविधस्य वागिन्द्रियाविषयगुणविशिष्टस्य इष्टजनस्य प्रियजनस्य कष्टोऽसंभावनीयो यो विनिपातः प्रणाशः तस्माज्जन्म यस्य सः। अत एव **प्रकर्षे गतेन** परमां काष्ठामधिरूढेन **दीर्घशोकसंतानेन** दीर्घेण अनवसानेन शोकसंतानेन शोकस्य संतानेन सततानुवर्तनेन **परम्** अतिमात्रं **परिक्षीणो** दुर्बलः **रामभद्रः** सकलजीवलोकाधारभूतः। **तम्** ईदृशावस्थादुःस्थम् **अवलोक्य** दर्शनानुपदं मनसि भावयित्वा **कम्पितं** प्रवेपितम्। इवशब्दोऽवधारणे। **मे** संसारायाथार्थ्यमवगच्छन्त्या अपि। **सबन्धनं** सहितबन्धनम्। बध्नाति स्थिरीकरोति इति बन्धनशब्देन धैर्यमुच्यते। करणे ल्युट्। अथवा बन्ध एव बन्धनम् दार्ढ्यमित्यर्थः। तथाच विक्रमोर्वशीये--'मुञ्चति न तावदस्याः कम्पं कुसुमसबन्धनं हृदयम्' इति। **अधुना चेति**॥ चकारेण पूर्वानुभूतप्रदेशसंदर्शनेन पुनरीदृशस्य रामभद्रस्य कियान् संमोह आपतेदिति न जानामीति द्योत्यते। **प्रतिनिवर्तमानेन** शम्बूकनिग्रहार्थं जनस्थानमुपगम्य पुनः स्वनगरं प्रति गच्छता **पञ्चवटीवने** चित्तव्याक्षेपदायिनि चिरनिवासभूते कानने **वधूसहनिवासविस्रम्भसाक्षिणः** वधूसहनिवासे यो विस्रम्भः तत्साक्षिभूताः। अत्र विस्रम्भशब्देन तत्कार्यभूताश्चेष्टाविशेषा लक्ष्यन्ते। चिरोपचरणजन्यत्वप्रकाशनं फलम्। **प्रदेशा** भूभागाः **द्रष्टव्याः** अपरिहार्यतया नयनविषयतां प्रापयितुमुचिताः। **तेन च** तादृशप्रदेशसंदर्शनेन **निसर्गधीरस्यापि** स्वत एव धीरप्रकृतेरपि। **अतिगम्भीराभोगशोकक्षोभसंवेगादिति**॥ अतिगम्भीरः अतिशयेन गम्भीरोऽपरिच्छेद्य आभोगः परिपोषो यस्य तादृशेन शोकक्षोभेण दुःखसमुन्मेषेण यः संवेगो हृदयतापः तस्माद्धेतोरित्यर्थः। **पदे पदे** तत्तत्स्थाने **महान्ति** अतिविषमाणि **प्रमादस्थानानि** संमोहावकाशाः। अत्रानवधानतावाचकेन प्रमादशब्देन हृदयसंमोहो लक्ष्यते। **शङ्कनीयानि** उत्प्रेक्षणीयानि। **तत्**

१. कुसुमसमबन्धनं

वीचीवातैः शीकरक्षोदशीतै-
राकर्षद्भिः पद्मकिञ्जल्कगन्धान् ।
मोहे मोहे रामभद्रस्य जीवं
स्वैरं स्वैरं प्रेषितैस्तर्पयेति[1] ॥ २ ॥

तमसा—उचितमेव दाक्षिण्यं स्नेहस्य । संजीवनोपायस्तु मौलिक[2] एव रामभद्रस्याद्य संनिहितः ।

मुरला—कथमिव ।

तमसा—तत्सर्वं श्रूयताम् । अस्ति खलु वाल्मीकितपोवनोपकण्ठात्परित्यज्य निवृत्ते सति लक्ष्मणे सीतादेवी प्राप्तप्रसववेदनमतिदुःखसंवेगादात्मानं गङ्गाप्रवाहे निक्षिप्तवती । तदैव तत्र दारकद्वयं च

---

तस्मात् भगवति आपन्नानुग्राहिणि सावधानया एकाग्रचित्तया तत्र प्रमादस्थानेषु भवितव्यमिति ॥ मोहदशापरिहारयोग्ये व्यापारे संनद्धा भवेत्यर्थः । कीदृशः पुनः स व्यापार इत्यत्राह—वीचीवातैरिति ॥ हे गोदावरि त्वं वीचीवातैः रामभद्रस्य जीवं तर्पय इत्यन्वयः । वीचीवातैरिति ॥ आत्मीयलहरिनिकरपरिस्खलनेन मन्दसंचारिभिरित्यर्थः । रामभद्रस्य निखिलजनाधारस्य जीवं मोहदशापरिम्लानं तर्पय प्रीणय । कीदृशैरित्यत्राह—शीकरक्षोदशीतैरिति । पद्मकिञ्जल्कगन्धानाकर्षद्भिरिति च ॥ त्रिविधगुणविशिष्टैरित्यर्थः । ननु तथाविधा वीचीवाताः स्वयमेव सततं संचरन्त्येवेत्यत्राह—स्वैरं स्वैरं प्रेषितैरिति ॥ संतापवेगानुगुण्येन मन्दमन्दमेव प्रेरितैरित्यर्थः । इति गोदावरीमभिधातुं लोपामुद्रया प्रेषितास्मीति संबन्धः । उचितम् अवसरयोग्यम् । दाक्षिण्यं नाम प्रार्थनामन्तरेण प्रवर्तनम् । स्नेहस्य वात्सल्यस्य । किंत्वित्येनन प्रस्तुतातिशयित आश्वसनोपायलाभः सूचितः । स तु कीदृश इत्यत्राह—संजीवनोपाय इति ॥ तुर्विशेषे । मौलिरेव मौलिकः प्रधानभूत इत्यर्थः । स्वार्थे कः । अथवा मूलभवो मौलिकः अध्यात्मादिषु द्रष्टव्यः । सतताभिलषित इति यावत् । संनिहितः प्राप्तः । कथमिवेत्यनेन तादृशोपायलाभस्येदानीमसंभावनीयता व्यज्यते । अथ तस्मादरण्यात् परित्यज्य निवृत्ते लक्ष्मणे सीतायाः किं काचिदासीत्प्रवृत्तिरिति द्वितीयाङ्कविष्कम्भककथितस्य कथांशस्य शेषं कथयति—अस्तीत्यादिना ॥ अस्तीति वाक्यारम्भेऽव्ययम् । तस्य भगवतः केनापि देवताविशेषेणेति कथितस्याकांक्षां पूरयति—सीतादेवीत्यादिना ॥ प्राप्तप्रसववेदनमिति ॥

---

१. प्रेरितैस्तर्पयेति २. मूलत एव

प्रसूता, भगवतीभ्यां पृथ्वीभागीरथीभ्यामप्युभाभ्यामभ्युपपन्ना रसातलं च नीता । स्तन्यत्यागात्परेण दारकद्वयं च तस्य प्राचेतसस्य महर्षेर्गङ्गादेव्या समर्पितं स्वयम् ।

**मुरला**—(सविस्मयम्)

> ईदृशां विनिपातोऽपि जायते परमाद्भुतः ।
> यत्रोपकरणीभावमायात्येवंविधो जनः ॥ ३ ॥

**तमसा**—इदानीं तु शम्बूकवृत्तान्तेनानेन संभावितजनस्थानोपगमनं रामभद्रं सरयूमुखादुपश्रुत्य भगवती भागीरथी यदेव लोपामुद्रया स्नेहादाशङ्कितं तदेवाशङ्क्य सीतासमेता केनचित् ग्रहापचारव्यपदेशेन गोदावरीमुपागता ।

**मुरला**—सुचिन्तितं भगवत्या भागीरथ्या । राजधानीस्थितस्यास्य खलु तैस्तैर्जगतामाभ्युदयिकैः कार्यैर्व्यापृतस्य रामभद्रस्य नियताश्चित्तविक्षेपाः । अव्यग्रस्य पुनरस्य शोकमात्रद्वितीयस्य पञ्चव-

---

अनुभूतप्रसववेदनमित्यर्थः । **आत्मानं** निजदेहम् **गङ्गाप्रवाहे** गङ्गास्रोतसि **निक्षिप्तवती** प्रक्षिप्तवती । **तदैव** तदानीमेव **तत्र** गङ्गास्रोतसि । **अभ्युपपन्ना** अनुगृहीता परित्रातेति यावत् । व्यसनसाहाय्यमभ्युपपत्तिरिति कौटिल्यः । दैववैपरीत्येऽपि सीतायाः साहाय्यसंगतिमालोच्य विस्मयः । **ईदृशां** जनानामिति शेषः । **विनिपातः** अधोगतिः । विपत्प्राप्तिरिति यावत् । अपिशब्देनाभ्युदयः कथं वा न विस्मयकर इति द्योत्यते । **यत्र** विनिपाते **उपकरणीभावं** सहायभावम् **एवंविधः** परमाभ्युदयेऽप्यलभ्यः । इदानीमित्यनेन मुख्ये लब्धे किमर्थं प्रतिनिधिगवेषणमिति व्यज्यते । **शम्बूकवृत्तान्तेन** शम्बूकसंबन्धेन वृत्तान्तेन । हेतौ तृतीया । **संभावितजनस्थानोपगमनं** संभावितं अभ्यूहितं जनस्थानोपगमनं यस्य तं **रामभद्रं** स्वकृतानुतापिनम् । **सरयूमुखादिति** ॥ अयोध्यानगरादागतायाः सरय्वा मुखादित्यर्थः । अत्र पुष्पकं विमानराजमधिरुह्य रघुपतिः शम्बूकनिग्रहार्थमयोध्यायाः प्रस्थित इति सरयूवचनमभ्यूह्यम् । **ग्रहापचारव्यपदेशेनेति** ॥ ग्रहाणामपचारं व्यपदिश्येत्यर्थः । व्यपदेशो नाम किंचिदर्थमकथनीयतया मनसि निधाय सर्वानपि बोधयितुं तदन्यकथनम् । कुशलवयोः प्रतिकूलं ग्रहापचारदोषं कथयित्वेति यावत् । **सुचिन्तितमिति** ॥ भावे निष्ठा । **भगवत्या** लोकानुग्रहपरया । हेतुमाह—**राजधानीस्थितस्ये-**

---

१. ईदृशानां विपाकोऽपि २. केनचिदिव गृहाचारव्यपदेशेन

टीप्रवेशो महाननर्थ इति । तत्कथमिदानीं सीतादेव्या रामभद्र आश्वासनीयः स्यात् ।

तमसा—उक्तमत्र भगवत्या भागीरथ्या—'वत्से देवयजनसंभवे सीते, अद्य खल्वायुष्मतोः कुशलवयोर्द्वादशस्य जन्मवत्सरस्य संख्यामङ्गलग्रन्थिरभिवर्धते । तदात्मनः पुराणश्वशुरमेतावतो मानवस्य राजर्षिवंशस्य प्रसवितारं सवितारमपहतपाप्मानं देवं स्वहस्तापचितैः पुष्पैरुपतिष्ठस्व । न त्वामवनिपृष्ठवर्तिनीमस्मत्प्रभावाद्वनदेवता अपि द्रक्ष्यन्ति किमुत मर्त्याः' इति । अहं चाज्ञापिता—'तमसे, त्वयि प्रकृष्टप्रेमैव वधूर्जानकी । अतस्त्वमेवास्याः प्रत्यनन्तरीभव' इति । साहमधुना यथादिष्टमनुतिष्ठामि ।

मुरला—अहमप्यमुं वृत्तान्तं भगवत्यै लोपामुद्रायै निवेदयामि । रामभद्रोऽप्यागत एवेति तर्कयामि ।

---

**ति** ॥ तैश्च तैरित्यनेन राजकार्याणां बाहुविध्यं व्यज्यते । **आभ्युदयिकैः** अभ्युदयमात्रप्रयोजनैः । **चित्तविक्षेपाः** सीतावृत्तान्तपरिभावनाः । **अव्यग्रस्य** कार्यानभिनिविष्टचित्तस्य । पुनश्शब्दो विशेषे । **शोकमात्रद्वितीयस्येति** ॥ सहायविरहितस्येत्यर्थः । इतिशब्दो हेतौ । यस्मादेवंविधो रामभद्रः तस्मात्सुचिन्तितमिति संबन्धः । केनचिद्गृहापचारव्यपदेशेनेत्युक्तं संघटयितुमारभते—**तत्कथमित्यादिना** ॥ **उक्तमत्रेति** ॥ **अत्र** रामभद्राश्वासने विषये । **द्वादशस्य** द्वादशसंख्यापूरकस्य । **संख्यामङ्गलग्रन्थिरिति** ॥ जन्मप्रभृति संवत्सरसंख्यापरिज्ञानाय मङ्गलभूतो यो ग्रन्थिः प्रतिवर्षं कस्मिंश्चित्सूत्रे ग्रथितः स इदानीमभिवर्धित इत्यर्थः । तादृशग्रन्थिग्रथनकालो वर्तत इति यावत् । एतादृशस्य मङ्गलस्य प्रतिवर्षं जन्मदिन एव निर्वर्तनीयत्वादद्य जन्मदिनमिति भावः । साक्षादेवार्भकवयोगणने दोषस्मरणात्तत्परिज्ञानार्थं मात्रादिभिरेतादृशमनुष्ठीयत इति देशाचारादवगन्तव्यम् । उक्तं च श्रीमहाभारते—'आयुर्वित्तं गृहच्छिद्रं मैथुनं मन्त्रमौषधम् । दानमानावमानानि नव गोप्यानि भारत ॥' इति । **तदिति** ॥ यस्मादद्य जन्मदिनं तस्मादित्यर्थः । **उपतिष्ठस्व** पूजय । उपाद्देवपूजेत्यादिनात्मनेपदम् । भगवत्या इति उक्तमिति संबन्धः । **अहं चाज्ञापितेति** ॥ भगवत्येति शेषः । प्रकृष्टमिति भावे निष्ठा । नितरामित्यर्थः । **प्रत्यनन्तरीभवेति** ॥ यत्र यत्रैषा गच्छति तत्र तत्रानन्तरीभूय सहायकृत्यमनुतिष्ठस्वेत्यर्थः । इति अहं चाज्ञापितेति पूर्वेण संबन्धः । **अमुं वृत्तान्तं** रामभद्राश्वासनो-

**तमसा**—तदियं गोदावरीह्रदान्निर्गत्य—

परिपाण्डुदुर्बलकपोलसुन्दरं
दधती विलोलकबरीकमाननम् ।
करुणस्य मूर्तिरथवा शरीरिणी
विरहव्यथेव वनमेति जानकी ॥ ४ ॥

**मुरला**—इयं हि सा

किसलयमिव मुग्धं बन्धनाद्विप्रलूनं
हृदयकुसुमशोषी दारुणो दीर्घशोकः ।
ग्लपयति परिपाण्डुक्षाममस्याः शरीरं
शरदिज इव घर्मः केतकीगर्भपत्रम् ॥ ५ ॥

(इति परिक्रम्य निष्क्रान्ते ।)

इति शुद्धविष्कम्भः ।

---

पायरूपं वृत्तान्तम् । **तदिति** ॥ यदि रामभद्रोऽत्र समागतः तर्हि तत एवेयं जानकी गोदावरीह्रदान्निर्गत्य वनमेतीति संबन्धः । इयमित्यभिनीयोक्तिः । तादात्विकं नयनविषयीभूतं स्वरूपं कथयति—**परिपाण्डुति** ॥ परिपाण्डुना उत्कण्ठाहितपाण्डुभावेन दुर्बलेन क्षामतरेण च कपोलेन सुन्दरं मनोज्ञम् । विलोलया आकुलाकुलया कबर्या सहितं च आननं दधती **करुणस्य** करुणरसस्य **मूर्तिः** शरीरम् । अनेन नितरामपि शोचनीयत्वमुक्तम् । **शरीरिणी** मूर्तिमती **विरहव्यथा** विरहवेदना । अनेन पुनः प्रियदर्शनत्वमप्युक्तम् । विरहव्यथापरिग्लपितशरीरा हि योषितः शोचनीया नयनहारिण्यश्च भवेयुः । तथाच शाकुन्तले—'शोच्या च प्रियदर्शना च मदनक्लिष्टेयमालक्ष्यत' इति । न खल्वियं केवलं प्रियदर्शनापि किंतु शोचनीयैवेत्याह—**इयमिति** ॥ **इयं** गोदावरीह्रदान्निर्गत्य इतोमुखमागच्छन्ती **सा** जानकी । किमु कष्टमियमन्यादृशी जाता नाहमिदानीं प्रत्यभिजानामीति काका प्रकाश्यते । अप्रत्यभिज्ञेयतामेव समर्थयति—**किसलयमिति** ॥ दीर्घशोकः अस्याः शरीरं ग्लपयति इति संबन्धः । **दीर्घशोकः** अनवसानं दुःखम् । अस्या इत्यभिनीयोक्तिः । **शरीरं** विस्रब्धायासस्याप्यसहनं **ग्लपयति** म्लापयति । कीदृशं शरीरमित्यत्राह—**किसलयमिवेति** ॥ **मुग्धम्** अत्यन्तकोमलम् । ननु किसलयादप्यतिदुर्बलमस्याः शरीरमित्यत्राह—**बन्धनाद्विप्रलूनमिति** ॥ उक्तमर्थमुपमानेन स्फुटयति—**शरदिज इति** ॥ 'सप्तम्या जनेर्डः' इति डः । 'प्रावृट् शरत्कालदिवां जे' इत्य-

---

१. कमल २. क्षाम

(नेपथ्ये)

प्रमादः प्रमादः।

(ततः प्रविशति पुष्पावचयव्यग्रा सकरुणौत्सुक्यमाकर्णयन्ती सीता।)

सीता—अम्हहे, जाणामि पिअसही मे वासन्दी विअ वाहरदि।

अहो जानामि प्रियसखी मे वासन्तीव व्याहरति।

(पुनर्नेपथ्ये)

सीतादेव्या स्वकरकलितैः सल्लकीपल्लवाग्रै-
रग्रे लोलः करिकलभको यः पुरा वर्धितोऽभूत्।

सीता—किं तस्स। किं तस्य।

---

रुक्। शरत्कालभव इत्यर्थः। घर्मः आतपः। केतकीगर्भपत्रं केतक्या गर्भस्थं पत्रम्। सर्वेभ्योऽपि दलेभ्योऽभ्यन्तरभूतमित्यर्थः। कुसुमावतरणपत्रमिति यावत्। अथ साधारणधर्मानाह—हृदयकुसुमशोषीत्यादि॥ कुसुममिव हृदयम् अधिकं शोषयतीत्येकत्र, हृदयगतं कुसुमं शोषयतीत्यन्यत्र। 'बहुलमाभीक्ष्ण्ये' इति णिनिः। दारुणः क्रूरः। परिपाण्डुश्याममिति॥ विरहव्यथासंमूर्च्छनवशात् पूर्वं पर्याहितपाण्डुभावं पश्चात् श्यामिकासंक्रान्तं चेत्यर्थः। केतकीगर्भपत्रमपि तथा। इति विष्कम्भः। अथ तापसीवचनविदितसीताविपत्तिः शम्बूकवृत्तान्तपरिनिश्चितरामभद्रजनस्थानोपगमना तज्जिज्ञासयेतस्ततः संचरन्ती वासन्ती नाम वनदेवता करिण्या साकं गोदावरीपयसि विहरन्तं सीतापरिवर्धितं करिकलभकं केनापि मत्तमतङ्गजेनाभियुक्तमवलोक्य तत्परित्रातारमनालोकयन्ती ससंभ्रममाह—प्रमाद इति॥ वर्तत इति शेषः। प्रमादशब्देन च तत्कार्यभूता विपत्प्राप्तिर्लक्ष्यते। प्रतीकाराक्षमताप्रकाशनं फलम्। आक्रन्दितवचनश्रवणात् करुणम्। स्वरप्रत्यभिज्ञानादौत्सुक्यम्। अम्मह इति हर्षे। जानामि प्रियसखी मे वासन्तीव व्याहरति। इवशब्द ईषदर्थे। वासन्त्यैव व्याहृतमिति नावधार्यत इत्यर्थः। यथा किल दूरात् दृष्टे देवदत्ते तदसाधारणधर्माणामीषदनुभवादस्पष्टतया देवदत्त इवेति। को वा पुनः प्रमाद इत्यत्राह—सीतादेव्या इति॥ सीतादेव्या पुरा यः कलभकः वर्धितः अभूदिति संबन्धः। सीतादेव्या इत्यनेन यादृशतादृशेषु न वात्सल्यसंभव इति व्यज्यते। पुरा वनवासे। यच्छब्देन सीतास्नेहौचित्यं व्यज्यते। वर्धितः पोषितः। अत्र सामान्यक्रियायाः प्रतीतावपि भवतेरुपादानाज्जननीसंवार्धितानां यादृशी शरीरपुष्टिः शैशवचेष्टालालित्यं च संभवति तथैवास्येति द्योत्यते। किं वा पुनः प्रदायास्य परिपोषणं कृतमित्यत्राह—सल्लकीपल्लवाग्रैरिति॥ सल्लकीपल्लवानामग्रैरिति मृदुलैरवयवैरित्यर्थः। अतिशैशवादिति भावः। एत-

(पुनस्तत्रैव)

वध्वा सार्धं पयसि विहरन्सोऽयमन्येन दर्पा-
दुद्दामेन द्विरदपतिना संनिपत्याभियुक्तः ॥ ६ ॥

सीता— (ससंभ्रमं कतिचित्पदानि गत्वा) अज्जउत्त, परित्ताहि परित्ताहि मह तं पुत्तअम् । (विचिन्त्य) हद्धी हद्धी । ताइं एव्व चिरपरिइदाइं अक्खराइं पञ्चवडीदंसणेण मं मन्दभाइणिं अणुबन्धन्ति । हा अज्जउत्त । (इति मूर्च्छति ।)

आर्यपुत्र, परित्रायस्व परित्रायस्व मम तं पुत्रकम् । हा धिक् हा धिक् । तान्येव चिरपरिचितान्यक्षराणि पञ्चवटीदर्शनेन मां मन्दभागिनीमनुबध्नन्ति । हा आर्यपुत्र ।

(प्रविश्य)

तमसा—अयि वत्से समाश्वसिहि समाश्वसिहि ।

(नेपथ्ये)

विमानराज, अत्रैव तावत्स्थीयताम् ।

---

देवाह—**स्वकरकलितैरिति** ॥ लोभनीयतातिशयमाह—**अग्रे लोल इति** ॥ **अग्रे** पुरोभागे **लोलः** चपलः । कबलग्रहणलोभात् पुरोभुवि विहितविविधललितवल्गित इति यावत् । अथ तथाविधवचनश्रवणजातसंभ्रमा सवितर्कमाह—**किं तस्येति** ॥ जातमिति शेषः । **पुनस्तत्रैवेति** ॥ नैपथ्य एवेत्यर्थः । पूर्ववाक्यजनितामाकांक्षां पूरयति—**वध्वेति** ॥ सः अयं द्विरदपतिना संनिपत्य अभियुक्तः इति संबन्धः । सोऽयमिति प्रत्यभिज्ञा । **द्विरदपतिना** यूथपतिना **संनिपत्य** निश्शङ्कमागत्य **अभियुक्तः** अभियोगं प्रापितः । निरुद्धगतिः कृत इति यावत् । अत्र हेतुमाह—**वध्वा सार्धमिति** ॥ अतः किमित्यत्राह—**अन्येनेति** ॥ इतरभोगासहिष्णुनेत्यर्थः । ततः किमस्येत्यत्राह—**दर्पादुद्दामेनेति** ॥ प्रतिगजगन्धमप्यसहमानेनेत्यर्थः । ईदृशे खलु दुर्जाते परित्राणादर्शनात्संभ्रमः । आर्यपुत्र परित्रायस्व मम तं पुत्रकम् । हा धिक् । तान्येव चिरपरिचितानि अक्षराणि पञ्चवटीदर्शनेन मां मन्दभागिनीमनुबध्नन्ति । **आर्यपुत्रेति** ॥ हेति विषादानुभावः । धिङ्निन्दायां भर्त्सने वा । **तानि** समुदाचारसमुचितानि **चिरपरिचितानि** मद्वियोगकातराणि **अक्षराणि** इदानीमप्यविलीनानि । **पञ्चवटीदर्शनेन** परिचितप्रदेशावलोकनेन । **माम्** अधीरहृदयाम् । **मन्दभागिनीम्** अस्थिरभागधेयाम् । **अनुबध्नन्ति** मया परित्यक्तान्यपि मां न परित्यजन्ति । अयीत्यनुनये । **विमानराज** स्वच्छन्दगते **अत्रैव** अस्मिन् प्रदेश एव **तावत्** प्रथमम् । पुनः प्रदेशान्तरे-

**सीता**—(समाश्वस्य ससाध्वसोल्लासम्) अम्हहे, जलभरभरिअमेहमन्थरत्थणिअगम्भीरमंसलो कुदो णु भारईणिग्घोसो भरन्तो कण्णविवरं मं मन्दभाइणिं झत्ति उद्धूसरेइ ।

अहो, जलभरभरितमेघमन्थरस्तनितगम्भीरमांसलः कुतो नु भारतीनिर्घोषो भरन् कर्णविवरं मां मन्दभागिनीं झटित्युद्धूसरयति ।

**तमसा**—(सस्मितास्रम्) अयि वत्से,

अपरिस्फुटनिक्वाणे कुतस्त्येऽपि त्वमीदृशी ।
स्तनयित्नोर्मयूरीव चकितोत्कण्ठितं स्थिता ॥ ७ ॥

**सीता**—भअवदि, किं भणासि अपरिप्फुडं ति । सरसंजोएण पच्च-

---

ष्वपि यथारुचि स्थातव्यमिति भावः । प्रार्थनायां लोट् । अनाभमतसंनिधानशङ्कया साध्वसम् । प्रियतमवचनप्रत्यभिज्ञानादुल्लासः । अम्मह इत्यसंभावनीयोपलम्भजनिते हर्षे । जलभरितमेघमन्थरस्तनितगभीरमांसलः कुतो नु भारतीनिर्घोषो भरन् कर्णविवरं मां मन्दभागिनीं झटिति उद्धूसरयति । जलभरितस्य जलपरिपूर्णस्य मेघस्य मन्थरं मन्दं स्तनितमिव गभीरो मांसलश्च यः सः कुतः इति कस्माद्दिग्विभागादुत्थित इति न जानामीत्यर्थः । नुशब्दो वितर्के । **भारतीनिर्घोषः** भारत्या वाचो निर्घोषः ध्वनिः **भरन्** पूरयन् **कर्णविवरं** श्रोत्रावकाशम् । श्रवणेन्द्रियमाप्याययन्नित्यर्थः । **मां** सुखलेशनिरभिलाषाम् **मन्दभागिनीं** अवसितपुण्यविभवां **झटिति** वक्तृविशेषापरिज्ञानेऽपि **उद्धूसरयति** व्याकुलयति । 'उद्धूणावेइ' इति वा पाठः । चोरयतीति च्छाया । मन इत्यर्थात् । चोरार्थ उद्धूण इति निपातः । अनिमित्तौत्सुक्यदर्शनात् स्मितम् । अतिकृच्छ्रोदन्तानुसंधानादस्रम् । **अयीति** ॥ अयि वत्से त्वम् ईदृशी इति संबन्धः । अयीत्यनुनये । **वत्से** अस्मज्जीवनालम्बनभूते **त्वं** यादृशतादृशेष्वचञ्चला **ईदृशी** अत्यन्तमधीरा । निर्मूलमेवेदानीमौत्सुक्यं न युक्तमिति काक्का प्रकाश्यते । ननु वाणीविशेषप्रत्यभिज्ञानान्ममेयमधीरतेत्यत्राह—**अपरिस्फुटनिक्वाण इति** ॥ ध्वनिविशेषापरिज्ञानेऽपीत्यर्थः । तर्हि तत्र गत्वा निर्णयः कर्तव्य इत्यत्राह—**कुतस्त्येऽपीति** ॥ उक्तमर्थमुपमानेन स्फुटयति—**स्तनयित्नोरिति** ॥ अपरिस्फुटनिक्वाणे कुतस्त्येऽपीत्यनुषज्यते । यथैवानिरूपितदिग्विभागमपरिस्फुटमेव मेघध्वनिमाकर्णयन्ती तीव्रतरनिदाघसंतप्ता मयूरी वियति दत्तदृष्टिर्विवशतरं संतिष्ठते तथा त्वमपि किमर्थमीदृशेन ध्वनिना तरलितहृदया भवसीत्यर्थः । अत्राधीरतानिमित्तप्रतिक्षेपाद्विभावनालंकारः । तदुक्तम्—'क्रियायाः प्रतिषेधेऽपि फलव्यक्तिर्विभावना' इति । उपमानुगृहीता चेयमुत्तिष्ठतीति संकरः ॥

हिजाणामि णं अज्जउत्तेण एव्व एदं वाहरिदम् ।

भगवति, किं भणस्यपरिस्फुटमिति । स्वरसंयोगेन प्रत्यभिजानामि नन्वार्यपुत्रेणैवैतद्व्याहृतम् ।

तमसा—ननु श्रूयते तपस्यतः किल शूद्रस्य दण्डधारणार्थमैक्ष्वाको राजा दण्डकारण्यमागत इति ।

सीता—दिट्ठिआ अपरिहीणधम्मा खु सो राआ ।

दिष्ट्या अपरिहीनधर्मा खलु स राजा ।

(नेपथ्ये)

यत्र द्रुमा अपि मृगा अपि बन्धवो मे
यानि प्रियासहचरश्चिरमध्यवात्सम् ।
एतानि तानि बहुकन्दरनिर्झराणि
गोदावरीपरिसरस्य गिरेस्तटानि ॥ ८ ॥

सीता—हा कहं पहादचन्दमण्डलापण्डरपरिक्खामदुब्बलेन आआरेण अअं सोम्हगम्भीराणुभावमेत्तपच्चहिजाणिज्जो अज्जउत्तो एव्व । तं भअवदि तमसे, धारेहि मम् ।

---

भगवति किं भणसि अपरिस्फुटमिति । स्वरसंयोगेन प्रत्यभिजानामि नन्वार्यपुत्रेणैव व्याहृतमिति । ननुरनुमतौ । **श्रूयत इति** ॥ जनस्थानवर्तिभिरिति शेषः । किलेति वार्तायाम् । **तपस्यतः** तपः प्रकुर्वतः **शूद्रस्य** अनधिकारिणः **दण्डधारणार्थं** निग्रहार्थम् **ऐक्ष्वाकः** धर्मसेतुप्रतिष्ठापकः **राजा** परार्थप्रतिपादनपरः । एवं तमसावचनजातनिर्णया पुनरपि संगमाशापराङ्मुखतया ताटस्थ्यमवलम्ब्याह—दिष्ट्या अपरिहीणधर्मा खलु स राजा । खलुरवधारणे । **यत्रेति** ॥ गोदावरीपरिसरस्य गिरेः तानि तटानि एतानि इति संबन्धः । **गोदावरीपरिसरस्य** गोदावर्याः परिसरभूतस्य वेलास्थानीयस्येति यावत् । **तानि** पूर्वानुभूतानि **तटानि** उपत्यकास्थानानि **एतानि** पुरोवर्तीनि । अतोऽत्रैव तावत्स्थीयतामिति पूर्वेण संबन्धः । कुत इत्यत्राह—**यत्रेति** ॥ **यत्र** येषु तटेषु **द्रुमा अपि** परिचयावगमनवन्ध्या अपि **मृगा अपि** परदुःखानभिज्ञा अपि **बन्धवः** संतापहारिणः । सीतापरिवर्धितत्वादेते तरवो मृगाश्च मम नयनविनोदकारिणः । एतदेव प्रतिपादयति—**यानीति** ॥ **प्रियासहचरः** सीतासहायः । **चिरं** चिरकालम् । अत्र हेतुमाह—**बहुकन्दरनिर्झराणीति** ॥ विशेषकाव्यलिङ्गयोरत्नानुग्राह्यानुग्राहकतया संकरः । हा कथं प्रभातचन्द्रमण्डलापाण्डुरपरिक्षामदुर्बलेनाकारेणायं सौम्यगम्भीरानुभाव-

हा कथं प्रभातचन्द्रमण्डलापाण्डरपरिक्षामदुर्बलेनाकारेणायं सौम्यगम्भीरानुभावमात्रप्रत्यभिज्ञेय आर्यपुत्र एव । तद्भगवति तमसे, धारय माम् ।

(इति तमसामाश्लिष्य मूर्च्छति ।)

**तमसा**—वत्से, समाश्वसिहि समाश्वसिहि ।

(नेपथ्ये)

अनेन पञ्चवटीदर्शनेन—

अन्तर्लीनस्य शोकाग्नेरद्योद्दामं ज्वलिष्यतः ।
उत्पीड इव धूमस्य मोहः प्रागावृणोति माम् ॥ ९ ॥

हा प्रिये जानकि ।

**तमसा**—(स्वगतम्) इदं तदाशङ्कितं गुरुजनेन ।

**सीता**—(समाश्वस्य) हा हा, कहं एदम् । हा हा कथमेतत् ।

---

मात्रप्रत्यभिज्ञेय आर्यपुत्र एव । तत् भगवति तमसे धारय माम् । हा हेति विषादानुभावः । कथमिति वितर्के । अयमार्यपुत्र एवेति संबन्धः । कुतो न प्रत्यभिज्ञायत इत्यत्राह—**प्रभातेति** ॥ प्रभातचन्द्रमण्डलवत् प्रातःस्थेन्दुबिम्बवत् आपाण्डुरेण मूर्च्छितपाण्डुभावेन परिक्षामेणातिकृशेन दुर्बलेनावसन्नेन चाकारेणोपलक्षित इत्यर्थः । कथं पुनः स एवेत्यवगन्तुं शक्यते इत्यत्राह—**सौम्येति** ॥ सौम्येन अनुद्धतेन गम्भीरेण अक्षोभ्येण अनुभावेन केवलं प्रत्यभिज्ञातुं शक्य इत्यर्थः । **धारय** अवलम्बस्व । अथ नयनमनोविनोदनाशया समादृतेन पूर्वनिवाससंदर्शनेन विवृद्धहृदयसंताप आह—**अनेनेति** ॥ अथ अनेन पञ्चवटीदर्शनेन मोहः माम् आवृणोति इत्यन्वयः । अयेत्यनेन वस्तूनां सुखासुखविधायित्वे कारणं दुर्विज्ञानमिति विषादो व्यज्यते । **अनेन** सीतावृत्तान्तस्मारकेण पञ्चवटीदर्शनेन पूर्वनिवासावलोकनेन **मोहः** वैचित्त्यं **माम्** एतादृशसंकटानभिज्ञम् **आवृणोति** आच्छादयति । विध्वस्तनिखिलसंस्कारं करोतीति यावत् । अथाननुभूतचरमतितीव्रं च किमप्यान्ध्यमनुभवन् किमित्युत्प्रेक्षते—**उद्दाममिति** ॥ अनिवारितप्रसरं यथा तथेति यावत् । **ज्वलिष्यतः** ज्वलितुमारब्धस्य **शोकाग्नेः** शोकस्यैवाग्नेः **उत्पीडः** उद्रेकः । उत्सर्प इति यावत् । केन वा पुनरिदानीमीदृशस्य शोकस्य संभव इत्यत्राह—**अन्तर्लीनस्येति** ॥ चिरमेव निलीयावस्थितस्य सीताशोकस्यैवेत्यर्थः । शोकाग्नेरित्यत्र ज्वलनक्रियाया आरोपितधर्मत्वाद्रूपकमलंकारः । गुरुजनेन आशङ्कितं तत् इदम् इति संबन्धः । **गुरुजनेन** भागीरथ्या **आशङ्कितम्** अभ्यूहितम् **तत्** प्रमादस्थानम् **इदं** दृष्टिगोचरीभूतम् । हा हा कथमेतत् । **देवि** प्रशंसनीयच-

(पुनर्नेपथ्ये)

हा देवि दण्डकारण्यवासप्रियसखि विदेहराजपुत्रि । (इति मूर्च्छति ।)

सीता—हद्धी हद्धी । मं मन्दभाइणिं वाहरिअ आमीलन्तणेत्तणीलुप्पलो मुच्छिदो एव्व । हा हा, धरणीपिट्ठे णिरुच्छासणीसहं विपल्हत्थो । भअवदि तमसे, परित्ताएहि जीवावेहि अज्जउत्तम् । (इति पादयोः पतति ।)

हा धिक् हा धिक् । मां मन्दभागिनीं व्याहृत्यामीलन्नेत्रनीलोत्पलो मूर्च्छित एव । हा हा, धरणीपृष्ठे निरुच्छ्वासनिःसहं विपर्यस्तः । भगवति तमसे, परित्रायस्व जीवयार्यपुत्रम् ।

तमसा—

त्वमेव ननु कल्याणि संजीवय जगत्पतिम् ।
प्रियस्पर्शो हि पाणिस्ते यत्रैष निरतो जनः ॥ १० ॥

सीता—जं होदु तं होदु । जह भअवई आणवेइ ।

यद्भवतु तद्भवतु । यथा भगवत्याज्ञापयति ।

(इति ससंभ्रमं निष्क्रान्ता ।)

---

रिते । **दण्डकारण्यप्रियसखि** वनवाससौख्यकारिणि **विदेहराजपुत्रि** एतादृशक्लेशानर्हे । हा धिक् मां मन्दभागिनीं व्याहृत्य आमीलन्नेत्रनीलोत्पलो मूर्च्छित एव । हा हा धरणीपृष्ठे निरुच्छ्वासनिस्सहं विपर्यस्तः । भगवति तमसे परित्रायस्व । जीवयार्यपुत्रम् । **मां** सर्वथाप्यशक्योपसर्पणां **मन्दभागिनीं** निर्भाग्याम् । **व्याहृत्य** आहूय । **आमीलन्नेत्रनीलोत्पलः** आमीलती ईषन्निमीलती नेत्रनीलोत्पले नीलोत्पलसदृशे नेत्रे यस्य सः । **धरणीपृष्ठे** भूतले । **निरुच्छ्वासनिस्सहं** निर्गतोच्छ्वासतया निस्सहं यथा तथेति क्रियाविशेषणम् । **विपर्यस्तः** वैपरीत्येनास्तः क्षिप्तः पादावुत्क्षिप्य नीचैश्शिराः पतित इत्यर्थः । **त्वमेवेति** ॥ हे कल्याणि त्वमेव जगत्पतिं संजीवय ननु इत्यन्वयः । **कल्याणि** जगन्मङ्गलभूते **जगत्पतिं** त्रैलोक्यरक्षितारम् । त्वमेवेत्यवधारणे । प्रियतमाङ्गसंगस्तवापि समाश्वासहेतुः । तव किमिति ताटस्थ्यमवलम्ब्यत इति व्यज्यते । **संजीवय** निरातङ्कं कुरु । अहं तु जीवनमात्रे समर्था नतु निखिलक्लेशापहरण इति भावः । किं वा विधायेदानीमयं जीवयितव्य इत्यत्राह—**प्रियस्पर्श इति** ॥ शीघ्रमस्य हृदये पाणिर्निधीयतामित्यर्थः । परित्यक्तायाः संनिधानं किमस्याभिमतमित्यत्राह—**यत्रेति** ॥ **निरतः** तत्परः । यद् भवतु तद् भवतु । यथा भग-

(ततः प्रविशति भूम्यां निपतितः सास्रया सीतया स्पृश्यमानः साह्लादोच्छ्वासो रामः ।)

**सीता**—(किंचित्सहर्षम् ।) जाणे पुणोवि पच्चाअदं विअ जीविअं तेल्लोक्कस्स ।

जाने पुनरपि प्रत्यागतमिव जीवितं त्रैलोक्यस्य ।

**रामः**—हन्त भोः किमेतत् !

आश्च्योतनं नु हरिचन्दनपल्लवानां
निष्पीडितेन्दुकरकन्दलजो नु सेकः ।
आतप्तजीवितमनःपरितर्पणोऽसौ
संजीवनौषधिरसो हृदि मे नु सिक्तः ॥ ११ ॥

---

वत्याज्ञापयति । तथैव करोमीति शेषः । यथाप्रतिभासं लोकः संभावयतु भगवतीमतमनुतिष्ठाम्येवेत्यर्थः । कामचारे लोट् । जाने पुनरपि प्रत्यागतमिव जीवितं त्रैलोक्यस्य । जान इति तिङन्तप्रतिरूपकमव्ययम् । अतोऽत्र कर्माभावः । इतिशब्दमध्याहृत्य वा व्याख्येयम् । **प्रत्यागतं** प्रतिनिवृत्तम् । एतज्जीविताभावे त्रैलोक्यमपि मृतप्रायमेवेति भावः । एवं तत्तादृशविरहदशासमनुभूतसीताकरतलसुखस्पर्शः तत्क्षणप्रवृद्धहृदयाह्लादपरवशीकृतस्तादात्विकस्य प्रमोदकारणस्यासंभावनीयतामनुसंदधान आह—**हन्तेति** ॥ हन्तेति हर्षे । अत्र भो इति निपातः संबोधनीयाभिमुख्यकरणार्थोऽपि तदसंभवाज्जिज्ञासायाम् । जिज्ञासितं चार्थमनुसंदिहान आह—**आश्च्योतनमिति** ॥ मे हृदि हरिचन्दनपल्लवानाम् आश्च्योतनं नु इति संबन्धः । **मे** दिव्यजनैरप्यनुकम्पनीयस्य **हृदि** शोकाग्निपरिदीपिते । **हरिचन्दनपल्लवानां** मर्त्यलोकदुर्लभानां हरिचन्दनपल्लवानाम् । **आश्च्योतनम्** ईषत्क्षरणं रसनिष्यन्द इत्यर्थः । ननु प्रतिक्षणविवृद्धसंतापे हृदि प्रसेचनसमय एवोष्मातिरेकान्न परं संतापस्यानुपरमः प्रत्युत वृद्धिरेवेत्यत्राह—**निष्पीडित इति** ॥ निष्पीडितेभ्यः नितरां पीडितेभ्यः इन्दुकरकन्दलेभ्यः चन्द्रमरीचिप्ररोहेभ्यो जातो यः **सेकः** सेचनयोग्यो रसः । करणे घञ् । निष्पीडनौचित्यप्रतिपत्तये कन्दलशब्दः । ननु तेजसां कथं निष्पीडनमुपपद्यत इत्यत्राह—**आतप्तेति** ॥ आतप्तयोर्नितरामेव तप्तयोर्जीवितमनसोः परितर्पणः सम्यक्प्रीतिकर इत्यर्थः । **असौ** प्रसिद्धः । **संजीवनौषधिः** मृतसंजीविनीसंज्ञित औषधिविशेषः निखिलौषधिसारभूतः पीयूषरसो वा । ननु तादृशोऽपि भेषजविशेषः केवलं जीवितप्रत्यानयने समर्थः न पुनरेतादृशनिरातिशयानन्दकरणे, अतः कीदृशमिदानीं हर्षकारणमुपलब्धमिति न जानामीत्यर्थः । अत्र विषयस्य संदिह्यमानत्वात् संदेहोऽलंकारः । स च केवलं

अपि च ।

स्पर्शः पुरा परिचितो नियतं स एव
संजीवनश्च मनसः परिमोहनश्च ।
संतापजां सपदि यः प्रतिनुद्य मूर्च्छा-
मानन्दनेन जडतां पुनरातनोति ॥ १२ ॥

सीता—(ससाध्वसकरुणमपसृत्य) एत्तिअं एव्व दाणिं मे बहुदरम् ।
एतावदेवेदानीं मे बहुतरम् ।

रामः—(उपविश्य) न खलु वत्सलया देव्याभ्युपपन्नोऽस्मि ।

सीता—हद्धी । किं अज्जउत्तो मं मण्णिस्सदि ।
हा धिक् । किमार्यपुत्रो मां मंस्यते ।

रामः—भवतु । पश्यामि ।

---

संशये पर्यवसानात् शुद्धरूपः । अथ क्रमेण स्पर्शविशेषमनुसंदधान आह—**अपि चेति** ॥ मद्बुद्धिरिदानीं निश्चयकोटिमवगाहत इत्यर्थः । एतदेव समर्थयति—**स्पर्श इति** ॥ यः मनसः संतापजां मूर्च्छां सपदि प्रतिनुद्य पुनः आनन्देन जडतामातनोति एषः पुरा परिचितः स स्पर्शः नियतमित्यन्वयः । यच्छब्देन विधेयवाक्यार्थसर्वस्वप्रतिद्वन्द्वीभूतोऽर्थः परामृश्यते । **मनसः** दुर्निवारचिन्तासंतप्यमानस्य **संतापजां** दाहव्यथासमुद्भूताम् **मूर्च्छां** नवमीमवस्थाम् **सपदि** क्षणेनैव । तमःप्रकाशन्यायेनेत्यर्थः । **प्रतिनुद्य** दूरतो निरस्य । पुनश्शब्दो विशेषे । **आनन्दनेन** परमाह्लादापादनेन **जडताम्** अप्रतिपत्तिम् । **पुरा** एतादृशदशादुर्विपाकात्पूर्वं **परिचितः** नैरन्तर्येणाभ्यस्तः । स इति पूर्वानुभूतानुभवपरामर्शः । **स्पर्शः** त्वगिन्द्रियानुभवयोग्यो विषयः । **नियतं** निश्चितम् । नहीयं प्रतीतिर्विसंवदितुमर्हतीत्यर्थः । प्रत्यभिज्ञादार्ढ्यमुपपादयति—**संजीवनश्च मनसः परिमोहनश्चेति** ॥ चकारावेकस्मिन्नर्थे विरुद्धसमुच्चायकौ । अत्र प्रतीयमानस्य जीवनापादनहरणरूपस्य विरोधस्य समुल्लासनानन्दनरूपाभ्यामर्थाभ्यां समाधेयतया विरोधोऽलंकारः । स्वसन्निधानप्रतिबोधशङ्कया साध्वसम् । प्रियतमस्पर्शसुखविच्छेदात् करुणम् । प्रियतमवैवश्यवशाद्वा । पुरोभुवः पश्चाद्गमनमपसरणम् । एतावदेवेदानीं मे बहुतरम् । **एतावदेव** उच्छ्वासापादनमात्रमेव **इदानीम्** अस्यामवस्थायाम् **मे** मन्दभाग्यायाः **बहुतरम्** अनल्पतरम् करणीयमौलिभूतमित्यर्थः । अथ स्पर्शविशेषप्रत्यभिज्ञानात् सवितर्कमाह—**न खल्विति** ॥ खलुर्जिज्ञासायाम् । **वत्सलया** स्नेहकातरया **अभ्युपपन्नोऽनुगृहीतः** । हा धिक् किमार्यपुत्रो मंस्यते । किंशब्दो वितर्के ।

सीता—भअवदि तमसे, ओसरह्म । जइ दाव मं पेक्खिस्सदि तदो अणब्भणुण्णादसंणिहाणेण अहिअदरं राआ कुपिस्सदि ।

भगवति तमसे, अपसरावः । यदि तावन्मां प्रेक्षिष्यते ततोऽनभ्यनुज्ञातसंनिधानेनाधिकतरं राजा कोपिष्यति ।

तमसा—अयि वत्से, भागीरथीप्रसादाद्वनदेवतानामप्यदृश्यासि संवृत्ता ।

सीता—आ अत्थि एदम् । आ अस्त्येतत् ।

रामः—ननु प्रिये जानकि ।

सीता—(समन्युगद्गदम्) अज्जउत्त, असरिसं खु एदं इमस्स वुत्तन्दस्स । (सास्रम्) अहव, किंति वज्जमइआ जम्मन्तरे वि पुणो असंभाविअतुलग्गलद्धदंसणस्स मं एव्व मन्दभाइणिं उद्दिसिअ एव्वं वच्छलस्स एव्वंवादिणो अज्जउत्तस्स उवरि णिरणुक्कोसा होमि । अहं वि एदस्स हिअअं जाणामि, मह वि एसो ।

आर्यपुत्र, असदृशं खल्वेतदस्य वृत्तान्तस्य । अथवा किमिति वज्रमयिका जन्मान्तरेऽपि पुनरसंभावितनुलाग्रलब्धदर्शनस्य

---

इतिशब्दः प्रकारे । अस्मत्सांनिधानमार्यपुत्रः केन प्रकारेण जानीयादित्यर्थः । भगवति तमसे अपसरावः । यदि तावन्मां प्रेक्षिष्यते ततोऽनभ्यनुज्ञातसंनिधानेन अधिकतरं राजा कोपिष्यति । तावच्छब्दो वाक्यालंकारे । आ इति स्मरणे । अस्त्येतदित्यनुवादे । ननुरनुमतौ अनुनये वा । त्वत्सन्निधानं ममानुमतमेव किमर्थं पुनस्तिरोदधासीत्यर्थः । **समन्युगद्गदमिति** ॥ मन्युजनितेन गद्गदेन सहितं यथा तथा आहेति शेषः । कृतविप्रियस्यानुनयनवचनान्मन्युः । आर्यपुत्र असदृशं खल्वेतदस्य वृत्तान्तस्य । **असदृशम्** अनुचितम् । खलुरवधारणे । **एतत्** ईदृशं वैक्लब्यम् **अस्य वृत्तान्तस्य** परित्यागवृत्तान्तस्य । कोपप्रशमस्यानुभाव आस्रम् । अथवा किमिति वज्रमयिका जन्मान्तरेऽपि पुनरसंभावितनुलाग्रलब्धदर्शनस्य मामेव मन्दभागिनीमुद्दिश्यैवं वत्सलस्य एवंवादिन आर्यपुत्रस्योपरि निरनुक्रोशा भवामि । अहमप्येतस्य हृदयं जानामि, ममाप्येषः । अथवेति पक्षव्यावृत्तौ । किंशब्दो वितर्के । इतिर्हेतौ । **वज्रमयिका** वज्रात्मिका कठिनहृदयेत्यर्थः । **जन्मान्तरेऽपीति** ॥ का वा कथाऽस्मिन् जन्मनीति भावः । पुनःशब्द आवृत्तौ । **असंभाविततुलाग्रलब्धदर्शनस्येति** ॥ असंभावितं संभावनाया अप्यविषयीभूतं तुलाग्रलब्धं दर्शनं तुलाग्रे लब्धं दर्शनं यस्य सः । तुला पारिच्छेदः द्रष्टव्यताव-

मामेव मन्दभागिनीमुद्दिश्यैवं वत्सलस्यैवंवादिन आर्यपुत्रस्योपरि निरनुक्रोशा भवामि। अहमप्येतस्य हृदयं जानामि, ममाप्येषः।

रामः—(सर्वतोऽवलोक्य सनिर्वेदम्।) हा, न किंचिदत्र।

सीता—भअवदि, णिक्कारणपरिच्चाइणो वि एदस्स दंसणेण एव्वंविधेण कीलिसीओ विअ मे हिअआवत्था त्ति ण आणामि।

भगवति, निष्कारणपरित्यागिनोऽप्येतस्य दर्शनेनैवंविधेन कीदृश्य इव मे हृदयावस्था इति न जानामि।

तमसा—जानामि वत्से, जानामि।

तटस्थं नैराश्यादपि च कलुषं विप्रियवशा-
द्वियोगे दीर्घेऽस्मिञ्झटिति घटनात्स्तम्भितमिव।
प्रसन्नं सौजन्याद्दयितकरुणैर्गाढकरुणं
द्रवीभूतं प्रेम्णा तव हृदयमस्मिन्क्षण इव॥ १३॥

---

धारणमित्यर्थः। तस्याग्रेऽनन्तरमस्य दर्शनं मम दुर्लभमित्यर्थः। असंभाविततुलाग्रया लब्धदर्शनं यस्येति वा विग्रहः। तुलाग्रं तुलोत्कर्षः शुद्ध्यतिशय इति यावत्। 'आरोपणाय परिसर्पति रामभद्रे गोत्रं तुलां समधिरूढमहस्करस्य' इति बालरामायणे। पुनरपि वह्निशुद्धिर्मम दुर्लभैव। अत आर्यपुत्रदर्शनमपि दुर्लभमित्यर्थः। असंभावितं तुलाग्रलब्धं तुलाग्रवल्लब्धं दर्शनं यस्येति वा। तुलाग्रं हि कदाचिदपि न स्थिरम्। सर्वथापि क्षणलब्धदर्शनस्येत्यर्थः। **निरनुक्रोशा** निर्दया। भगवति निष्कारणं परित्यागिनोऽपि नाम एतस्यैवंविधेन दर्शनेन कीदृश्य इव मे हृदयावस्था इति न जानामि। **जानामीति**॥ हृदयावस्था इत्यनुषज्यते। भृशार्थे द्विर्वचनम्। कीदृश्यः पुनस्ता इत्यत्राह—**तटस्थमिति**॥ तव हृदयं नैराश्यात्तटस्थमिति संबन्धः। **तव** अतर्कितोपनतप्रियसंदर्शनायाः **हृदयम्** अनुभूयमानविरहव्यथं **नैराश्यात्** निराशतया पुनःपरिग्रहणाकांक्षाविरहादित्यर्थः। **तटस्थं** प्रेमप्रणयस्नेहरागादिभावेष्वनन्तर्गतं बहिःष्ठमित्यर्थः। उदासीनमिति यावत्। न केवलं ताटस्थ्यमेवेत्याह—**अपि चेति**॥ **कलुषं** ईर्ष्याकषायितं **विप्रियवशात्** निष्कारणपरित्यागबलात्। न पुनः कलुषमेवेत्याह—**वियोग इति**॥ अभिलाषविरहेत्यादिना प्रतिपादितेषु पञ्चविधेषु अतिकृच्छ्रतया प्रकृष्टविषयविप्रलम्भ इत्यर्थः। **दीर्घे** अनवसाने **अस्मिन्** अश्रुवैवर्ण्यग्लान्यादिनास्माभिरध्यक्षतयैवानुभूयमाने **झटिति** अतर्कितमेव **घटनात्** योगात् **स्तम्भितं** निर्विकारम् विगलितनिखिलसंस्कारमि-

रामः—देवि

प्रसाद इव मूर्तस्ते स्पर्शः स्नेहार्द्रशीतलः ।

अद्याप्यानन्दयति मां त्वं पुनः क्वासि नन्दिनि ॥ १४ ॥

सीता—एदे क्खु दे अगाधदंसिदसिणेहसहाआ आणन्दणिस्सन्दिणो सीतामआ अज्जउत्तस्स उल्लावा । जाणं पच्चएण णिक्कालणपरिच्चाअसल्लिदोवि बहुमदो मे जम्मलाहो ।

एते खलु तेऽगाधदर्शितस्नेहसहाया आनन्दनिष्यन्दिनः सीतामया आर्यपुत्रस्योल्लापाः । येषां प्रत्ययेन निष्कारणपरित्यागशल्यितोऽपि बहुमतो मे जन्मलाभः ।

---

त्यर्थः । ननु स्तम्भितमेवेत्याह—**प्रसन्नमिति** ॥ संतुष्टमित्यर्थः । **सौजन्यात्** सुजनभावात् । न खलु प्रसन्नमेवेत्याह—**दयितकरुणैरिति** ॥ दयितस्य प्राणेभ्योऽपि गरीयसः करुणैः शोकैः । अनुभावपरत्वात् बहुवचनम् । **गाढकरुणम्** अनल्पानुक्रोशम् प्रवृद्धशोकमिति वा । नापि गाढकरुणमेवेत्याह—**द्रवीभूतमिति** ॥ विमुक्तकाठिन्यमित्यर्थः । **प्रेम्णा** चित्तद्रवीभावकारणेन । विस्रम्भातिशयजनितेन स्नेहेनेत्यर्थः । तदुक्तम्—'विस्रम्भे परमां काष्ठामारूढे दर्शनादिभिः । यत्र द्रवत्यन्तरङ्गं स स्नेह इति कथ्यते ॥' इति । नच पूर्वपूर्वोपमर्देनोत्तरोत्तरमेता अवस्था इत्याह—**अस्मिन् क्षण इवेति** ॥ इवशब्दोऽवधारणे । अत्र क्रमभाविनीनां तटस्थतादिरूपाणां क्रियाणामेकस्मिन् कारके यौगपद्येन समावेशनाद्दीपकातिशयोक्त्योः संकरः । स्पृश्यमानायाः कथमनुपलब्धिरिति सवितर्कमाह—**देवीति** ॥ हे नन्दिनि देवि ते स्पर्शः अद्यापि मामानन्दयति, त्वं पुनः क्वासि इत्यन्वयः । **नन्दिनि** आनन्दयित्रि **देवि** दुरवबोधगते **ते** दयार्द्रहृदयायाः । **अद्यापि** अस्यामवस्थायामपि **माम्** अननुकम्पनीयम् **आनन्दयति** समृद्धहर्षं करोति । पुनःशब्दो विरोधे । **क्वासि** कुत्र वा वर्तसे । दर्शनदानानुग्रहेण विशेषतोऽपि मामानन्दयेति काका प्रकाश्यते । ननु व्यलीककलुषिता कथं प्रकाशे संतिष्ठेत इत्यत्राह—**प्रसाद इति** ॥ इवशब्द उत्प्रेक्षायाम् । **मूर्तः** त्वागिन्द्रियग्राह्यः । स्पर्शनेन कथं प्रसन्नेत्यवगम्यत इत्यत्राह—**स्नेहार्द्रशीतल इति** ॥ स्नेहस्यार्द्रतया बहुलतया शीतल इत्यर्थः । परिकुपितानां मनःशरीरयोः तापः परस्परमनुव्रजेदिति न्यायेन स्पर्शो नितरामुष्ण एव तैजसत्वात् कोपस्य । तथा चोक्तम्—'चक्षुर्विपत्तिरङ्गौष्ण्यवर्णशौचाङ्गसौष्ठवाः । संतापरूपामर्षाद्या नृपैते तैजसा गुणाः ॥' इति । एते खलु ते अगाधदर्शितस्नेहसहाया आनन्दनिष्यन्दिनः सीतामया आर्यपुत्रस्योल्लापाः । येषां प्रत्ययेन निष्कारणपरित्यागशल्यितोऽपि बहुमतो मे जन्मलाभः । **एते** इदानीमनेनोच्य-

**रामः**—अथवा कुतः प्रियतमा । नूनं संकल्पाभ्यासपाटवोपादान एष रामस्य भ्रमः ।

(नेपथ्ये)

अहो, महान्प्रमादः प्रमादः । ('सीतादेव्या स्वकरकलितैः' इत्यर्धं पठ्यते ।)

**रामः**—(सकरुणौत्सुक्यम्) किं तस्य ।

(पुनर्नेपथ्ये) ('वध्वा सार्धं' इत्युत्तरार्धं पठ्यते ।)

**सीता**—को दाणिं अभिउज्जिस्सदि । क इदानीमभियोक्ष्यते ।

**रामः**—कासौ कासौ दुरात्मा यः प्रियायाः पुत्रकं वधूद्वितीयमभिभवति । (इत्युत्तिष्ठति ।)

(प्रविश्य संभ्रान्ता)

**वासन्ती**—कथं देवो रघुनन्दनः ।

**सीता**—कहं पिअसही इअं वासन्ती । कथं प्रियसखीयं वासन्ती ।

**वासन्ती**—जयतु देवः ।

**रामः**—(निरूप्य) कथं देव्याः प्रियसखी वासन्ती ।

---

मानाः । खलुरवधारणे । **ते** अस्यामवस्थायामसंभावनीयाः । **अगाधदर्शितस्नेहसहायाः** अगाधतया अपरिच्छिन्नतया दर्शितेन प्रकाशितेन स्नेहेन सह प्रसृताः । आनन्दं नितरां स्यन्दयतीत्यानन्दनिष्यन्दिनः । ममेत्यर्थात् । **सीतामयाः** सीतात्मकाः **उल्लापाः** काकुपूर्वकाः अनुनयालापाः । 'काका वर्णनमुल्लापः' इति यादवः । **निष्कारणपरित्यागशल्यितः** निष्कारणः कारणशून्यः परित्याग एव शल्यं तद्वान् कृत इति । तत्करोतिणिजन्तात् क्तः । **जन्मलाभ इति** ॥ जन्मनो जननस्य लाभः सिद्धिरित्यर्थः । किंशब्दः क्षेपे । नूनमिति निश्चये । **संकल्पाभ्यासपाटवोपादान इति** ॥ संकल्पो भावना अभ्यासो नैरन्तर्यं तस्य पाटवं नामापरोक्षताबोधः तत्ताप्रतीतिविगलनमिति यावत् । तदेवोपादानं कारणं यस्य सः । **एषः** सीतास्पर्शानुभवः । **रामस्य** विमर्शशून्यस्य **भ्रमः** चित्तविपर्यासः । अत्याहितशङ्कया करुणम् । वाक्यशेषशुश्रूषयौत्सुक्यम् । क इदानीमभियोक्ष्यते । एतद्रक्षणाय प्रयतेतेत्यर्थः । **कासाविति** ॥ संभ्रमवशात् द्विर्वचनम् । **दुरात्मा** अकाण्डविरोधी **प्रियायाः** अवश्यमेवाभिलषितयोजनसमुचितायाः **पुत्रकं** कृतकपुत्रम् **वधूद्वितीयं** अस्वतन्त्रसमुपस्थानम् **अभिभवति** पराक्रामति । इतिशब्द उक्तौ । **उत्तिष्ठति** आसनस्थानादित्यर्थात् । कथमिति वितर्के । **देवः** आपन्नानुकम्पी । अत्र समुदाचारतया राजविषयो देवशब्दो मुख्यार्थस्यानुपयोगात् आपन्नानुकम्पित्वादिरूपेऽर्थेऽभिसंक्रामति ।

**वासन्ती**—देव, त्वर्यतां त्वर्यताम् । इतो जटायुशिखरस्य दक्षिणेन सीतातीर्थेन गोदावरीमवतीर्य संभावयतु देव्याः पुत्रकं देवः ।

**सीता**—हा ताद जडाओ, सुण्णं तुए जणट्ठाणम् ।

हा तात जटायो, शून्यं त्वया जनस्थानम् ।

**रामः**—अहह हृदयमर्माविधः खल्वमी कथोद्धाताः ।

**वासन्ती**—इत इतो देवः ।

**सीता**—भअवदि, सच्चं एव्व वणदेवदावि मं ण पेक्खदि ।

भगवति, सत्यमेव वनदेवतापि मां न प्रेक्षते ।

**तमसा**—अयि वत्से, सर्वदेवताभ्यः प्रकृष्टमैश्वर्यं मन्दाकिन्याः । तत्किमित्याशङ्कसे ।

**सीता**—तदो अणुसरह्म । (इति परिक्रामति ।) ततोऽनुसरावः ।

**रामः**—भगवति गोदावरि, नमस्ते ।

**वासन्ती**—(निरूप्य) देव, मोदस्व विजयिना वधूद्वितीयेन देव्याः पुत्रकेण ।

**रामः**—विजयतां विजयतामायुष्मान् ।

**सीता**—अह्महे ईदिसो सो संवुत्तो । अहो, ईदृशः स संवृत्तः ।

---

एकार्थसमवायः संबन्धः । परार्थैकप्रवणताप्रकाशनं फलम् । **रघुनन्दनः** मनुकुलप्रशस्तिकारी । कथं प्रियसखी इयं वासन्ती । **इतः** पुरतो दृश्यमानस्य **जटायुशिखरस्य** जटायुनिवासस्य शिखरस्य **दक्षिणेन** दक्षिणस्यां दिशि अदूरभवेन **सीतातीर्थेन** सीतापरिगृहीतेन तीर्थेन । जलावगाहमार्गेणेत्यर्थः । 'तीर्थं मन्त्रे पुण्यजले पुण्यक्षेत्रेऽध्वरे भगे । जलावगाहमार्गे च' इति यादवः । **गोदावरीमवतीर्य** गोदावरीमवगाह्य । **संभावयतु** पश्यतु । हा तात जटायो शून्यं त्वया जनस्थानम् । हहहेति खेदे । **हृदयमर्माविधः** हृदयमेव मर्म आ समन्तात् ये विध्यन्ति ते । खलुरवधारणे । **अमी** श्रूयमाणाः । **कथोद्धाताः** । कथाप्रसंगाः । भगवति सत्यमेव वनदेवतापि मां न प्रेक्षते । **सर्वदेवताभ्यः** नदीवननगर्याद्यधिष्ठात्रीभ्यः । विभक्तौ पञ्चमी । **प्रकृष्टम्** अतिरिक्तम् । **ऐश्वर्यम्** ईशितृत्वं प्रभाव इति यावत् । **तत्** तस्मात् । **किमिति** कस्माद्धेतोः **आशङ्कसे** बिभेषि । ततोऽनुसरावः । **मोदस्व** संतुष्टो भव **वधूद्वितीयेन** वधूसहायेन **देव्याः** सीतायाः **पुत्रकेण** कृतकपुत्रेण । विजयतामिति प्रार्थनायां लोट् । हर्षातिरेकवशात् द्विर्वचनम् । अम्मह ईदृशः

**रामः**—हा देवि, दिष्ट्या वर्धसे ।

येनोद्गच्छद्बिसकिसलयस्निग्धदन्ताङ्कुरेण
व्याकृष्टस्ते सुतनु लवलीपल्लवः कर्णमूलात् ।
सोऽयं पुत्रस्तव मदमुचां वारणानां विजेता
यत्कल्याणं वयसि तरुणे भाजनं तस्य जातः ॥ १५ ॥

**सीता**—अविउत्तो दाणिं अअं दीहाऊ इमाए सोम्मदंसणाए होदु ।

अवियुक्त इदानीमयं दीर्घायुरनया सौम्यदर्शनया भवतु ।

**रामः**—सखि वासन्ति, पश्य पश्य । कान्तानुवृत्तिचातुर्यमप्यर्ध

---

संवृत्तः । अम्मह इति हर्षे । **ईदृशः** तारुण्ययोग्यसमुचितलावण्यः प्रतिद्विपविजयसमर्थश्चेत्यर्थः । **सः** अतिशिशुतयैव पूर्वमवलोकितः । **देवि** गृह्यकोपलालनविहारिणि **दिष्ट्या** दैवानुग्रहेण **वर्धसे** संपन्नमनोरथा भवसि । अथवा दिष्ट्या भागधेयेन वर्धसे समृद्धा भवसीति । यथा विद्याज्ञानादिभिरुत्कृष्टं प्रति विद्यया वर्धसे ज्ञानेन वर्धसे इत्यादि । उक्तमर्थमुपपादयति—**येनेति** ॥ तव सः अयं पुत्रः मदमुचां वारणानां विजेता इत्यन्वयः । **तव** अक्षीणभाग्यविभवायाः । सोऽयमिति प्रत्यभिज्ञा । **मदमुचाम्** अप्रतिहतपराक्रमाणाम् **वारणानां** यूथपतीनाम् **विजेता** निराकर्ता । पर्याप्तबलो जात इत्यर्थः । तच्छब्दाकांक्षितमर्थमाह—**येनेति** ॥ हे सुतनु येन ते कर्णमूलात् लवलीपल्लवो व्याकृष्ट इति संबन्धः । तादात्विकस्याभरणाद्यनावृतस्य लावण्यातिशयस्यानुसंधानात् सुतनुशब्दप्रयोगः । **ते** येन केनापि सुश्लिष्टचतुरनेपथ्यायाः **कर्णमूलात्** पल्लवभङ्गपरिशोभितात् गण्डतलात् **लवलीपल्लवः** कर्णपूरीकृत इत्यर्थात् । **व्याकृष्टः** कबलीकर्तुमिति यावत् । कीदृशेनेत्यत्राह—**उद्गच्छद्बिसकिसलयेति** ॥ किंचिदुद्गतमृणालाङ्कुरवल्लोभनीयदन्तोद्गमेनेति यावत् । कथमेतद्विजयमात्रादितरवारणानां विजेतृत्वं संभाव्यत इत्यत्राह—**यदिति** ॥ कल्याणपदेन मध्यमवयोऽवस्थासमुचितं शरीरलावण्यं प्रतिद्विपविजयसामर्थ्यं च प्रतिपाद्यते । तथाच मातङ्गलीलायाम्—'मधुरुचिनखदन्तप्रेक्षणो नीलमेघच्छविररुणदृगन्तः पद्मकिञ्जल्कबिन्दुः । अपरगजविरोधी पांसुपाथोविहारैर्भवति च कटपूर्णः सुन्दरो वारणेन्द्रः ॥' इति । भाजनमाश्रयः । यतश्चायमेतादृशकल्याणभाजनं जातः ततस्त्वं दिष्ट्या वर्धस इति संबन्धः । अवियुक्त इदानीमयं दीर्घायुरनया सौम्यदर्शनया भवतु । **अवियुक्तः** अविरहितः **इदानीं** कथमपि निस्तीर्णायां विपदि **अनया** करिण्या **सौम्यदर्शनया** अनुरूपतमया । **कान्तानुवृत्तिचातुर्यमिति** ॥ कान्तानुवृत्तौ प्रियतमानुसरणे चातुर्यं वैदग्ध्यम् । अपिशब्देन दुरधिगमत्वं सूच्यते ।

शिक्षितं वत्सेन । तथाहि—

लीलोत्खातमृणालकाण्डकबलच्छेदेषु संपादिताः
पुष्यत्पुष्करवासितस्य पयसो गण्डूषसंक्रान्तयः ।
सेकः शीकरिणा करेण विहितः कामं विरामे पुन-
र्यत्स्नेहादनरालनालनलिनीपत्रातपत्रं धृतम् ॥ १६ ॥

सीता—भअवदि तमसे, अअं दाव ईरिसो । दे उण ण आणामि कुसलवा एत्तिएण कालेण कीरिसा विअ वड्ढन्दि ।

भगवति तमसे, अयं तावदीदृशः । तौ पुनर्न जानामि कुशलवावेतावता कालेन कीदृशाविव वर्धेते ।

---

**अर्धमिति** ॥ न पर्याप्तमित्यर्थः । **शिक्षितमिति** ॥ करणे निष्ठा । अपर्याप्ततामेवाह—**तथाहीति** ॥ **लीलोत्खातमृणालेति** ॥ लीलया सविलासमेवोत्खातानामुन्मूल्य गृहीतानां मृणालकाण्डकबलानां मृणालकाण्डानामेव कबलानां प्रणयिनीवदनसमर्पितानां छेदेषु अवसानेषु निगिरणानामन्तरालेष्वित्यर्थः । पयसः कबलदानानन्तरसमुचितस्य गण्डूषस्य संक्रान्तयः अर्धपीतनिष्ठ्यूतानां जलानामितरेतरविनिमया इत्यर्थः । **संपादिताः** कल्पिताः । कीदृशस्य पयसः इत्यत्राह—**पुष्यत्पुष्करवासितस्येति** ॥ पुष्यति विततीक्रियमाणे पुष्करे हस्ताग्रे वासितस्य निवेशितस्य परिपूर्य निवेशितस्य विधृतस्येत्यर्थः । पुष्यद्भिः पुष्करैः पद्मैः वासितस्येति वा । 'पुष्करं करिहस्ताग्रे वाद्यभाण्डमुखे जले । व्योम्नि खड्गफले पद्मे' इत्यमरः । काममित्यकामानुमतौ । अकामानुमतौ काममित्यमरः । ईदृशोपचारकरणात् कान्तानुवृत्तिचातुर्यस्य पूर्णतैवास्तु नाम तथापि प्रधानतमस्य कस्यचिदकरणाच्च मदीयं हृदयं नितरामावर्जयतीत्यर्थः । किं पुनरवशिष्टमित्यत्राह—**विराम इति** ॥ ननु नलिनीदलातपत्रधारणस्यैकस्यैव केवलमवशिष्टत्वात् प्रायेण शिक्षितमिति वक्तव्यम् तत्कथमर्धमित्युक्तमिति चेत् सत्यम् । कबलदानादीनां निजोपयोगशेषतया साधारण्यादन्यस्य च प्रणयिनीकठोरघर्मोपरोधप्रशमनैकनिबन्धनत्वादेकानेकयोर्गौरवेण साम्यमेवेत्यर्धमित्युक्तमिति बोद्धव्यम् । यथा खलु शरीरैकदेशस्यापि मुखस्य करचरणादीनां च मिथः संख्यया वैषम्येऽपि, 'मुखमर्धं शरीरस्य सर्वं वा मुखमुच्यते' इति गौरवेण साम्यान्मुखमात्रेऽवयवेऽर्धमित्युक्तिः । 'पुंस्यर्धोऽर्धं समेंऽशके' इत्यमरः । भगवति तमसे अयं तावदीदृशः, तौ पुनर्न जानामि कुशलवावेतावता कालेन कीदृशाविव वर्धेते । अयमित्यभिनीयोक्तिः । तावच्छब्दो वाक्यालंकारे । **ईदृशः** यौवनसमयसमुचितशरीरलावण्यः तदुचितचतुरचेष्टितश्चेत्यर्थः । **तौ** निरन्तरोपलालनसमुचितौ । पुनश्शब्दो विशेषे । **एतावता** इतः प्राचीनेन कालेन । **कीदृशौ** अशि-

**तमसा**—यादृशोऽसौ तादृशावेव ।

**सीता**—ईरिसी खु अहं मन्दभाइणी जाए ण केवलं णिट्ठिदो अज्जउत्तविरहो पुत्तविरहो वि ।

ईदृशी खल्वहं मन्दभागिनी यस्या न केवलं निष्ठित आर्यपुत्रविरहः, पुत्रविरहोऽपि ।

**तमसा**—भवितव्यतेयमीदृशी ।

**सीता**—किंवा मए पसूदाए जाए तारिसं वि मम पुत्ताणं ईसिकलिदविरलधवलदसणुज्जलं सलावण्णं अणुबद्धमुद्धतरलसिखण्डरंजिदविहसिदं मुहपुण्डरीअजुअलं ण चुम्बिअं अज्जउत्तेण ।

किं वा मया प्रसूतया यस्यास्तादृशमपि मम पुत्रयोरीषत्कलितविरलधवलदशनोज्ज्वलं सलावण्यमनुबद्धमुग्धतरलशिखण्डरञ्जितविहासितं मुखपुण्डरीकयुगलं न चुम्बितमार्यपुत्रेण ।

**तमसा**—अस्तु देवताप्रसादात् ।

**सीता**—भअवदि तमसे, इमिणा अवच्चसंसुमरणवुत्तंदेण उस्स-

---

तपीतादिपरिणामवशाद्यादृशाङ्गपरिपोषौ । इवशब्दो वाक्यालङ्कारे । **यादृशोऽसाविति** ॥ यथैवायं करिकलभक इत्यर्थः । **तादृशावेवेति** ॥ तथैव कुशलवावपीत्यर्थः । ईदृशी खल्वहं मन्दभागिनी यस्या न केवलं निष्ठित आर्यपुत्रविरहः पुत्रविरहोऽपि । ईदृशीति वक्ष्यमाणपरामर्शः । खलुर्निश्चये । निष्ठितो नितरां स्थितः । भवितव्यानामवश्यमेवानुभवितुं योग्यानामवस्थानां भावो **भवितव्यता** । **इयम्** इदनींतनी **ईदृशी** अनुभवैकगम्या । किं वा मया प्रसूतया । लभ्यत इति शेषः । न किंचिदपीत्यर्थः । एतदेवाह—**जाए इति** ॥ यस्यास्तादृशमपि मम पुत्रयोरीषत्कलितविरलधवलदशनोज्ज्वलं सलावण्यम् अनुबद्धमुग्धतरळशिखण्डरञ्जितविहसितं मुखपुण्डरीकयुगलं न चुम्बितमार्यपुत्रेण । **तादृशम्** उपमानचिन्तातिक्रान्तम् । अपिशब्दो विरोधं द्योतयन्मुखपुण्डरीकयुगलविषयमौत्सुक्यातिशयमवगमयति । चुम्बनयोग्यतामेवोपपादयति—**अनुबद्धेति** । अनुबद्धेन नितरां लग्नेन अनपनेयेन, मुग्धेन मनोज्ञेन, तरलेन चञ्चलेन, शिखण्डेन प्रथमकुन्तलनिकरेण आरञ्जितम् आभीक्ष्ण्येन रञ्जितं रूषितं विहसितं यस्मिन् तत् । अनुबद्धमुग्धतरलशिखण्डं चारञ्जितविहसितं चेति कर्मधारयो वा । 'काकपक्षः शिखण्डक' इत्यमरः । अस्त्विति प्रार्थनायाम् । तमसे अनेनापत्यसंस्मरणवृत्तान्तेनोच्छ्वसितप्रस्नुतस्तनी तयोश्च

सिदपण्हुदत्थणी ताणं अ पिदुणो संणिहाणेण खणमेत्तं संसारिणी संवुत्ताह्मि ।

भगवति तमसे, अनेनापत्यसंस्मरणवृत्तान्तेनोच्छ्वसितप्रस्नुतस्तनी तयोश्च पितुः संनिधानेन क्षणमात्रं संसारिणी संवृत्तास्मि ।

**तमसा**—किमत्रोच्यते । प्रसवः खलु प्रकर्षपर्यन्तः स्नेहस्य । परमं चैतदन्योन्यसंश्लेषकं पित्रोः ।

अन्तःकरणतत्त्वस्य दम्पत्योः स्नेहसंश्रयात् ।
आनन्दग्रन्थिरेकोऽयमपत्यमिति गीयते ॥ १७ ॥

**वासन्ती**—इतोऽपि देवः पश्यतु ।

---

पितुः संनिधानेन क्षणमात्रसंसारिणी संवृत्तास्मि । **अनेन** प्रसंगादुद्बुद्धेनापत्यस्मरणवृत्तान्तेन । 'वार्ता प्रवृत्तिर्वृत्तान्त' इत्यमरः । अपत्यसंस्मरणप्रवृत्त्या मनसः इत्यर्थात् । उच्छ्वसितौ पयोगर्भतया प्रोच्छूनौ प्रस्नुतौ जातक्षरणौ स्तनौ यस्याः सा । **तयोः** कुशलवयोः । चकारः समुच्चये । **क्षणमात्रं संसारिणीति** ॥ क्षणकालप्रतीतशोभनजन्मलाभवतीत्यर्थः । प्रशंसायां मत्वर्थीयः । अथवा संसारशब्देन विषयसुखं लक्ष्यते । तनयलालनादिसुखं हि संसारकार्यम् । चेतस्सम्मोहदायिताप्रकाशनं फलम् । उक्तमेवार्थमनुवदति—**किमिति** ॥ **अत्र** अस्मिन् विषये **उच्यते** कथ्यते । **प्रसवोऽपत्यम्** । खलुरवधारणे । **प्रकर्षपर्यन्त इति** ॥ प्रकर्षो वृद्धिः पर्यन्तोऽवधिः उत्कर्षसीमेति यावत् । न केवलमपत्यजननमुत्पन्नस्य प्रेम्णो वृद्धिहेतुः अपितु तत्संपादकमपीत्याह—**परममिति** ॥ **परमम्** अतिशयितम् । एतच्छब्दो वस्तुमात्रपरामर्शकः । **अन्योन्यसंश्लेषकम्** इतरेतरानुरञ्जकम् । अत्र लोकसंमतिमाह—**अन्तःकरणतत्त्वस्येति** ॥ दंपत्योः अन्तःकरणतत्त्वस्य एकः अयमानन्दग्रन्थिः अपत्यमिति गीयते । **दंपत्योः** स्त्रीपुंसयोः **एकः** साधारणः उभयोरपि समान इत्यर्थः । **अयं** शरीराद्बहिर्भूय दृष्टिगोचरीभूतः **आनन्दग्रन्थिः** आनन्दस्य ग्रन्थिः घनीभूतः कोऽपि विवर्तः । अपत्यशब्देन स्त्रीत्वादिव्यक्तिभेदं नापेक्षत इति व्यज्यते । इतिशब्दः प्रकारे । **गीयते** निखिलजनैरपीति शेषः । अत्र हेतुमाह—**स्नेहसंश्रयादिति** ॥ स्नेहस्य संश्रयात् सम्यक् श्रयणात् । अनतिस्निग्धयोरपि स्त्रीपुंसयोरपत्यजननानन्तरमवश्यमेव हृदयैक्यसंपादकचित्तविक्रियाजननादित्यर्थः । **इतोऽपीति** ॥ न केवलं करिकलभ एव तथाविधः कश्चिदन्योऽपि दृश्यत इति भावः । हेतुमाह—**अतुलितेति** ॥ स एव शिखण्डी स्वयमतुलितपदताण्डवोत्सवान्ते कदम्बे उत्थितः नदति इत्यन्वयः । **स एव**

अतुलितपदताण्डवोत्सवान्ते
स्वयमचिरोद्गतलोलमुग्धबर्हः ।
मणिमुकुट इवोत्थितः कदम्बे
नदति स एव वधूसखः शिखण्डी ॥ १८ ॥

सीता—(सकौतुकस्नेहास्रम् ।) एसो सो । एष सः ।

रामः—मोदस्व वत्स, वयमद्य वर्धामहे ।

सीता—एव्वं होदु । एवं भवतु ।

रामः—

भ्रमिषु कृतपुटान्तर्मण्डलावृत्ति चक्षुः
प्रचलितचतुरभ्रूताण्डवैर्मण्डयन्त्या ।
करकिसलयतालैर्मुग्धया नर्त्यमानं
सुतमिव मनसा त्वां वत्सलेन स्मरामि ॥ १९ ॥

---

सीतापरिवर्धित एव । शिखण्डीत्यनेन तारुण्ययोगो व्यज्यते । **स्वयमिति** ॥ सीताकरतालदानादिकमन्तरेणैवेत्यर्थः । **अतुलितपदताण्डवोत्सवान्ते** अतुलितस्य निरुपमस्य पदताण्डवस्यैवोत्सवस्यान्ते पर्यवसाने । सीतापरिशिक्षितत्वादेवातुलत्वम् । उत्सवशब्देन चित्तानन्दप्रवर्तनीयत्वमवलोकयितृजनप्रीतिकारित्वं च व्यज्यते । **उत्थितः** उत्पतितः । भूतलादिति शेषः । **कदम्बे** कदम्बतरौ **नदति** अविच्छेदेन केकाविरावं करोति । पदताण्डवलालित्यं प्रतिपादयति—**अचिरोद्गतलोलमुग्धबर्ह इति** ॥ तादात्विकं नयनहारितातिशयमाह—**मणिमुकुट इवेति** ॥ अयमपि तारुण्ययोगसमुचितसहाय इत्याह—**वधूसख इति** ॥ एष सः । **मोदस्व वत्सेनेति** ॥ एतावदेव कल्याणमिदानीमवशिष्टमिति भावः । एवं भवतु । अथ पूर्ववृत्तमनुसंधत्ते—**भ्रमिष्विति** ॥ त्वां स्मरामि इति संबन्धः । **त्वाम्** अतिक्रान्तशिशुभावम् **स्मरामि** प्रत्यभिजानामि । अत्र हेतुमाह—**वत्सलेन मनसेति** ॥ वात्सल्यातिशये कारणमाह—**मुग्धया नर्त्यमानमिति** ॥ मुग्धया सीतया । अत्रोत्कृष्टगुणानुसंधानस्य विशेष्यार्थप्रतीतिहेतुत्वात् सीतयेति गम्यते । मौग्ध्यं च महिलागुणेषूत्कृष्टतमम् । तदुक्तं कविवल्लभेन—'अपिनद्धव्यमालीभिरभर्तव्यसुताङ्कैः । हैममाभरणं लज्जा माणिक्यं तत्र मुग्धता ॥' इति ।

---

१. अनुदिवसमवर्धयत्प्रिया ते यमचिरनिर्गतमुग्धलोलबर्हम् । मणिमुकुट इवोच्छिखः कदम्बे नदति स एष वधूसखः शिखण्डी ॥ २. चटुल

हन्त हन्त, तिर्यञ्चोऽपि परिचयमनुरुध्यन्ते ।

कतिपयकुसुमोद्गमः कदम्बः
प्रियतमया परिवर्धितोऽयमासीत् ।

सीता—(सास्रम् ।) सुट्ठु पच्चहिजाणिदं अज्जउत्तेण ।

सुष्ठु प्रत्यभिज्ञातमार्यपुत्रेण ।

रामः—

स्मरति गिरिमयूर एष देव्याः
स्वजन इवात्र यतः प्रमोदमेति ॥ २० ॥

---

किंच विशेषणादेव विशेष्यप्रतिपत्तौ न तत्प्रयोगः कार्यः । तदुक्तं वामनेन—'विशेषणमात्रप्रयोगो विशेष्यप्रतिपत्तौ' इति । **नर्त्यमानं** नृत्तकलामभ्यास्यमानम् । कथमित्यत्राह—**करकिसलयतालैरि**ति ॥ ईदृशेऽपि कर्मणि किमु सीतायाश्चातुर्यमित्यत्राह—**भ्रमिष्वि**ति ॥ नृत्तकलासमुचितेषु भ्रमणकर्मस्वित्यर्थः । निमित्ते सप्तमी । **प्रचलितचतुरभ्रूताण्डवैः** प्रचलितयोः तरलितयोः चतुरयोः विलासप्रकटनसमर्थयोः भ्रुवोः चिल्लीलतिकयोः ताण्डवैः लास्यविशेषैः **चक्षुः** लोचनं **मण्डयन्त्या** प्रसाधयन्त्या । कीदृग्भूतं चक्षुरित्यत्राह—**कृतपुटान्तर्मण्डलावृत्ती**ति ॥ कृता विरचिता पुटान्तः उदरमध्ये मण्डलावृत्तिः मण्डलाकारेणावृत्तिः आभीक्ष्ण्येन वृत्तिर्वर्तनं यस्य तत् । एवं वा—कृतपुटं विस्तारितोदरं यथा तथाऽन्तर्मध्ये मण्डलाकारेणावृत्तिर्यस्येति । ननु शिखण्डिनामुपदेशं विनैव स्वभावत एव नर्तनचातुर्यसंभवात् किमिति तथा नाम प्रयतितव्यमित्यत्राह—**सुतमिवे**ति ॥ वात्सल्यातिशयो न कालापेक्षीत्यर्थः । एवं सीतापरिवर्धितं विलासमयूरं प्रत्यभिज्ञाय तत्संबन्धवशात् कदम्बतरुमपि प्रत्यभिजानाति—**हन्ते**ति ॥ हर्षातिशयवशात् द्विर्वचनम् । **तिर्यञ्चोऽपि** जन्तुमात्रधर्मवेदिनोऽपि **परिचयं** चिरसंदर्शनप्रीतिम् **अनुरुध्यन्ते** अनुसरन्ति । कुत इत्यत्राह—**कतिपयकुसुमोद्गम इ**ति ॥ अयं कदम्बः प्रियतमया परिवर्धित आसीद् इत्यन्वयः । अयमित्यभिनीयोक्तिः । **प्रियतमया** सीतया **परिवर्धितः** बीजप्ररोहणादारभ्य दोहलार्पणसलिलसेचनादिना सुतानिर्विशेषमेव भृत इत्यर्थः । अयमप्यतिक्रान्तबालभाव इत्याह—**कतिपयकुसुमोद्गम इ**ति ॥ सुष्ठु प्रत्यभिज्ञातमार्यपुत्रेण । उक्तमेवार्थमुपपादयति—**स्मरती**ति ॥ एष मयूरः देव्याः स्मरति इति संबन्धः । **एषः** कदम्बशाखानिषण्णः गिरिमयूरः असुलभदेवीपरिलाळनः **देव्याः** छेकोपलाळनविहारिण्याः । अधीगर्थदयेशां कर्मणीति षष्ठी । **स्मरति** उत्कण्ठते । स्मरतेराध्यानार्थत्वादुत्कण्ठापूर्वकं स्मरतीत्यर्थः । कुत इत्यत्राह—**अत्रे**ति ॥ अस्मिन्

**वासन्ती**—अत्र तावदासनपरिग्रहं करोतु देवः । (राम उपविशति ।)

**वासन्ती**—

एतत्तदेव कदलीवनमध्यवर्ति
कान्तासखस्य शयनीयशिलातलं ते ।
अत्र स्थिता तृणमदाद्बहुशो यदेभ्यः
सीता ततो हरिणकैर्न विमुच्यते स्म ॥ २१ ॥

**रामः**—इदमशक्यं द्रष्टुम् । (इत्यन्यतो रुदन्नुपविशति ।)

**सीता**—सहि वासन्ति, किं तुए किदं अज्जउत्तस्स एदं दंसअन्तीए । हद्धी हद्धी । सो एव्व अज्जउत्तो । तं एव्व पञ्चवडीवणम् । सा एव्व पिअसही वासन्दी । दे एव्व विविहविस्सम्भसक्खिणो गोदावरीकाणणुद्देसा । दे एव्व पुत्तणिव्विसेसा मिअपक्खिपाअवा । मह उण मन्दभाइणीए दीसन्तं वि सव्वं एदं णत्थित्ति ईरिसो जीवलोअपरिवत्तो ।

---

कदम्बतरावित्यर्थः । **यतः** यस्मात् **प्रमोदं** सौहृदवृत्तिम् । कीदृशीमित्यत्राह—**स्वजन इवेति** ॥ अथ सीतावृत्तान्तकथनाय पीठिकां प्रतिष्ठापयति—**अत्रेति** ॥ तावच्छब्दोऽवधारणे । **आसनपरिग्रहं** उपवेशनादरम् । भावे ल्युट् । को वा पुनरत्र विशेष इत्यत्राह—**एतदिति** ॥ कान्तासखस्य ते तत् शयनीयशिलातलम् एतत् इत्यन्वयः । **कान्तासखस्य** प्रियतमासहायस्य **ते** वनाविहरणसमुत्सुकस्य **तत् शयनीयशिलातलं** तथाभूतं सीताविस्रम्भसाक्षिभूतं शयनीयत्वेन परिगृहीतं शिलातलम् **एतत्** पुरतो दृश्यते । कथं तदेवेदमित्यवगम्यते इत्यत्राह—**यदिति** ॥ **हरिणकैः** वनवासपरिचितैः । अनुकम्पायां कः । **न विमुच्यते** इदानीमपि परिवार्यते । हेतुमाह—**अत्रेति** ॥ सीता अत्र स्थिता एभ्यः बहुशः तृणमदात् यत् ततो न विमुच्यत इति संबन्धः । सखि वासन्ति किं त्वया कृतमार्यपुत्रस्यैतद्दर्शयन्त्या । हा धिक् । स एवार्यपुत्रः । तदेव पञ्चवटीवनम् । सैव प्रियसखी वासन्ती । त एव विविधविस्रम्भसाक्षिणो गोदावरीकाननोद्देशाः । त एव पुत्रनिर्विशेषा मृगपक्षिपादपाः । मम पुनर्मन्दभागिन्या दृश्यमानमपि सर्वं नास्तीति ईदृशो जीवलोकपरिवर्तः । **किं त्वया कृतमिति** ॥ विनोदनबुद्ध्या तद्वैपरीत्यमेवानुष्ठितमिति किंशब्देन प्रकाश्यते । **एतत्** शयनीयशिलातलं **दर्शयन्त्या** सोपपत्तिकं बोधयन्त्या ।

---

१. नीरन्ध्रबालकदली २. द्रुमगोचरेभ्यः

सखि वासन्ति, किं त्वया कृतमार्यपुत्रस्य एतद्दर्शयन्त्या । हा धिक् हा धिक् । स एवार्यपुत्रः । तदेव पञ्चवटीवनम् । सैव प्रियसखी वासन्ती । त एव विविधविस्रम्भसाक्षिणो गोदावरीकाननोद्देशाः । त एव पुत्रनिर्विशेषा मृगपक्षिपादपाः । मम पुनर्मन्दभागिन्या दृश्यमानमपि सर्वमेतन्नास्तीति ईदृशो जीवलोकपरिवर्तः ।

वासन्ती—सखि सीते, कथं न पश्यसि रामस्यावस्थाम् ।

नवकुवलयस्निग्धैरङ्गैर्ददौ नयनोत्सवं
सततमपि ते स्वेच्छादृश्यो नवो नव एव यः ।
विकलकरणः पाण्डुश्यामः शुचा परिदुर्बलः
कथमपि स इत्युन्नेतव्यस्तथापि दृशोः प्रियः ॥ २२ ॥

---

अशक्यप्रतिकर्तव्येऽस्मिन्दारुणे दशाविपाके किमिति त्वामहमुपालभ इति सविषादमह—**हा धिगिति** ॥ विषादातिरेकवशात् द्विर्वचनम् । पुनश्शब्दो भेदे । **सर्वमेतत्** पञ्चवटीगोदावरीकाननादिकं **नास्तीति** शून्यतयैव । इतिशब्दः प्रकारे । **ईदृशः** अनुभवमात्रगम्यः **जीवलोकपरिवर्तः** जीवलोकस्य परिवर्तः परिणामः विनिमय इत्यर्थः । अथ शयनीयशिलातलसंदर्शनसमुद्भूतं रामभद्रस्य शोकक्षोभमभिवीक्ष्य परित्यागव्यलीककलुषितहृदया प्रियसखीं पुरो भुवि परिकल्प्य वासन्ती सकरुणं प्रलपति—**सखीति** ॥ कथमिति संभ्रमे । **न पश्यसीति** ॥ न चेदानीमेवमौदासीन्यमवलम्बनीयमिति भावः । **रामस्य** त्वन्मयीभूतचित्तविलसितस्य **अवस्थां** विषमदशाम् । कीदृशी सेत्यत्राह—**नवेति** ॥ यः ते नवकुवलयस्निग्धैरङ्गैः नयनोत्सवं ददौ सततमपि स्वेच्छादृश्यः नवो नव एव च सः विकलकरणः पाण्डुश्यामः शुचा परिदुर्बलः कथमपि स इत्युन्नेतव्यः इत्यन्वयः । यच्छब्देन तत्तादृशानिखिलगुणवैशिष्ट्यमनूद्यते । ते पितृनिलयवर्तिन्याः **नयनोत्सवं** परिचितदर्शनजां प्रीतिं **ददौ** आपादयति स्म । स्वयंवरजाते प्रथमदर्शने इत्यर्थः । **सततमपि** परिणयनादारभ्य पुनः सहावस्थाने सर्वदाऽपि **स्वेच्छादृश्यः** स्वच्छन्ददर्शनार्हः । **नवो नव इति** ॥ दर्शनसमये सौन्दर्यादिष्वेकतरेण गुणेनेन्द्रियसंमोहसंभवादन्येषां च तदानीमनवधारणीयतया प्रतिदर्शनं नवत्वमापन्न इत्यर्थः । तादृशं हि स्वरूपं रमणीयत्वस्य यत् प्रथमदर्शने दृष्टपूर्वत्वं पश्चात् प्रतिदर्शनं नवत्वं चापद्यते । तदुक्तं कविवल्लभेन—'प्राग्दृष्टपूर्व इव तत्प्रथमावलोके पुष्णाति यत् किमपि

---

१. नवकुवलयस्निग्धैरङ्गैर्ददन्नयनोत्सवं सततमपि नः स्वेच्छादृश्यो नवो नव एव सः । विकलकरणः पाण्डुच्छायः शुचा परिदुर्बलः—

**सीता**—पेक्खामि सहि, पेक्खामि । प्रेक्षे सखि प्रेक्षे ।

**तमसा**—पश्य प्रियं भूयः ।

**सीता**—हा देव्व एसो मए विणा अहंवि एदेण विणेत्ति केण संभाविदं आसि । ता मुहुत्तंवि जम्मन्तरादो विअ तुलग्गलद्धदंसणं बाहसलिलन्तरेसु पेक्खामि दाव वच्छलं अज्जउत्तम् ।

हा दैव, एष मया विना अहमप्येतेन विनेति केन संभावितमासीत् । तन्मुहूर्तमपि जन्मान्तरादिव तुलाग्रलब्धदर्शनं बाष्पसलिलान्तरेषु पश्यामि तावद्वत्सलमार्यपुत्रम् ।

(इति पश्यन्ती स्थिता ।)

**तमसा**—(परिष्वज्य सास्रम् ।)

विलुलितमति पूरैर्बाष्पमानन्दशोक-
प्रभवमवसृजन्ती तृष्णयोत्तानदीर्घा ।
स्नपयति हृदयेशं स्नेहनिष्यन्दिनी ते
धवलमधुरमुग्धा दुग्धकुल्येव दृष्टिः ॥ २३ ॥

सौहृदमीक्षणानाम् । पश्चान्नवो नव इवाभ्रगतोऽपि गाढमुत्कण्ठयत्यविरतं मधुरः पदार्थः ॥' इति । 'क्षणे क्षणे यन्नवतामुपैति तदेव रूपं रमणीयतायाः' इति च । एवकारेण प्रथमदर्शनजा प्रीतिर्व्यावर्त्यते । यच्छब्दबलात्तच्छब्दः सिध्यति । **विकलकरण इति** ॥ विकलं विषयग्रहणासमर्थं करणमिन्द्रियं यस्य सः । विकलकरणत्वं चित्तासङ्गस्यानुभावः । पाण्डुत्वं तु संकल्पस्य । श्यामत्वं पुनर्निद्राच्छेदस्य । **शुचा** पश्चात्तापव्यथया **परिदुर्बलो** नितरां दुर्बलः । **कथमपि स इत्युन्नेतव्य इति** ॥ अतिकृच्छ्रेणैव दृष्टपूर्व इत्युत्प्रेक्षितुं शक्य इत्यर्थः । न खल्वेतादृशावस्थासंदर्शनादस्या जीवितमोचनादिसाहसं संभवेदिति सानुनयमाह—**तथापीति** ॥ एतादृशदशाग्रस्तशरीरोऽपीत्यर्थः । **दृशोः** द्रष्टॄणां सर्वेषामपीत्यर्थात् । **प्रियः** आह्लादकारी । प्रेक्षे । एष मया विना अहमप्येतेन विनेति केन संभावितमासीत् । तन्मुहूर्तमपि जन्मान्तरादिव तुलाग्रलब्धदर्शनं बाष्पसलिलान्तरेषु पश्यामि तावत् वत्सलमार्यपुत्रम् । **जन्मान्तरादिति** ॥ ल्यब्लोपे पञ्चमी । जन्मान्तरं प्राप्येत्यर्थः । **विलुलितमिति** ॥ ते दृष्टिः हृदयेशं स्नपयति इति संबन्धः । **ते** दयितदशादर्शनकातरमनसः **दृष्टिः** लोचनम् **हृदयेशं** निजप्राणनाथम् **स्नपयति** शिशिरयति । दृष्टेः शिशिरीकरणक्षमतामुपमानेन साधयति—

१. पक्ष्मलोत्तानदीर्घा

वासन्ती—

ददतु तरवः पुष्पैरर्घ्यं फलैश्च मधुश्च्युतः
स्फुटितकमलामोदप्रायाः प्रवान्तु वनानिलाः ।
कलमविरलं रज्यत्कण्ठाः क्वणन्तु शकुन्तयः
पुनरिदमयं देवो रामः स्वयं वनमागतः ॥ २४ ॥

रामः—एहि सखि वासन्ति, नन्विह स्थीयताम् ।

वासन्ती—(उपविश्य सास्रम् ।) महाराज, अपि कुशलं कुमार-लक्ष्मणस्य ।

रामः—(अनाकर्णनमभिनीय)

करकमलवितीर्णैरम्बुनीवारशष्पै-
स्तरुशकुनिकुरङ्गान्मैथिली यानपुष्यत् ।

---

दुग्धकुल्येवेति ॥ अत्र साधारणधर्मानाह—विलुलितमित्यादिना ॥ पूरैः प्रसरणवेगैः अति नितरां विलुलितं तरलितम् आनन्दशोकप्रभवं आनन्दमिश्राच्छोकात् प्रभवो यस्य तम् बाष्पं नयनसलिलम् अवसृजन्ती जनयन्ती । अन्यत्र शीतोष्णप्रभवं वारामुपरि परिप्लवमानं बाष्पाख्यं धूमसदृशं वस्तु । बाष्पोऽश्रुण्यम्बुधूमे चेति वैजयन्ती । तृष्णयोत्तानदीर्घा तृष्णया दर्शनातृप्तिहेतुभूतया उत्ताना क्रमोन्नता दीर्घा आयामवती । कुल्याप्येवंभूता । स्नेहनिष्यन्दिनी स्नेहाख्यां चित्तविक्रियां प्रकटयन्ती । अन्यत्र घृतनिष्य-न्दिनी । धवलमधुरमुग्धा धवला शुभ्रोदरा मधुरा मनोहरा मुग्धा सौम्या । दुग्धकुल्यापि एतादृशी । अथ स्वकीयवचनेन विनिर्भिन्नं रामभद्रस्य शोकक्षो-भमभिवीक्ष्य तत्प्रतिकारसमर्थं किमप्यनालोचयन्ती वासन्ती निजाधिराज्यसदृशं वृक्षादीन् प्रत्यनुशास्ति—ददत्विति ॥ तरवः अर्घ्यं ददतु इति संबन्धः । अर्घ्योपकरणसामग्रीमुपपादयति—पुष्पैः फलैश्चेति ॥ मधुमिश्रतामप्युपपाद-यति—मधुश्च्युत इति ॥ वनानिला इत्यनेन शैत्यमान्द्ये प्रतिपादिते । स्फुटितकमलामोदप्रायाः भूयिष्ठारविन्दपरिमलवाहिनः । शकुन्तयः अविरलं क्वणन्तु । कीदृशा इत्यत्राह—रज्यत्कण्ठा इति ॥ मधुरस्वरा इत्यर्थः । किमर्थमेवमनुशास्ति इत्यत्राह—पुनरिति ॥ पुनःशब्द आवृत्तौ । अयमित्यभिनीयोक्तिः । इदम् अस्मदीयम् । नन्वित्यनुनये । इह ननु शिलात-लसमीप इत्यर्थः । महाराजः लोकानुरञ्जनैकपरः । अपिशब्दः प्रश्ने । कुशलं शरीरादिष्वनामयम् । कुमारलक्ष्मणस्य त्वदाज्ञानुवर्तिनः । करकमल-वितीर्णैरिति ॥ मैथिली करकमलवितीर्णैः अम्बुनीवारशष्पैः यान् तरुशकुनि-

भवति मम विकारस्तेषु दृष्टेषु कोऽपि
द्रव इव हृदयस्य प्रस्रवोद्भेदयोग्यः ॥ २५ ॥

वासन्ती—महाराज, ननु कुशलं पृच्छामि कुमारलक्ष्मणस्येति।

रामः—(आत्मगतम्।) अये, महाराजेति निष्प्रणयमामन्त्रणपदम्। सौमित्रिमात्रके बाष्पस्खलिताक्षरः कुशलप्रश्नः। तथा मन्ये विदितसीतावृत्तान्तेयमिति। (प्रकाशम्।) आम्, कुशलं कुमारलक्ष्मणस्य।

वासन्ती—(रुदती) अयि देव, किमिति दारुणः खल्वसि।

सीता—सहि वासन्ति, किं ति एव्वंवादिणी। पूआरुहो खु सव्वस्स अज्जउत्तो विसेसदो मह सहीए वासन्तीए।

सखि वासन्ति, किमित्येमवंवादिनी। पूजार्हः खलु सर्वस्यार्यपुत्रो विशेषतो मम सख्या वासन्त्याः।

वासन्ती—

त्वं जीवितं त्वमसि मे हृदयं द्वितीयं
त्वं कौमुदी नयनयोरमृतं त्वमङ्गे।
इत्यादिभिः प्रियशतैरनुबध्य मुग्धां
तामेव शान्तमथवा किमिहोत्तरेण ॥ २६ ॥

(इति मुह्यति।)

---

कुरङ्गान् अपुष्यत् तेषु दृष्टेषु मम हृदयस्य कोऽपि विकारः भवति इत्यन्वयः। अम्बुभिः तरून् नीवारैः शकुनीन् शष्पैः कुरङ्गानिति योज्यम्। **अपुष्यत्** परिपोषं नीतवती। **कोऽपि** अवाग्विषयः। कीदृशः पुनरनुभव इत्यत्राह—**हृदयस्य द्रव इवेति**॥ द्रवीभावः कियानित्यत्राह—**प्रस्रवोद्भेदयोग्य इति**॥ यावता वा हृदयं बहिर्निर्गलतीव तावान् इत्यर्थः। अत्र यथासंख्यमलंकारः उत्प्रेक्षा च। अनयोश्चैकवाचकानुप्रवेशात् संकरः। तदुक्तम्—'यथासंख्यं क्रमेणैव क्रमिकाणां समन्वयः' इति॥ अये इति विषादे। **निष्प्रणयम्** अपास्तसौहृदम् **आमन्त्रणपदं** संबोधनपदम्। आभिमुख्यकरणार्थं प्रयुक्तस्य पदस्य काका न किंचिदपि सौहृदमभिव्यज्यत इत्यर्थः। आमेत्यनुवादे। अयीतीष्टाह्वाने। **देव** प्रशंसनीयशील। किंशब्दः प्रश्ने। इतिशब्दो मनने हेतौ वा। कीदृशं कार्यं निरूप्येत्यर्थः। **दारुणः** क्रूरचेष्टितः। खलुरवधारणे। सीतामुद्दिश्येति शेषः। सखि वासन्ति किमित्येवंवादिनी। पूजार्हः खलु सर्वस्यार्यपुत्रः विशेषतो मम सख्या वासन्त्याः। किं वा पुनः क्रौर्यमाचरितामित्यत्राह—

**तमसा**—स्थाने वाक्यनिवृत्तिर्मोहश्च ।

**रामः**—सखि, समाश्वासिहि समाश्वसिहि ।

**वासन्ती**—(समाश्वस्य) तत्किमिदमकार्यमनुष्ठितं देवेन ।

**सीता**—सहि वासन्दि, विरम विरम ।

सखि वासन्ति, विरम विरम ।

**रामः**—लोको न मृष्यत इति ।

**वासन्ती**—तत् कस्य हेतोः ।

**रामः**—स एव जानाति किमपि ।

**तमसा**—चिरादुपलम्भः ।

**वासन्ती**—

अयि कठोर यशः किल ते प्रियं
किमयशो ननु घोरमतः परम् ।

---

**त्वमिति** ॥ अत्र शरीरस्थितिहेतुत्वादिसाधर्म्यात्सीतायां जीवितमित्यध्यवसायः ।
आप्ततमत्वादिना च हृदयमिति । नयनाह्लादकत्वादेश्च कौमुदीति । संजीवनत्वा-
देश्चामृतमिति । **इत्यादिभिः** एवंविधैः **प्रियशतैः** प्रियाणां मनोनन्दनानां
शतैः असंख्यातैः श्लाघावचनैरित्यर्थः । उपचरणभेदैरिति यावत् । **मुग्धां**
अविदितकपटाम् **अनुबध्य** विह्वलीकृत्य स्वविधेयामापाद्येति यावत् । **तामेव**
तथा विधेयीकृतामेव । **शान्तमिति** ॥ यद्यपि शश्वदेव विश्वहितचिन्तना-
दस्मादृशीनामेनस्संपर्कराहित्यं तथापि यत्पातकं त्वया कृतस्य पातकस्य पाप-
कर्मणो मनसि संनिधानादुपजातं तच्छममुपयात्वित्यर्थः । एतादृशपातकानाद-
रेणैव कथनेन किं प्रयोजनमित्याह—**अथवेति** ॥ किंशब्दः क्षेपे । **उत्तरेण**
शेषकथनेन । अवक्ष्यमाणविषय आक्षेपोऽलंकारः रूपकं च । अनयोश्चैकवा-
चकानुप्रवेशात् संकरः । तदुक्तम्—'निषेधो वक्तुमिष्टस्य यो विशेषाभिधित्सया ।
वक्ष्यमाणोक्तविषयः स आक्षेपो द्विधा मतः ॥' इति । स्थान इत्यव्ययं
युक्तमित्यर्थे । **वाक्यनिवृत्तिः** वाक्यस्य निवृत्तिः मध्य एव विरतिः ।
**तत्** तस्मात् **किं** किमर्थम् **इदम्** धर्मदारपरित्यजनम् **अकार्यं** अननु-
ष्ठेयम् **अनुष्ठितं** विधेयबुद्ध्या कृतम् । सखि वासन्ति विरम । **लोको**
जनः । **न मृष्यते** न क्षमते । सीतामित्यर्थात् । इतिशब्दो हेतौ । **तत्** लोका-
मर्षणम् । **स एव** लोक एव । **चिरादुपलम्भ इति** ॥ रावणापहृतायाः
सीतायाः चिरेण लाभो लोकामर्षणे कारणमित्यर्थः । लोकाराधनपरतया कृतमिदं

किमभवद्विपिने हरिणीदृशः
कथय नाथ कथं बत मन्यसे ॥ २७ ॥

सीता—सहि वासन्दि, तुमं एव्व दारुणा कठोरा अ। जा पलित्तं पलीवेसि।

सखि वासन्ति, त्वमेव दारुणा कठोरा च। या प्रदीप्तं प्रदीपयसि।

तमसा—प्रणय एवं व्यवहरति शोकश्च।

रामः—सखि, किमत्र मन्तव्यम्।

त्रस्तैकहायनकुरङ्गविलोलदृष्टे-
स्तस्याः परिस्फुरितगर्भभरालसायाः।
ज्योत्स्नामयीव मृदुमुग्धमृणालकल्पा
क्रव्याद्भिरङ्गलतिका नियतं प्रलुप्ता ॥ २८ ॥

---

सीतापरित्यजनं वैपरीत्यमेव तस्य प्रयोजयेदित्याह—**अयीति** ॥ **कठोर** कठिनहृदय **ते** परित्यक्तप्रियतमस्य **यशः** आविद्वदङ्गनाबालं निजचरितप्रशंसनं **प्रियम्** अभीष्टम्। किलशब्दोऽलीके। ईप्सितवैपरीत्यमेवोपस्थितामित्यर्थः। तदेव प्रतिपादयति—**किमिति** ॥ **किं** कीदृशम् **अयशः** दुर्यशः **अतः** अस्मात् धर्मदारपरित्यागात् **परम्** उपरि **घोरं** कष्टतरम्। नन्विति प्रश्ने। अस्ति चेत् कथनीयम्। नास्त्येवेत्यर्थः। नन्वतिक्रान्तानुतापेन किं प्रयोजनं सा पुनरिदानीं किमु जीवतीति ज्ञातव्यमित्यत्राह—**किमिति** ॥ विपिने परित्यजनानन्तरमिति शेषः। **अभवत्** जातम्। यद्यप्युपेक्षिते विषये तवानादरः तथापि मदपेक्षया वक्तव्यमेवेत्याह—**कथयेति** ॥ कथमिति प्रश्ने क्षेपे वा। बतेति खेदे। सखि वासन्ति त्वमेव दारुणा कठोरा च या प्रदीप्तं प्रदीपयसि। पूर्वमेव शोकविह्वलं पुनरेव विह्वलयसीत्यर्थः। **प्रणय एवं व्यवहरतीति** ॥ प्रणयवशादियमेवं वदतीत्यर्थः। प्रणयशब्देनेह तद्वती लक्ष्यते। विवेकराहित्यप्रकाशनं फलम्। किमिति प्रश्ने। **अत्र** अस्मिन् वस्तुनि **मन्तव्यं** ज्ञातव्यम्। विगतपरित्राणे हि कानने परित्यक्ता अतः प्रणष्टैवेयमिति संभावयामीत्यर्थः। संभावनाप्रकारमेव कथयति—**त्रस्तेति** ॥ तस्याः अङ्गलतिका **क्रव्याद्भिः** व्याघ्रादिभिः **प्रलुप्ता** नाशिता भक्षितेति यावत्। **नियतं** निश्चितम्। ननु चकितहृदया वन्यसत्त्वाः कथमेनां दृष्ट्वा समीपमुपसरेयुरित्यत्राह—**त्रस्तैकहायनकुरङ्गविलोलदृष्टेरिति** ॥ ननु तदानीं यस्य कस्यापि प्रतीकारोपायस्य संभवात् कथमस्या दुष्टसत्त्वाभिभव इत्यत्राह—**परिस्फु-**

सीता—अज्जउत्त, धरामि एसा धरामि ।

आर्यपुत्र, ध्रिये एषा ध्रिये ।

रामः—हा प्रिये जानकि, कासि ।

सीता—हद्धी अज्जउत्तोवि पमुक्ककण्ठं रुण्णो ।

हा धिक् आर्यपुत्रोऽपि प्रमुक्तकण्ठं रुदितः ।

तमसा—वत्से, सांप्रतमेतत् । कर्तव्यानि खलु दुःखितैर्दुःखनिर्धारणानि ।

पूरोत्पीडे तटाकस्य परीवाहः प्रतिक्रिया ।
शोकक्षोभे च हृदयं प्रलापैरेव धार्यते ॥ २९ ॥

विशेषतो रामभद्रस्य, यस्य बहुतरप्रकारकष्टो जीवलोकः ।

---

रितगर्भभरालसाया इति ॥ परिस्फुरितेन चालितेन गर्भभरेणालसाया इत्यर्थः । किमुतास्यामामिषलालसानामत्यादरो जायेत इत्यत्राह—ज्योत्स्नामयीवेति ॥ अतिमृदुलामेनां दृष्ट्वामिषान्तराणि नूनं परित्यजेयुरित्यर्थः । किमितरामिषेभ्यः एतदङ्गलतिका एषां स्वदेतेत्यत्राह—मृदुमुग्धमृणालकल्पेति ॥ अत्राङ्गलतिकाप्रलोपे त्रस्तैकहायनेत्यादीनां पदार्थानां हेतुत्वेन विवक्षणात् काव्यलिङ्गमलंकारः । तेन च समविपर्ययात्मा विषमालंकारो ध्वन्यते ॥ आर्यपुत्र एषा ध्रिये । एषा दैवोपहता ध्रिये अवतिष्ठे । प्राकृते हि लिङ्गवचनादीनां व्यत्ययादत्र परस्मैपदम् । एषेत्यत्राहमित्यध्याहारादुत्तमपुरुषः । हा धिक् आर्यपुत्रोऽपि प्रमुक्तकण्ठं रुदितः । सांप्रतमित्यव्ययम् । युक्तमित्यर्थः । एतत् रोदनम् । युक्ततामेव प्रतिपादयति—कर्तव्यानीति ॥ ननु दुःखानि रोदनेन किं प्रतिकर्तव्यानीत्यत्राह—पूरोत्पीड इति ॥ पूरो जलवृद्धिः उत्पीडः कूलंकषता अमानमिति यावत् । तटाको रोधस्सेतुबन्ध इति यावत् । परीवाहो जलप्रस्रावणम् । 'जलोच्छ्वासाः परीवाहा' इत्यमरः । सेतुस्थिरीकरणार्थो व्यापारः प्रतिक्रिया ॥ शोकक्षोभे शोकवेगे हृदयं मनः प्रलापैः कर्तृभिः धार्यते स्थिरीक्रियते । 'धृङ् अवस्थाने' इत्यस्माण्णिचि कर्मणि यक् । अत्र तडाकहृदययोः पूरोत्पीडशोकक्षोभयोः परिवाहप्रलापयोश्च बिम्बप्रतिबिम्बभावकरणाद्दृष्टान्तः ॥ विशेषत इति ॥ शोकक्षोभे च हृदयं प्रलापैरेव धार्यत इति अनुषज्यते । को वा पुनरस्य विशेष इत्यत्राह—यस्येति ॥ बहुतरप्रकारकष्ट इति ॥ न त्वेकद्वित्रिप्रकारेणेत्यर्थः । कष्टोऽसह्यः । जीवलोकः इहलोकः । अतो रामभद्रस्य हृदयं विशेषतः प्रलापैरेव धार्यत इति संबन्धः । ननु कुत्रापि विजने निषद्य कथमपि तत्कालसमुचितविनोदैः कालः

इदं विश्वं पाल्यं विधिवदभियुक्तेन मनसा
प्रियाशोको जीवं कुसुममिव घर्मो ग्लपयति ।
स्वयं कृत्वा त्यागं विलपनविनोदोऽप्यसुलभ-
स्तदद्याप्युच्छ्वासो भवति ननु लाभो हि रुदितम् ॥ ३० ॥

रामः—कष्टं भोः, कष्टम् ।

दलति हृदयं गाढोद्वेगं द्विधा तु न भिद्यते
वहति विकलः कायो मोहं न मुञ्चति चेतनाम् ।
ज्वलयति तनूमन्तर्दाहः करोति न भस्मसा-
त्प्रहरति विधिर्मर्मच्छेदी न कृन्तति जीवितम् ॥ ३१ ॥

---

क्षपयितव्य इत्यत्राह—**इदमिति** ॥ इदं स्वविषयान्तर्वर्ति **विश्वं** सकलमपि भूतजातं पाल्यम् अवश्यमेव रक्षणीयम् । **विधिवदिति** ॥ फलाभिसंधि विनैवेत्यर्थः । ननु रक्षाधिकारं कस्मिन्नपि सचिवे निवेशयेदपीत्यत्राह—**अभियुक्तेन मनसेति** ॥ एवं तर्हि न नितरां शोकव्याक्षेपसंभव इत्यत्राह—**प्रियाशोको जीवं कुसुममिव घर्मो ग्लपयतीति** ॥ ननु सहृदयैः समं विलप्य सोऽपि विरलयितुं शक्य इत्यत्राह—**स्वयमिति** ॥ ननु पुटपाकनिभश्चैष जीवितं द्रुतमपहरेदेवेत्यत्राह—**तदद्याप्युच्छ्वास इति** ॥ रामभद्रजीवनस्य बहुतरप्रकारकष्टत्वमुपपाद्य पूर्वोक्तं विश्रमयति—**ननु लाभो हि रुदितमिति** ॥ नन्विति निश्चये । एवमतिप्रवृद्धस्य हृदयसंतापस्याप्रतिविधेयतामनुसंधायाह—**कष्टमिति** ॥ भो इति खेदे । कष्टमिति कृच्छ्रे । एतदेव प्रतिपादयति—**दलतीति** ॥ स्फुटतीत्यर्थः । **हृदयं** प्रकृष्टं जीवितनिवासस्थानम् । हेतुमाह—**गाढोद्वेगमिति** ॥ गाढोऽतिरिक्तः उद्वेगः वेदना यस्य तत् । तथापि किं व्यथापि नश्यतीत्यत्राह—**द्विधा तु न भिद्यत इति** ॥ तुशब्दो विरोधं द्योतयति । भिद्यत इति कर्मकर्तरि । न विदीर्णं भवतीत्यर्थः । ननु मूर्च्छायामेव वेदनानाश इत्यत्राह—**वहति विकलः कायो मोहमिति** ॥ **वहति** आपादयति । **विकलः** अवसन्नः । **मोहं** वैचित्त्यम् । शरीरावसादान्मनसो मोहः शरीरमनसोरत्यन्तसंनिकर्षात् । तदुक्तम्—'मनश्शरीरयोस्तापः परस्परमनुव्रजेत् । आधाराधेयभावेन तप्ताज्यघटयोरिव ॥' इति । तथापि किं वेदनायाः शैथिल्यमित्यत्राह—**न मुञ्चति चेतनामिति** ॥ नन्वाधारविनाश एवाधेयविनाश इत्यत्राह—**ज्वलयति तनूमिति** ॥ सोऽपि किं वेदनामुपशमयतीत्यत्राह—**करोति न भस्मसादिति** ॥ ननु प्रारब्धकर्मविनाश एव शरीरनाश इत्यत्राह—**प्रहरतीति** ॥ **विधिः** दैवं पूर्वजन्मकृतकर्मपरिणाम

सीता—एव्वं एदं । एवमेतत् ।

रामः—हे भवन्तः पौरजानपदाः,

न किल भवतां देव्याः स्थानं गृहेऽभिमतं तत-

स्तृणमिव वने शून्ये त्यक्ता न चाप्यनुशोचिता ।

चिरपरिचितास्ते ते भावाः परिद्रवयन्ति मा-

मिदमशरणैरद्यास्माभिः प्रसीदत रुद्यते ॥ ३२ ॥

वासन्ती—(स्वगतम्) अतिगम्भीर आवेगो रणरणकमन्युसंभा-

इत्यर्थः । 'दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः' इत्यमरः । **मर्मच्छेदी** शरीरसंधानविश्लेषकः । तर्हि किं नाश्वसिषीत्यत्राह—**न कृन्तति जीवितमिति** ॥ अत्र प्रतीयमानस्य विरोधस्य विरहव्यथासंमूर्च्छनक्रमेण समाधेयत्वाद्विरोधोऽलंकारः । **एवमेतत्** । अयमेव प्रकारो ममापीत्यर्थः । अथ स्वकृतविरोधिभिः तादात्विकैर्मनोविकारैर्लोकाराधनशैथिल्यमाशङ्क्य स्वविषयान्तर्वर्तिनः सर्वान् प्रति सानुनयमाह—**हे भवन्त इति** ॥ अवश्यसमाराधनीयतानुसंधानात् भवच्छब्दप्रयोगः । पौरजानपदा इत्यनेन युष्माकमस्मदनुवर्तनमपि समुचितमेवेति व्यज्यते । **न किलेति** ॥ **देव्याः** प्रशस्तशीलायाः **गृहे** निखिलसांसारिकसुखनिदानभूते **स्थानं** निवसनम् । भावे ल्युट् । **भवताम्** अविचारणीयसिद्धान्तानाम् । **न अभिमतं** हृदयसमावर्जकं नेत्यर्थः । किलेति वार्तायाम् । **ततः** तस्मात् **वने** न जनपदे कुत्रचित् **त्यक्ता** नतु विवासिता । किमु पश्चादुपादेयबुद्ध्येत्यत्राह—**शून्य इति** ॥ किं वा स्नेहकातर्यादतिकृच्छ्रेणैवेत्यत्राह—**तृणमिवेति** ॥ किं तर्ह्यनुतापः कृत इत्यत्राह—**न चाप्यनुशोचितेति** ॥ इत्थम् इतः पूर्वं युष्मत्समाराधनपरैरेवास्माभिः स्थितम् । इदानीं तु न तथेत्याह—**अद्येति** ॥ **अस्माभिः** प्रकृतविरोधेकातरहृदयैरपीत्यर्थः । कीदृशः पुनरिदानीं प्रकृतविरोधो जात इत्यत्राह—**रुद्यत इति** ॥ भावे यक् । इदमिति सामान्योपक्रमे । किमेतद्भवादृशानां युक्तमित्यत्राह—**अशरणैरिति** ॥ ईदृशेषु हि व्यसनविप्लवेषु धैर्यमेव शरणम् । तद्विरहितैरित्यर्थः । कथं तादृशामिदानीं धैर्यं विनष्टमित्यत्राह—**चिरपरिचिता इति** ॥ **ते त इति** ॥ असंख्याता इत्यर्थः । **भावाः** पदार्थाः सीताविस्रम्भस्मारका इति यावत् । **परिद्रवयन्ति** विलीनचेतसं कुर्वन्ति । एवं चेदस्माभिः किं करणीयमित्यत्राह—**प्रसीदतेति** ॥ **अतिगम्भीरः** नितरामपरिच्छेद्यः **आवेगः** प्रक्षोभः **रणरणकमन्युसंभारस्य** रणरणकमन्योः रणरणककारिणो मन्योः संभारस्य संचयस्य । **देव** लोकसंभावनीय

१. भावास्तथा द्रवयन्ति २. अतिगभीरमापूरणं मन्युभारस्य

रस्य। (प्रकाशम्) देव, अतिक्रान्ते धैर्यमवलम्ब्यताम्।

रामः—किमुच्यते धैर्यमिति।

देव्या शून्यस्य जगतो द्वादशः परिवत्सरः।
प्रणष्टमिव नामापि न च रामो न जीवति॥ ३३॥

सीता—मोहिदह्मि अज्जउत्तस्स एदेहिं वअणेहिं।
मोहितास्म्यार्यपुत्रस्यैतैर्वचनैः।

तमसा—एवमेव वत्से,

नैताः प्रियतमा वाचः स्नेहार्द्राः शोकदारुणाः।
एतास्ता मधुनो धाराः श्च्योतन्ति सविषास्त्वयि॥ ३४॥

रामः—अपि खलु मया

---

**अतिक्रान्ते** प्रतिनिवर्तनानर्हे वस्तुनि **धैर्यं** हृदयदार्ढ्यम् **अवलम्ब्यताम्** आश्रीयताम्। न खल्वनुशयशतैरप्यतिक्रान्तं वस्तु प्रतिनिवर्तत इत्यर्थः। **किं** कीदृशं वस्तु **उच्यते** कथ्यते **धैर्यमिति** इतिशब्दः स्वरूपे। धैर्यशब्दाभिधेयं वस्तु त्वया किमभिमतमित्यर्थः। न पुनरस्मत्तो धैर्यशाली विद्यत इत्यस्मन्मतमित्याह—**देव्या इति**॥ **देव्या** सीतया **शून्यस्य** वियुक्तस्य **जगतः** न तु केवलं ममैव **द्वादशः** नहि चतुष्पञ्चादिसंख्यापूरकः **परिवत्सरः** न पक्षमासादिः। वर्तत इति शेषः। नच देव्या विनाशं नावधारयामीत्याह—**प्रनष्टमिति**॥ भावे निष्ठा। इवशब्दोऽवधारणे। तथापि नोत्क्रान्तं जीवितेनेत्याह—**न चेति**॥ अत्र रामशब्दः कृतघ्नतार्थमभिसंक्रामति। न च नेति निषेधनिषेधनात् जीवनस्य कष्टत्वातिशयः प्रतीयते। मोहितास्मि आर्यपुत्रस्य एतैर्वचनैः। **मोहिता** मोहं प्रापिता **आर्यपुत्रस्य** स्थिरप्रेम्णः **एतैः** स्नेहकातर्यमयैः **वचनैः** प्रलापैः। **एवमिति**॥ एतेषां वचनानां संमोहनत्वमुपपद्यत एवेत्यर्थः। कुत इत्यत्राह—**नैता इति**॥ **एताः** इदानीमेतन्मुखाद्गलिताः **प्रियतमाः** श्रुतिमनोहराः **स्नेहार्द्राः** स्नेहशीतलाः **शोकदारुणाः** शोकरूक्षाः। नेति प्रकृतापह्नवरूपो निषेधः। **एताः** प्रलापत्वेनाभिमन्यमानाः **ताः** प्रसिद्धाः **मधुनः** मकरन्दस्य **धाराः** स्रुतयः **सविषाः** विषसंस्पृष्टाः **त्वयि** दुःखैकभाजि **श्च्योतन्ति** प्रक्षरन्ति। अत्र प्रस्तुतनिषेधेनान्यस्य साधनादपह्नुतिरलंकारः। तदुक्तम्—'प्रकृतं यन्निषिध्यान्यत्साध्यते सा त्वपह्नुतिः' इति॥ न केवलं जीवननाशाभावान्मम धीरता अपितु निरतिशयदुःखसंक्षोभसहत्वादपीत्याह—**अपि खल्विति**॥ अपिशब्दो विशेषं द्योतयति। खलुरनुनये। मया हृदि तथैव तीव्रः शोकशङ्कुः सोढो न किमित्यन्वयः। **मया** जानकी-

यथा तिरश्चीनमलातचक्रं
प्रत्युप्तमन्तः सविषश्च दंशः ।
तथैव तीव्रो हृदि शोकशङ्कु-
र्मर्माणि कृन्तन्नपि किं न सोढः ॥ ३५ ॥

सीता—एव्वंह्मि मन्दभाइणी पुणो पुणो आआसआरिणी अज्ज-
उत्तस्स ।

एवमस्मि मन्दभागिनी पुनः पुनरायासकारिणी आर्यपुत्रस्य ।

रामः—एवमतिनिरुत्सुकस्य स्तम्भितान्तःकरणस्यापि मम संस्तु-
तवस्तुदर्शनादन्योऽयमावेगः । तथाहि ।

हेलोल्लोलक्षुभितकरुणोज्जृम्भणस्तम्भनार्थं
यो यो यत्नः कथमपि मयाऽऽधीयते तं तमन्तः ।

मयमनोरथविलसितेन **हृदि** सुखैकनिरते **तथैव** वक्ष्यमाणप्रकारेणैव **तीव्रः** दुस्सहतरः **शोकशङ्कुः** शोक एव शङ्कुः कीलः **सोढो न किं** सोढ एवेत्यर्थः । कीदृशी पुनस्तीव्रतेत्यत्राह—**अन्तरिति** ॥ हृदय इत्यर्थः । **प्रत्युप्तं** निखातम् **अलातचक्रं** अलातानमुल्मुकानां चक्रं समूहः । किमु हृदयावकाशानुगुण्येनेत्यत्राह—**तिरश्चीनमिति** ॥ **सविषश्च दंश इति** ॥ यत्रालातचक्रं प्रत्युप्तं तत्रैव सविषो दंश इति चकारेण द्योत्यते । **दंशो** वृश्चिकादिः । शङ्कुत्वारोपणनिमित्तमुपपादयति—**मर्माणि कृन्तन्निति** ॥ शरीरसंधानान्युच्छिन्दन्नित्यर्थः । अपिशब्दो विरोधं द्योतयन्नसह्यतातिशयमवगमयति । अत्रोपमारूपकयोरेकवाचकानुप्रविष्टत्वेन संकरः ॥ एवमस्मि मन्दभागिनी ॥ अस्मीत्यहमर्थेऽव्ययम् ॥ **मन्दभागिनी** मन्दः क्षीणो भागो भाग्यं यस्याः सा । कुत इत्यत्राह—**पुनः पुनरिति** ॥ न हि यदा कदाचित्सुखहेतुत्वमपीत्यर्थः । **आयासकारणं** पीडानिमित्तम् । इत्थमितः पूर्वं अतिधीर एवाहमभूवम् । इदानीं पुनः अप्रतिविधेयं व्यसनमापतितमित्याह—**एवमिति** ॥ **एवम्** उक्तप्रकारेण । **अतिनिरुत्सुकस्य** अतिशयेन निरस्तौत्सुक्यस्य । **स्तम्भितान्तःकरणस्य** स्तम्भितं सीतावृत्तान्तपरिभावनया निरुद्धम् अन्तःकरणं यस्य तस्य ॥ अपिर्विरोधे । **मम** अनुशयविहस्ताशयस्य **संस्तुतवस्तुदर्शनात्** परिचितवस्तुजालावलोकनात् **अन्यः** प्रकृतातिरिक्तः । **अयं** निगूहनार्हः **आवेगः** हृदयव्यथा । तत्प्रकारमेवाह—**तथाहीति** ॥

१. यथा तिरश्चीनमलातशल्यं प्रत्युप्तमन्तः सविषश्च दन्तः । २. वेलोल्लोल
३. समाधीयते

भित्त्वा भित्त्वा प्रसरति बलात्कोऽपि चेतोविकार-
स्तोयस्येवाप्रतिहतरयः सैकतं सेतुमोघः ॥ ३६ ॥

सीता—एदिणा अज्जउत्तस्स दुव्वारारम्भेण दुक्खसंजोएण पमुसिअणिअदुक्खं पकम्पइ मे हिअअं ।

एतेनार्यपुत्रस्य दुर्वारारम्भेण दुःखसंयोगेन प्रमुषितनिजदुःखं प्रकम्पते मे हृदयम् ।

वासन्ती—(स्वगतम्) अत्यापन्नो देवः । तदाक्षिपामि तावत् । (प्रकाशम्) चिरपरिचितानिदानीं जनस्थानभूमिभागानवलोकनेन मानयतु देवः ।

---

मया हेलोल्लोलक्षुभितकरुणोज्जृम्भणस्तम्भनार्थं यो यो यत्नः आधीयते तं तं कोऽपि चेतोविकारः बलात् भित्त्वा भित्त्वा प्रसरति इत्यन्वयः । **मया** हृदयस्थिरीकरणनिपुणेनापि । **अन्तः** हृदि । **हेलोल्लोलक्षुभितकरुणोज्जृम्भणस्तम्भनार्थं** हेलयैवोल्लोलम् अत्युल्बणं बृहदूर्मिकं यथा तथा क्षुभितस्य परिप्लवमानस्य करुणस्य शोकस्य यदुज्जृम्भणं वर्धनं तस्य स्तम्भनार्थम् । हेलानां हृदयस्थितानां सीताविलासानामुल्लोलैः परिस्फूर्तिभिः क्षुभितस्य करुणस्येति वा । यो य इत्यनेन यत्नाधानस्य बाहुविध्यं व्यज्यते । कथमपीत्यनेनोज्जृम्भणस्य निरर्गलत्वं च । **आधीयते** संपाद्यते । तं तमित्यनेन न कस्यापि क्षणकालावस्थानमिति । **कोऽपि** वक्तुमशक्यः **चेतोविकारः** चेतसो विकारः वेदनातिरेकरूपः परिस्पन्द इत्यर्थः । **बलात्** इतरबलाधःकरणसमर्थया निजशक्त्यैव **भित्त्वा भित्त्वा** आधानक्रमेणैवोन्मर्द्योन्मर्द्य **प्रसरति** उज्जृम्भते । उपमानेन चैतत्स्फुटयति—**तोयस्येति** ॥ **अप्रतिहतरयः** विशृङ्खलवेगः **ओघः** प्रवाहः **सैकतं** सिकताभिर्विनिर्मितम् । एतेनार्यपुत्रस्य दुर्वारारम्भेण दुःखसंक्षोभेण प्रमुषितनिजदुःखं प्रकम्पते मे हृदयम् । **एतेन** अवाग्विषयेण **आर्यपुत्रस्य** मयि नितरां वत्सलस्य **दुर्वारारम्भेण दुःखसंक्षोभेण** शोकप्रसरेण कर्त्रा **प्रमुषितनिजदुःखं** संप्रमृष्टपरित्यागव्यथं **प्रकम्पते** नितरां वेपते **मे** मन्दभाग्यायाः **हृदयं** स्वभावकातरम् । **अत्यापन्नः** नितरामापन्नः आपत्प्राप्तः । **तत्** तस्मात् **आक्षिपामि** शोकप्रसङ्गादन्यस्मिन् वस्तुनि प्रेरयामि । तावच्छब्दः क्रमे । क्रमेण सीताशोकमपनयामीत्यर्थः । अधिकारे वा । ललितवस्त्वन्तरप्रलोभनेन यथाशक्ति दुःखापनोदनाय प्रयतिष्य इत्यर्थः । **चिरपरिचितानिति** ॥ अवश्यदर्शनीयानित्यर्थः । **इदानीमिति** ॥ लब्धावसरेणेति भावः । **जनस्थानभूमिभागान्** रमणीयतरान् प्रदेशान् **अवलोकनेन** दृष्टिदानानुग्रहेण **मानयतु** संभावयतु । संदीपनोपाय एव दुःखस्य

रामः—एवमस्तु । (इत्युत्थाय परिक्रामति ।)

सीता—संदीवणोवाओ एव्व दुक्खस्स पिअसहीविणोदणोवाओ त्ति मण्णे ।

संदीपनोपाय एव दुःखस्य प्रियसखीविनोदनोपाय इति मन्ये ।

वासन्ती—देव देव,

अस्मिन्नेव लतागृहे त्वमभवस्तन्मार्गदत्तेक्षणः
सा हंसैः कृतकौतुका चिरमभूद्गोदावरीसैकते ।
आयान्त्या परिदुर्मनायितमिव त्वां वीक्ष्य बद्धस्तया
कातर्यादरविन्दकुड्मलनिभो मुग्धः प्रणामाञ्जलिः ॥ ३७ ॥

---

प्रियसखीविनोदनोपाय इति मन्ये । संदीपनोपायः संदीपनहेतुः । प्रियंसखीविनोदनोपाय इति ॥ प्रियसखीदृष्टः विनोदनोपाय इत्यर्थः । अथ जनस्थानभूमिभागे किमपि लतागृहं तदेवेदमिति सोपपत्तिकमनुस्मारयति—अस्मिन्निति ॥ अस्मिन्नेव लतागृहे तन्मार्गदत्तेक्षणः समभवः इत्यन्वयः । अस्मिन्नेव पुरतो दृश्यमान एव लतागृहे विलासभवने तन्मार्गदत्तेक्षणः तन्मार्गे सीतागमनमार्गे दत्ते प्रेरिते ईक्षणे नयने येन सः । समभवः क्षणं न्यषीदः । ललिततरलतागृहदर्शनसमुपजातविहरणरसतयेति भावः । किं पुनः सीताया अनागमने कारणमित्यत्राह—सेति ॥ ललितवस्त्ववलोकनकुतूहलिनीत्यर्थः । गोदावरीसैकते गोदावर्याः सैकते निर्मलतरे पुलिनतल इत्यर्थः । चिरमभूत् व्यलम्बत । कीदृशे वस्तुनि तदानीमियं कुतूहलिनीत्यत्राह—हंसैरिति ॥ नदीपुलिनविहारिभिः मरालमिथुनैरित्यर्थः । कृतकौतुका आपादितकुतूहला । कथं पुनरीदृशमागस्तदानीं परिहृतमित्यत्राह—तयेति ॥ कृतव्यलीकयेत्यर्थः । प्रणामाञ्जलिः प्रणामस्थानीयोऽञ्जलिः बद्धः विरचितः । पादपतनशपथप्रभृतिभिः कथंचिदपनेये तादृशेऽस्मिन्नपराधे कथमञ्जलिबन्धः पर्याप्त इत्यत्राह—आयान्त्येति ॥ संभोगावसक्तहंसमिथुनजनितोत्कण्ठाविसंष्ठुळमागच्छन्त्यैवेत्यर्थः । अत्र कारणमाह—कातर्यादिति ॥ तत्रापि हेतुमाह—त्वां वीक्ष्येति ॥ लतागृहसंनिषण्णं निजपदवीदत्तदृष्टिमवलोक्येत्यर्थः । त्वद्दर्शनं किमस्या भयहेतुरित्यत्राह—परिदुर्मनायितमिवेति ॥ ईषत्कलुषितहृदयामित्यर्थः । अञ्जलिबन्धस्य च मानापनयनक्षमतामुपपादयति—अरविन्दकुड्मलनिभ इति ॥ तादात्विकं च शोभातिशयमाह—मुग्ध इति ॥ यथा खलु दिनावसानसमये प्रविततैर्दलसंपुटैः शनैरेव मुकुलायमानमरविन्दं नयनानन्दं विदधाति तथैव गोदावरीपुलिनतलाच्चकितचकितमागच्छ-

सीता—दालुणासि वासन्ति, दालुणासि । जा एदेहिं हिअअसल्लुग्घाटणेहिं वअणेहिं पुणोपुणो मं मन्दभाइणिं अज्जउत्तं अ विहुवलेसि ।

दारुणासि वासन्ति दारुणासि । या एतैर्हृदयमर्मोद्घाटनैर्वचनैः पुनः पुनर्मां मन्दभागिनीमार्यपुत्रं च विह्वलयसि ।

रामः—अयि चण्डि जानकि, इतस्ततो दृश्यस इव, न चानुकम्पसे ।

हा हा देवि स्फुटति हृदयं ध्वंसते देहबन्धः
शून्यं मन्ये जगदविरतज्वालमन्तर्ज्वलामि ।
सीदन्नन्धे तमसि विधुरो मज्जतीवान्तरात्मा
विश्वं मोहः स्थगयति कथं मन्दभाग्यः करोमि ॥ ३८ ॥

(इति मूर्च्छति ।)

---

न्त्या सीतयाऽपि स्वप्रमादजनितमपराधं संप्रमार्ष्टुमुपरचितः प्रणामाञ्जलिबन्ध इत्यर्थः । दारुणाऽसि वासन्ति या एतैर्हृदयशल्योद्घाटनैर्वचनैः पुनः पुनर्मां मन्दभागिनीमार्यपुत्रं च विह्वलयसि । **एतैः** क्षतक्षारार्पणकल्पैः हृदयगतं शल्यं हृदयशल्यं तस्योद्घाटनैः प्रचालनैरित्यर्थः । **विह्वलयसि** व्यथयसि । **चण्डीति** ॥ अनुनयशतैरपि मयि कोपवैमुख्यं न परित्यजसीत्यर्थः । प्रिये वैमुख्यहेतुः कोपातिरेकश्चण्डत्वमिति भोजः । **जानकीति** ॥ एवंविधं दारुणत्वं तव नोचितमिति भावः । कथं पुनरत्रासन्निहितायाः कोपवैमुख्यमुत्प्रेक्ष्यते इत्यत्राह—**इतस्तत इति** ॥ **दृश्यस इव** दृश्यस एव । किमतः परमित्यत्राह—**नचानुकम्पस इति** ॥ ननु कृतापराधः कथमनुकम्पनीय इत्यत्राह—**हा हेति** ॥ **देवि** प्रशस्तशीले **स्फुटति** दीर्यते **हृदयं** जीवितनिवासस्थानम् । **ध्वंसते** प्रणश्यति **देहबन्धः** सिरामांसादिसंधानस्थानम् । **शून्यं** सत्ताप्रतियोगि **जगत्** विरिञ्चिसृष्टं सकलमपि भूतजातम् । **अविरतज्वालम्** अविरताभिः ज्वालाभिः सहितं यथेति क्रियाविशेषणम् । **अन्तः** हृदये **ज्वलामि** संदह्य इति यावत । **सीदन्** परिक्लिश्यमानः **अन्धे** अतिगाढे **तमसि** अन्धकारे **विधुरः** परवशः **मज्जतीव** प्रविशतीव **अन्तरात्मा** जीवः चेतो वा । **विश्वं** भूतजालम् **मोहः** वैचित्त्यम् **स्थगयति** आवृणोति । आन्तरमेव किमपि तमो बाह्यं वस्तु सकलमपि तिरयतीत्यर्थः । कथमिति वितर्के संभ्रमे वा । **मन्दभाग्यः** क्षीणपुण्यः **करोमि** प्रतिकुर्वे । अत्र प्रस्फुटतीत्यादिना स्वानुभवक्रमेण संतापवेगातिशयः प्रतिपाद्यते । हा धिक् पुनरपि प्रमूढ

**सीता**—हद्धी हद्धी । पुणोवि पमूढो अज्जउत्तो ।

हा धिक् हा धिक् । पुनरपि प्रमूढ आर्यपुत्रः ।

**वासन्ती**—देव, समाश्वसिहि समाश्वसिहि ।

**सीता**—अज्जउत्त, मं मन्दभाइणिं उद्दिसिअ सअलजीवलोआहारस्स दे जम्मलाहस्स वारंवारं संसइदजीवदालुणो दसापरिणामोत्ति हा हदह्मि । (इति मूर्च्छति ।)

आर्यपुत्र, मां मन्दभागिनीमुद्दिश्य सकलजीवलोकाधारस्य ते जन्मलाभस्य वारंवारं संशयितजीवदारुणो दशापरिणाम इति हा हतास्मि ।

**तमसा**—वत्से, समाश्वसिहि समाश्वसिहि । पुनस्त्वत्पाणिस्पर्श एव रामभद्रस्य जीवनोपायः ।

**वासन्ती**—कष्टमद्यापि नोच्छ्वसिति । हा प्रियसखि सीते, कासि । संभावयात्मनो जीवितेश्वरम् ।

(सीता ससंभ्रममुपसृत्य हृदि ललाटे च स्पृशति ।)

**वासन्ती**—दिष्ट्या प्रत्यापन्नचेतनो रामभद्रः ।

---

आर्यपुत्रः । पुनःशब्द आवृत्तौ । **प्रमूढः** संमूर्च्छितः । **देव** सकलक्लेशापहारक **समाश्वसिहि** शोकायत्तो मा भूः । आर्यपुत्र मां मन्दभागिनीमुद्दिश्य सकलजीवलोकाधारस्य ते जन्मलाभस्य वारं वारं संशयितजीवदारुणो दशापरिणाम इति हा हतास्मि । आर्यपुत्रेति संबोधनकाका परित्यागव्यलीकस्य सम्यगपगमः सूच्यते । **माम्** अस्वतन्त्राम् **मन्दभागिनीं** क्षीणभाग्याम् **उद्दिश्य** निमित्तीकृत्य **सकलजीवलोकाधारस्य** त्रैलोक्यरक्षानिमित्तस्य **ते** पुण्यात्मनः **जन्मलाभस्य** जन्मन एव लाभस्य **वारं वारं** मध्ये मध्ये । **संशयितजीवदारुण इति** ॥ संशयितेन संशयापन्नेन जीवेन हेतुना दारुण इत्यर्थः । **दशापरिणामः** अवस्थाविपर्ययः । इतिर्हेतौ । हेति विषादानुभावः । **हतास्मि** दैवोपहतास्मि । इतिशब्द उक्तौ । **पुनस्त्वत्पाणिस्पर्श एवेति** ॥ पुनःशब्दो विशेषे । अन्येभ्यो जीवनोपायेभ्यः तव पाणिस्पर्श एव साधीयान् दृष्ट इति भावः । कष्टमिति कृच्छ्रे । **अद्यापि** एतावता कालेनापि । **नोच्छ्वसिति** प्रबोधो न जायत इत्यर्थः । **संभावय** सादरमाश्वासय **आत्मनो जीवितेश्वरं** सर्वथापि तटस्थभावानर्हम् । **दिष्ट्या** दैवानुग्रहेण **प्रत्यापन्नचेतनः** प्रत्यागतप्रबोधः । अथ चिराभिलषितसीतास्पर्शानुभवविवृद्धहृदयाह्लादपरवश आह—**आलिम्पन्निति** ॥

**रामः**—

आलिम्पन्नमृतमयैरिव प्रलेपै-
रन्तर्वा बहिरपि वा शरीरधातून्।
स स्पर्शः पुनरपि जीवयन्नकस्मा-
दानन्दादपरविधं तनोति मोहम् ॥ ३९ ॥

(सानन्दमनुन्मीलिताक्ष एव) सखि वासन्ति, दिष्ट्या वर्धसे।

**वासन्ती**—कथमिव।

**रामः**—सखि, किमन्यत्। पुनरपि प्राप्ता जानकी।

**वासन्ती**—अयि देव रामभद्र, क्व सा।

**रामः**—(स्पर्शसुखमभिनीय) पश्य नन्वियं पुरत एव।

---

स स्पर्शः मोहं तनोति इत्यन्वयः। सः पूर्वानुभूतः **स्पर्शः** निरतिशयाह्लादकरः **मोहम्** अप्रतिपत्तिम् **तनोति** संपादयति। ननु स्पर्शविशेषलाभादेवेदानीं मोहो निवृत्तः। तत् कथं स एव तमापादयेदित्यत्राह—**पुनरपीति**॥ प्रथमोपनते निवृत्तेऽपीत्यर्थः। ननु मोहस्य निरासकः कथं तमापादयेदित्यत्राह—**अपरविधमिति**॥ समनन्तरानुभूयमानाद्विसदृशमित्यर्थः। कीदृशमस्माद्वैसादृश्यमित्यत्राह—**अमृतमयैरिति**॥ अमृतविकारैरित्यर्थः। विकारार्थे मयट्। **प्रलेपैः** प्रकृष्टैर्लेपनद्रव्यैः। करणे घञ्। **शरीरधातून्** शरीरवर्तिनो धातून् **आलिम्पन्** आ समन्तात् लिम्पन् उपस्नेहयन्। इवशब्द उत्प्रेक्षायाम्। किमु बाह्यानाभ्यन्तरान् वेति न जानामीत्याह—**अन्तर्वा बहिरपि वेति**॥ आन्तरं चेतनाधातुं त्वगादीन् बाह्यानपि वेत्यर्थः। चेतनाऽपि शरीरधातुष्वन्तर्भवति। तथा च वक्ष्यति—'प्रादुर्भूय स्थित इव बहिश्चेतनाधातुरेकः' इति। अमृतमयतामुपपादयति—**आनन्दादिति**॥ ल्यब्लोपे पञ्चमी। आनन्दं विधायेत्यर्थः। अत्र प्रथमद्वितीययोर्मोहयोः स्वरूपभेदाभावेऽपि कारणभेदाद्वैसादृश्यमिति बोद्धव्यम्। **अनुन्मीलिताक्ष एवेति**॥ दर्शनाभावचाकित्यान्निमीलितनयन एवेत्यर्थः। **सखि** सुखदुःखसंविभागिनि **वासन्ति** जानकीहृदयवल्लभे **दिष्ट्या वर्धसे** दैवानुगृहीताऽसि। अस्मदभ्युदयस्तवैवेति भावः। **कथमिवेति**॥ इवशब्दो वाक्यालंकारे। **किमन्यदिति**॥ अभिलषितलाभ एवेति भावः। कथमित्यत्राह—**पुनरिति**॥ पुनश्शब्द आवृत्तौ। **प्राप्ता** संनिहिता **जानकी** आपन्नानुग्राहिणी। अयीत्यनुनये। क्वेत्यसंभावनायाम्। **सा** अस्मत्प्रियसखी। नन्विति निश्चये। **इयं** स्पर्शेनेनानुभूयत एवेत्यर्थः। **पुरत एवेति**॥ त्वया किं न दृश्यत इत्यर्थः।

वासन्ती—अयि देव रामभद्र, किमासि मर्मच्छेददारुणैरेभिः प्रलापैः प्रियसखीविपत्तिदुःखदग्धामपि पुनर्मन्दभागां दहसि माम् ।

सीता—ओसरिदुं इच्छम्मि । एसो उण चिरेण सभावसोम्मसीदलेण अज्जउत्तप्परिसेण दीहदारुणं वि संदावं झत्ति अवणुदन्तेण वज्जलेहोवणद्धसंफुडिजंतणीसहविपल्हत्थवेअणसीलो अवसो विअ मे हत्थो ।

अपसर्तुमिच्छामि । एष पुनश्चिरेण स्वभावसौम्यशीतलेनार्यपुत्रस्पर्शेन दीर्घदारुणमपि संतापं झटित्यपनुदता वज्रलेपोपनद्धसंस्फुट्यमाननिस्सहविपर्यस्तवेपनशीलोऽवश इव मे हस्तः ।

रामः—सखि, कुतः प्रलापः ।

गृहीतो यः पूर्वं परिणयविधौ कङ्कणधरः
चिरं स्वेच्छास्पर्शैरमृतशिशिरैर्यः परिचितः ।

---

अयीतीष्टाह्वाने । किंशब्दः प्रश्ने । असीति त्वमर्थेऽव्ययम् । **मर्मच्छेददारुणैः** मर्मच्छेदवद्दारुणैः असह्यैरित्यर्थः । **एभिः** त्वयि नितरामसंभावनीयैः । **प्रलापैः** करुणवचनैः । **प्रियसखीविपत्तिदुःखदग्धां** प्रियसख्याः सीतायाः विपत्त्या विनाशेन जनितेन दुःखेन दग्धां पीडिताम् । अपिशब्दो विरोधे । पुनश्शब्द आवृत्तौ । **मन्दभागां** क्षीणभाग्यां **दहसि** संतापयसि **माम्** अशरणाम् । अपसर्तुमिच्छामि । एष पुनश्चिरेण **स्वभावसौम्यशीतलेन** स्वभावत एव सौम्येन शीतलेन संतापहरेण **आर्यपुत्रस्पर्शेन** निरतिशयानन्ददायिना । **दीर्घदारुणमपीति** ॥ दीर्घतया संतानवाहितया दुःसहतरमपीत्यर्थः । **संतापं** विरहजं दाहं **झटिति** आपातमात्र एव **अपनुदता** निरस्यता । **वज्रलेपोपनद्धसंस्फुट्यमाननिस्सहविपर्यस्तवेपनशील इति** ॥ वज्रलेपोपनद्ध इव निस्सहविपर्यस्तः, संस्फुट्यमान इव वेपनशीलश्चेत्यर्थः । संफडिजतणीसहेति वा पाठः । संफल्यमानानिस्सहेति छाया । वज्रलेपोपनद्ध इव निस्सहविपर्यस्तः, संफल्यमान इव वेपनशीलश्चेत्यर्थः । ञि फला विशरण इति धातुः । वज्रलेपो नाम प्रासादादौ शिलानामितरेतरसंधानदार्ढ्यार्थं प्रक्षेप्तव्यो बहुविधद्रव्ययोगविशेषसंपादनीयः शिल्पशास्त्रविहितः कश्चिल्लेपनद्रव्यविशेषः । **अवशः** आधिविधेयः । इवशब्दोऽवधारणे । सखीति संबोधनकाका कथमिदानीमावयोः प्रतीतिभेदः संजात इति द्योत्यते । **कुतः** कस्मात् **प्रलापः** मिथ्यावादः । 'प्रलापोऽनर्थकं वचः' इत्यमरः । अमिथ्यात्वमेवोपपादयति—

सीता—अज्जउत्त, सो एव्व । दाणिं जाणासि ।
आर्यपुत्र, स एव । इदानीं जानासि ।
रामः—
स एवायं तस्यास्तदितरकरौपम्यसुभगो
मया लब्धः पाणिर्ललितलवलीकन्दलनिभः ॥ ४० ॥
(इति गृह्णाति ।)
सीता—हद्धी । अज्जउत्तप्परिसमोहिदाए पमादो खु संवुत्तो ।
हा धिक् आर्यपुत्रस्पर्शमोहितायाः प्रमादः खलु संवृत्तः ।
रामः—सखि वासन्ति, आनन्दनिमीलितेन्द्रियसाध्वसेन परवानस्मि । तत्त्वमपि धारय माम् ।
वासन्ती—कष्टमुन्माद एव ।

---

गृहीत इति ॥ शतानन्दानुमत्या कौशिकनियोगाचावलम्बित इत्यर्थः । यच्छब्दस्तात्कालिकहर्षविशेषमवगमयति । पूर्वं कौमारके । कस्मिन्निमित्त इत्यत्राह—परिणयविधाविति ॥ तात्कालिकमौत्सुक्यातिशयमाह—कङ्कणधर इति ॥ प्रत्यभिज्ञौचित्यमाह—चिरं परिचित इति ॥ परिचयप्रकारमाह—स्वेच्छास्पर्शैरिति ॥ सततसेवनेऽप्यतृप्ततामाह—अमृतशिशिरैरिति ॥ आर्यपुत्र स्थिरप्रणयिन् स एव त्वया सततसंभावित एव इदानीं ननु तदानीम् जानासि अभिज्ञोऽसि । स एव ननु संकल्पसंभावितः अयं मदुरसि परिवर्तमानः तस्याः जानक्याः तदितरकरौपम्यसुभगः सामुद्रिकादिप्रतिपादितलक्षणलक्षित इत्यर्थः । पाणिकुचादीनामितरेतरसाम्यं हि महिलाजनानां सौन्दर्यसारसर्वस्वम् । तदुक्तं कविवल्लभेन—'वक्षोजः कश्चिदन्यं तुलयति सुतनोर्मोहिनीसृष्टिरन्या' इति । मया तदेकपरायणेन लब्धः दैवात्प्राप्तः । ननूपमानान्तरवैधुर्यादेव तदितरकरौपम्यसुभगत्वमिति चेन्मैवम् ललितलवलीकन्दलनिभ इत्यनेन विरोधात् । अत्राभिनवकाण्डप्ररोहवाचिना कन्दलशब्देन किसलयं लक्ष्यते । तात्स्थ्यं संबन्धः । लोभनीयत्वकोमलत्वातिशयप्रतीतिः फलम् । हा धिक् आर्यपुत्रस्पर्शमोहितायाः प्रमादः खलु संवृत्तः । आनन्दनिमीलितेन्द्रियसाध्वसेनेति ॥ आनन्दनिमीलितस्य आनन्देन निमीलितस्य क्षीणशक्तेः इन्द्रियस्य मनसः साध्वसेनानवधानेनेत्यर्थः । आनन्दनिमीलितस्य स्पर्शसुखनिष्पन्दस्य इन्द्रियस्य पाणेः साध्वसेन तारल्येनेति वा । परवान् परवशः । तत् तस्मात् । त्वमपि धारय गृहाण । सहायतयेति शेषः । कष्टमिति कृच्छ्रे । उन्माद एवेति ॥ न दृष्टमत्र प्रतिविधानमिति

(सीता ससंभ्रमं हस्तमाक्षिप्यापसर्पति ।)

**रामः**—हा धिक् प्रमादः ।

करपल्लवः स तस्याः सहसैव जडात्मनः परिभ्रष्टः ।
परिकम्पिनः प्रकम्पी करान्मम स्विद्यतः स्विद्यन् ॥ ४१ ॥

**सीता**—हद्धी । अज्जवि अणवत्थिदत्थिमिदमूढघुण्णन्तवेअणं ण पज्जवत्थावेमि अत्ताणम् ।

हा धिक् । अद्याप्यनवस्थितास्तिमितमूढघूर्णमानवेदनं न पर्यवस्थापयाम्यात्मानम् ।

**तमसा**—(सस्नेहकौतुकस्मितं निर्वर्ण्य)

सस्वेदरोमाञ्चितकम्पिताङ्गी
जाता प्रियस्पर्शसुखेन वत्सा ।
मरुन्नवाम्भःपरिधूतसिक्ता
कदम्बयष्टिः स्फुटकोरकेव ॥ ४२ ॥

---

शेषः । करग्रहणात् संभ्रमः । **आक्षिप्य** अवधूय **अपसर्पति** अपसरति । हेति शोके । धिङ्निन्दायाम् । प्रमादोऽनवधानता । कुत इत्यत्राह—**करपल्लव इति** ॥ सः करपल्लवः सहसैव परिभ्रष्ट इत्यन्वयः । **सः** प्रतिपादितगुणविशिष्टः **करपल्लवः** संतापहारकः मम मन्दभाग्यस्य **करात्** समुचितकरणविधुरात् **सहसैव** लाभक्षण एव **परिभ्रष्टः** विगलितः । अनादृतः कथं न प्रतिकूल इत्यत्राह—**तस्या इति** ॥ मदङ्गसंगपरितुष्टाया इत्यर्थः । कथं तर्हि परिभ्रष्ट इत्यत्राह—**प्रकम्पीति** ॥ साध्वसतरलित इत्यर्थः । तर्हि तद्ग्रहणं सुकरमेवेत्यत्राह—**परिकम्पिन इति** ॥ ननु सोऽपि तथैवेत्यत्राह—**स्विद्यन्निति** ॥ ननु स्विद्यतो ग्रहणं दृढीभवेदेवेत्यत्राह—**स्विद्यत इति** ॥ तत्कथमवहितं न मनसेत्यत्राह—**जडात्मन इति** ॥ हा धिक् । अद्यापि अनवस्थितस्तिमितमूढघूर्णमानवेदनं न पर्यवस्थापयाम्यात्मानम् । **अद्यापि** करग्रहणादपसरणेऽपि **आत्मानं** मनः **न पर्यवस्थापयामि** स्थिरीकर्तुं न शक्नोमि । हेतुमाह—**अनवस्थितेति** ॥ अनवस्थितं चञ्चलं बहुविधोल्लेखतरलितमित्यर्थः । स्तिमितं विचारासहम् मूढं विषयप्रवृत्तिशून्यम् घूर्णमानवेदनं उत्प्लवमानातङ्कम् । **सस्वेदेति** ॥ सस्वेदानि उद्भिन्नस्वेदबिन्दूनि रोमाञ्चितानि संजातरोमाञ्चानि कम्पितानि जातकम्पानि अङ्गानि यस्याः सा । **मरुन्नवाम्भःपरिधूतसिक्तेति** ॥ मरुता पूर्वं परिधूता नवाम्भसा पश्चात्सिक्ता चेत्यर्थः । **स्फुटकोरका** अभिव्यक्तमुकुलनिकरा । अम्मह इति विषादे ।

सीता—(स्वगतम्) अम्महे इमिणा अत्ताणएण लज्जिदह्मि भअवदीए तमसाए। किंति किल एसा मण्णिस्सदि एसो अ परिच्चाओ एसो अहिसङ्गोत्ति।

अम्महे अनेनात्मानयेन लज्जितास्मि भगवत्यास्तमसायाः। किमिति किलैषा मंस्यत एष च परित्याग एषोऽभिषङ्ग इति।

रामः—(सर्वतोऽवलोक्य) हा कथं नास्त्येव। नन्वकरुणे वैदेहि।

सीता—अकरुणह्मि जा एव्वं तुमं पेक्खन्दी धरामि एव्व।

अकरुणास्मि यैवं त्वां पश्यन्ती ध्रिय एव।

रामः—कासि प्रिये। देवि, प्रसीद प्रसीद। न मामेवंविधं परित्यक्तुमर्हसि।

सीता—अयि अज्जउत्त, विप्पदीवं विअ।

अयि आर्यपुत्र, विप्रतीपमिव।

वासन्ती—देव, प्रसीद प्रसीद। स्वेनैव लोकोत्तरेण धैर्येण संस्तम्भयातिभूमिंगतविप्रलम्भमात्मानम्। कुत्र मे प्रियसखी।

---

अनेनात्मानयेन लज्जिताऽस्मि भगवत्यास्तमसायाः। किमिति किलैषा मंस्यते एष च परित्याग एषोऽभिषङ्ग इति। **आत्मानयेन** निजजाड्येन कर्त्रा **लज्जिताऽस्मि** लज्जां प्रापिताऽस्मि। इतिशब्दः स्वरूपे प्रकारे वा। किलेति संभावनायाम्। **अभिषङ्गः** अभिलाषातिशयः। इतिर्हेतौ। **हा** शोके। कथमिति वितर्के। नन्वित्यनुनये। **अकरुणे** क्रूरहृदये। **वैदेहि** विदेहराजपुत्रि। ईदृशमतिक्रौर्यं तवानुचितमिति भावः। **अकरुणास्मि** कठिनहृदयास्मि। कुत इत्यत्राह—या एवं त्वां पश्यन्ती ध्रिय एव। **एवं** त्वत्पादपरिचरणाक्षमा **त्वाम्** अत्यापन्नं **पश्यन्ती** सम्यगवलोकयन्ती **ध्रिये** जीवामि। अवधारणेन जीवितं प्रत्यसूया व्यज्यते। असीति त्वमर्थेऽव्ययम्। **प्रसीदेति॥** प्रार्थनायां लोट् प्राप्तकाले वा। **देवि** शोभनशीले। **माम्** अतिवत्सलम् **एवंविधम्** अत्यन्तविवशम्। आर्यपुत्र विप्रतीपमिव। **विप्रतीपं** विपरीतम्। इवशब्दोऽवधारणे। अहं त्वयैव परित्यक्ता न त्वं मयेति भावः। **देव** गभीरहृदय **प्रसीद** मयि प्रसादं कुरु। कीदृशमित्यत्राह—**स्वेनेति॥** स्थिरतरेणेत्यर्थः। **लोकोत्तरेण** अनितरसाधारणेन **संस्तम्भय** अतिक्रान्तविषयाद्व्यावर्तय **अतिभूमिंगतविप्रलम्भं** परमकाष्ठाधिरूढविरहवेदनम्। विप्रलम्भः चित्तविभ्रमः तस्योत्कर्षमनुप्राप्तमिति वा। **आत्मानं** मानसम्। **व्यक्तं** निश्चितम्। सत्यमेवेत्यर्थः। **नास्त्येवेति॥**

रामः—व्यक्तं नास्त्येव । कथमन्यथा वासन्त्यपि न पश्येत् । अपि खलु स्वप्न एष स्यात् । न चास्मि सुप्तः । कुतो रामस्य निद्रा । सर्वथा स एवैष भगवाननेकवारप्रविकल्पनानिर्मितो मनोविप्रलम्भः पुनः पुनरनुबध्नाति माम् ।

सीता—मए एव्व दारुणाए विप्पलद्धो अज्जउत्तो ।

मयैव दारुणया विप्रलब्ध आर्यपुत्रः ।

वासन्ती—देव, पश्य पश्य ।

पौलस्त्यस्य जटायुषा विघटितः कार्ष्णायसोऽयं रथ-
स्ते चैते पुरतः पिशाचवदनाः कङ्कालशेषाः खराः ।
खड्गच्छिन्नजटायुपक्षतिरितः सीतां चलन्तीं वह-
न्नन्तर्व्याकुलविद्युदम्बुद इव द्यामभ्युदस्थादरिः ॥ ४३ ॥

---

सीतेति शेषः । कथमिति वितर्के । **अन्यथा** अस्ति चेत् । अपिखल्विति जिज्ञासायां निपातसमुदायः । **स्वप्नः** निद्रासंभावितः संकल्पः । जागरितसंस्कारप्रत्ययस्य विषय इति यावत् । **एषः** सीताकरतलस्पर्शानुभवः । कुत इति क्षेपे । **रामस्य** स्वकृतानुतापिनः **निद्रा** अन्तःकरणनिर्वेशः । **सर्वथेति** ॥ न खल्वत्रापि भ्रम इति भावः । **स एष इति** ॥ चिरानुवृत्त इत्यर्थः । असंभावनीयवस्तुसंघटनापाटवमालोच्य भगवच्छब्दनिर्देशः । **अनेकवारप्रविकल्पनानिर्मितः** बहुकृत्वः प्रविततया प्रकृष्टया वा विकल्पनया प्रियतमावृत्तान्तपरिभावनया निर्मित उत्पादितो **मनोविप्रलम्भः** चित्तविभ्रमः । **पुनः पुनरिति** ॥ अन्तरान्तरा तत्त्वबोधेन बाधितोऽपीत्यर्थः । **अनुबध्नाति** संश्लिष्यति **माम्** अत्यारूढविप्रलम्भदशम् । शतकृत्वो यथार्थबोधे सत्यपि दोषो मिथ्याज्ञानमुल्लासयत्येवेति भावः । मयैव दारुणया विप्रलब्ध आर्यपुत्रः । **विप्रलब्धो** वञ्चितः । हेतुमाह—**दारुणयेति** ॥ प्रकृतादन्यस्मिन्ननेनमाक्षिपति—**पश्य पश्येति** ॥ वाक्यार्थः कर्म । **पौलस्त्यस्येति** ॥ **पौलस्त्यस्य** रावणस्य **जटायुषा** गृध्रराजेन **विघटितः** विध्वस्तः **कार्ष्णायसः** कृष्णायसनिर्मितः । इतरविध्वंसनाशक्य इत्यर्थः । अयमित्यभिनीयोक्तिः । **ते** अनिबर्हणीयाः । चकारः समुच्चये । **एते** शकुन्तराजप्रमथिताः **पुरतः** अग्रे **पिशाचवदनाः** विकृतवदनाः **कङ्कालशेषाः** अस्थिमात्रावशेषाः । 'शरीरास्थिनि कङ्काल' इत्यमरः । **खराः** गर्दभाः । **खड्गच्छिन्नजटायुपक्षतिरिति** ॥ खड्गेन छिन्ना निकृत्ता जटायुपक्षतिः जटायुषः पक्षतिः पक्षमूलं येन सः । 'स्त्री पक्षतिः पक्षमूलम्' इत्यमरः । **इतः** अस्मात्प्रदेशात् **सीतां** भवत्प्रेयसीम्

सीता—(सभयम्) अज्जउत्त, अअं तादो वावादीअदि। परित्ताहि परित्ताहि। अहं अवहरिज्जामि।

आर्यपुत्र, अयं तातो व्यापाद्यते। परित्रायस्व परित्रायस्व। अहमपह्रिये।

रामः—(सवेगमुत्थाय) आः पाप तातप्राणसीतापहारिन् लङ्कापते, क यास्यसि।

वासन्ती—अयि देव राक्षसकुलप्रलयधूमकेतो: किमद्यापि ते मन्युविषयः।

सीता—अम्मो उम्मत्तह्मि। अहो, उन्मत्तास्मि।

रामः—अये अन्य एवायमधुना प्रलयो वर्तते।

उपायानां भावादविरतविनोदव्यतिकरै-
र्विमर्दैर्वीराणां जनितजगदत्यद्भुतरसैः।
वियोगो मुग्धाक्ष्याः स खलु रिपुघातावधिरभू-
त्कटुस्तूष्णीं सह्यो निरवधिरयं तु प्रविलयः॥ ४४॥

---

**चलन्तीं** भयवेपिताङ्गीम्। एतच्चोत्प्रेक्षानिमित्तम्। **वहन्** उद्धरन् **अन्तर्व्याकुलविद्युत्** उदरपरिस्फुरत्सौदामिनीकः **अम्बुदः** सजलो मेघः **द्यां** अन्तरिक्षम् **अभ्युदस्थात्** समुत्पपात। आर्यपुत्र अयं तातो व्यापाद्यते। परित्रायस्व परित्रायस्व अहमपह्रिये। आ इति कोपे। **तातप्राणसीतापहारिन्निति**॥ एकापहरणेऽपि त्वं वध्य एव किं पुनरुभयापहरण इति भावः। अयीत्यनुनये। **राक्षसकुलप्रलयकेतो:** निशाचरवंशनाशकारिणः। किंशब्दः क्षेपे। **अद्यापि** इदानीमपि **ते** अपरिमेयमहिम्नः **मन्युविषयः** कोपकारणं नास्त्येवेत्यर्थः। अम्मो उन्मत्तास्मि। अम्मो इति स्मरणे। **उन्मत्ताऽस्मि** विपर्यस्तचित्ताऽस्मि। अये इति विषादे। **अन्य एवेति**॥ पूर्वानुभूताद्विसदृश एवेत्यर्थः। **अयम्** अनुभूयमानः **अधुना** विधिवैलोम्ये **प्रलयः** सीताविनाशः **वर्तते** अनालोचितपरिणामो जायते। व्यतिरेकमेवास्य प्रतिपादयति—**उपायानामिति**॥ सीताप्रत्याहरणकारणानामित्यर्थः। **भावात्** संभवात्। **अविरतविनोदव्यतिकरैः** अविरतः सततानुवृत्तो विनोदव्यतिकरो विनोदकर्म येषु तैः। सीतावृत्तान्तपरिभावनं विनैव कालयापनसमर्थैरित्यर्थः। **विमर्दैः** संप्रहारैः। **वीराणाम्** इन्द्रजिदादीनाम्। कीदृशैरित्यत्राह—**जनितजगदत्यद्भुतरसैः** जनितः समुत्पादितो जगतां

सीता—णिरवधित्ति हा हदह्मि मंदभाइणी।

निरवधिरिति हा हतास्मि मन्दभागिनी।

रामः—हा कष्टम्।

व्यर्थं यत्र कपीन्द्रसख्यमपि मे वीर्यं हरीणां वृथा
प्रज्ञा जाम्बवतो न यत्र न गतिः पुत्रस्य वायोरपि।
मार्गं यत्र न विश्वकर्मतनयः कर्तुं नलोऽपि क्षमः
सौमित्रेरपि पत्त्रिणामविषये तत्र प्रिये क्वासि मे॥ ४५॥

सीता—बहुमाणिदह्मि तं तुह विरहं।

बहुमानितास्मि तं तव विरहम्।

---

सर्वभूतानां अत्यद्भुतो रसो यैः तैः। **वियोगो** विश्लेषः। मुग्धाक्ष्या इत्यनने सीताविलासानां कदाचिदपि हृदयादनपगमेन वियोगस्य नितरामसह्यत्वं व्यज्यते। **सः** पूर्वानुभूतः। **खलुः** प्रसिद्धौ। **रिपुघातावधिः** रिपुघात एवावधिः यस्य सः। **कटुः** उपायशून्यः **तूष्णीं** विनोदरहितं यथा तथा **सह्यः** क्षन्तव्यः। **निरवधिः** अनवसानः **अयं** इदानींतनः। **तु**र्विशेषे। **प्रविलयः** प्रकृष्टो विलयः। प्रत्यापत्तिशून्यः परिभ्रंश इत्यर्थः। मुग्धाक्ष्या इत्यनुषज्यते। निरवधिरिति हा हताऽस्मि मन्दभागिनी। एवं पूर्वापरयोः सीताविश्लेषयोः प्राप्त्युपायविनोदसौख्ययोर्भावाभावाभ्यामत्यन्तवैषम्यमुपपाद्य विधिवैलोम्ये पुरुषप्रयत्नस्यापि नैष्फल्यमनुसंधायाह—**हा कष्टमिति**॥ मे प्रिया तत्र क्वापि हा कष्टमित्यन्वयः। **मे** भागधेयविमुखस्य **प्रिया** प्राणेभ्योऽपि गरीयसी **तत्र** अशक्यप्रत्यानयने देशे **क्वापि** कुत्रापि। ननु सीताप्रत्यानयनाय पुनरपि सुग्रीवेण सख्यं क्रियतामित्यत्राह—**व्यर्थं यत्र कपीन्द्रसख्यमिति**॥ ननु वानरसेनानियोगात् सुग्रीवसख्यस्य फलवत्त्वामित्यत्राह—**वीर्यं हरीणां वृथेति**॥ ननु जाम्बवन्मतानुवर्तनात् कपिसैन्यस्य सीतान्वेषणसामर्थ्यमित्यत्राह—**प्रज्ञा जाम्बवतो न यत्रेति**॥ ननु हनूमतः सागरप्लवनाज्जाम्बवत्प्रज्ञा फलवतीत्यत्राह—**न गतिः पुत्रस्य वायोरपीति**॥ ननु नलसेतुनैव हनूमतः सागरप्लवनं सफलमित्यत्राह—**मार्गं यत्रेति**॥ ननु सौमित्रिपराक्रमादेव सेतुबन्धनमपि प्रयोजनवदित्यत्राह—**सौमित्रेरपीति**॥ अत्र 'व्यर्थं यत्र कपीन्द्रसख्यमपि मे वीर्यं हरीणां वृथा प्रज्ञा जाम्बवतोऽपि नैव न गतिः पुत्रस्य वायोरपि। कर्तुं चापि न विश्वकर्मतनयो मार्गं नलोऽपि क्षमः सौमित्रेरपि पत्त्रिणामविषयस्तत्र प्रिया क्वासि मे॥' इति वक्तव्येऽपि प्रतिवाक्यं यत्रेति पदोपादानं विधेयभूतस्य प्रियानिवासदेशस्य

रामः—सखि वासन्ति, दुःखायैवेदानीं रामस्य सुहृदां दर्शनम्। कियच्चिरं त्वां रोदयिष्यामि। तदनुजानीहि मां गमनाय।

सीता—(सोद्वेगमोहं तमसामाश्लिष्य) भअवदि तमसे, गच्छदि दाणिं अज्जउत्तो। (इति मूर्च्छति।)

भगवति तमसे, गच्छतीदानीमार्यपुत्रः।

तमसा—वत्से समाश्वसिहि समाश्वसिहि। नन्वावामप्यायुष्मतोः कुशलवयोर्वर्षवर्धनमङ्गलानि संपादयितुं भागीरथीपादान्तिकमेव गच्छावः।

सीता—भअवदि, पसीद। खणं वि दाव दुल्लहदंसणं पेक्खामि।

भगवति, प्रसीद। क्षणमपि तावद्दुर्लभदर्शनं पश्यामि।

रामः—अस्त्येवेदानीमश्वमेधसहधर्मचारिणी मे।

सीता—(सोत्कम्पम्) अज्जउत्त, का। आर्यपुत्र, का।

वासन्ती—परिणीतमपि किम्।

रामः—नहि नहि। हिरण्मयी सीताप्रतिकृतिः।

---

नियतप्रतिपत्त्यभावात्। बहुमानिताऽस्मि तं तव विरहम्। **बहुमानिता** बहुमानं कारिता। **तम्** पूर्वानुभूतम्। **दुःखायैवेति** ॥ दुःखमनुभवितुमेवेत्यर्थः। **इदानीम्** अस्यामवस्थायाम्। **रामस्य** दैवोपहतस्य। कर्तरि षष्ठी। **सुहृदां** सीताविस्रम्भसाक्षिभूतानां प्रदेशानाम्। कर्मणि षष्ठी। **कियच्चिरमिति** ॥ न पुनरस्य शोकस्य पर्यवसानं पश्यामीति भावः। **त्वां** सुखदुःखसंविभागिनीम् रोदयिष्यामि। **तत्** तस्मात् **अनुजानीहि** अनुमन्यस्व **मां** पूर्ववृत्तानुस्मरणविवशहृदयम् **गमनाय** इतो गन्तुम्। अत्राधिष्ठितदेशविभागस्यैव विवक्षितत्वात् कर्माभावः। उद्वेगो विरहकातर्यं, मोहः चैतन्यनिमीलनम्। ताभ्यां सह। तमसाशरीरे निजदेहमवष्टभ्य आहेति शेषः। भगवति तमसे गच्छतीदानीमार्यपुत्रः। नन्वित्यनुमतौ प्रश्ने वा। **वर्षवर्धनमङ्गलानीति** ॥ कुशलवयोर्जन्मदिवसविधेयानि ग्रन्थिग्रथनप्रभृतीनि मङ्गलानीत्यर्थः। **भागीरथीपादान्तिकमेव** गोदावरीकूलसंनिहिताया मातुः समीपमेव। भगवति प्रसीद क्षणमपि तावद्दुर्लभदर्शनं पश्यामि। **दुर्लभदर्शनं** यदृच्छालभ्यदर्शनम्। पूर्वसुहृदः प्रदेशान् विहाय गमने कथमिव कालः क्षपयितव्य इत्यत्राह—**अस्त्येवेति** ॥ **इदानीम्** अस्मिन्समये। **अश्वमेधसहधर्मचारिणी** यज्ञनिर्वहणार्थमुपक्लृप्ता पत्नी। उत्कम्पो हृद-

**सीता**—(सोच्छ्वासास्रम्) अज्जउत्त, दाणिं सि तुमम् । अह्महे, ऽक्खदं दाणिं मे परिच्चाअलज्जासल्लं अज्जउत्तेण ।

आर्यपुत्र, इदानीमसि त्वम् । अहो, उत्क्षतमिदानीं मे परित्यागलज्जाशल्यमार्यपुत्रेण ।

**रामः**—तत्रापि तावद्बाष्पदिग्धं चक्षुर्विनोदयामि ।

**सीता**—धण्णा खु सा जा एव्वं अज्जउत्तेण माणिज्जइ । जा अज्जउत्तं विणोदअन्दी आसाणिबन्धणं जादा जीअलोअस्स ।

धन्या खलु सा यैवमार्यपुत्रेण मान्यते । याऽऽर्यपुत्रं विनोदयन्त्याशानिबन्धनं जाता जीवलोकस्य ।

**तमसा**—(सस्मितस्नेहास्रं परिष्वज्य) अयि वत्से, एवमात्मा स्तूयते ।

**सीता**—(सलज्जम्) परिहासिदह्मि भअवदीए ।

परिहासितास्मि भगवत्या ।

**वासन्ती**—महानयं व्यतिकरोऽस्माकं प्रसादः । गमनं प्रति पुनर्यथा कार्यहानिर्न भवति तथा कार्यम् ।

---

यव्यथा । आर्यपुत्र, का । **हिरण्मयी** आकृत्या वर्णतोऽपि तद्बुद्धिजननी । कृतावप्यात्मप्रतिच्छन्दस्यैवाङ्गीकारादुच्छ्वासः । तादृशेऽपि प्रेम्णि विधिवैलोम्यसमालोचनादास्रम् । आर्यपुत्र इदानीमसि त्वम् । आर्यपुत्रशब्दः स्थिरप्रणयित्वादिरूपमर्थमभिसंक्रामति । अम्महे इति हर्षे । उत्क्षतमिदानीं मे परित्यागलज्जाशल्यमार्यपुत्रेण । **उत्क्षतं** उद्धृतम् । **तत्रापि** तस्यामपि । तावच्छब्दोऽल्पार्थे ॥ **दिग्धं** बाष्पपरिक्लिष्टम् । **विनोदयामि** आश्वासयामि । धन्या खलु सा या आर्यपुत्रेणैवं मान्यते । या आर्यपुत्रं विनोदयन्ती आशानिबन्धनं जाता जीवलोकस्य । **धन्या** भाग्यसंपन्ना । खलुरवधारणे । **एवम्** उक्तप्रकारेण **मान्यते** श्लाघ्यते । **आशानिबन्धनम्** आशाकारणम् । स्वप्रतिकृतावन्यबुद्धिमालोच्य स्मितम् । तथाऽपि ईर्ष्याविरहात्स्नेहः । एतादृशस्नेहविवशयोर्विश्लेषदुःखमालोच्यास्रम् । **एवमात्मा स्तूयत इति** ॥ नतु प्रतिकृतिरिति शेषः । परिहासिताऽस्मि भगवत्या । आत्मश्लाघितोद्भावनाद् परिहासः । **महान्** अत्यारूढः **व्यतिकरः** व्यसनम् । 'व्यसनेऽपि व्यतिकरः' इत्यभिधानाद् । अथवा व्यतिकरो व्याकुलीभावः । उत्सवादौ हि बहूनां समवाये संभ्रमवशादन्येन करणीयं यदन्यः करोति तत्करणीयं चेतरः तद्व्यतिकरशब्दनोच्यते । तेन च व्याकुलीभावसामान्यं लक्ष्यते । चित्तव्याक्षेपादिप्रकाशनं फलम् । **अस्माकं** बहुतुष्टयकातराणाम् । पुनर्विशेषे । **आगमनं**

**रामः**—तथास्तु ।

**सीता**—हद्धि पडिऊला दाणिं मे वासन्दी संवुत्ता ।

हा धिक् प्रतिकूलेदानीं मे वासन्ती संवृत्ता ।

**तमसा**—वत्से, एहि गच्छावः ।

**सीता**—एव्वं करेम्ह । एवं करिष्यावः ।

**तमसा**—कथं गम्यते । यस्यास्तव

प्रत्युप्तस्येव दयिते तृष्णादीर्घस्य चक्षुषः ।
मर्मच्छेदपरैर्यत्नैराकर्षो न समाप्यते ॥ ४६ ॥

**सीता**—णमो सुकिदपुण्णजणदंसणिज्जाणं अज्जउत्तचलणकमला-णम् । (इति मूर्च्छति । )

नमः सुकृतपुण्यजनदर्शनीयाभ्यामार्यपुत्रचरणकमलाभ्याम् ।

**तमसा**—वत्से, समाश्वासिहि ।

---

प्रति आगमनं निमित्तीकृत्य । येन वा प्रकारेणास्माकमत्रागमनं कार्यहानिकरं न जायेत तथैव संपादनीयमित्यर्थः । वासन्तीकथनमनुवदति—**तथास्त्विति** ॥ हा धिक् प्रतिकूलेदानीं मे वासन्ती संवृत्ता । **प्रतिकूला** ईप्सितपरिपन्थिनी । आर्यपुत्रगमनप्रोत्साहनादिति भावः । **एहि गच्छाव इति** ॥ कुशलवयोर्जन्मदिनविधेयानि मङ्गलानि संपादयितुमिति शेषः । एवं कुर्वः । **कथं गम्यत इति** ॥ त्वयेति शेषः । भावे यक् । अत्र हेतुं कथयति—**यस्या इति** ॥ यस्याः तव मर्मच्छेदपरैः यत्नैः चक्षुषः आकर्षः न समाप्यते इत्यन्वयः । यच्छब्देन गमनविरोधिधर्मवत्ता परामृश्यते । तव चिरानुभूतप्रियदर्शननिर्वृतायाः **मर्मच्छेदपरैः** शरीरसंधानविशरणमात्रपर्यवसायिभिः **यत्नैः** उद्यमैः **चक्षुषः** नयनगोलकान्तर्वर्तिनस्तैजसस्येन्द्रियस्य **आकर्षः** पृथक्करणम् । दयितशरीरादित्यर्थात् । **न समाप्यते** न पर्यवसीयते । न शक्यत इति यावत् । आप्लृ लम्भन इत्यस्मात् कर्मणि यक् । कीदृशस्येत्यत्राह—**तृष्णादीर्घस्येति** ॥ तृष्णया दर्शनातृप्तिहेतुभूतया दीर्घस्य आयतस्य । नयनगोलकाद्बहिर्निर्गत्य विषयं व्याप्नुवत इत्यर्थः । दुराकर्षतामेवाह—**दयिते प्रत्युप्तस्येवेति** ॥ **दयिते** प्रियतमशरीरे । **प्रत्युप्तस्य** निखातस्य । इवशब्द उत्प्रेक्षायाम् । एवंभूतया त्वया कथं गम्यत इति संबन्धः । नमः सुकृतपुण्यजनदर्शनीयाभ्याम् आर्यपुत्रचरणकमलाभ्याम् । **सुकृतपुण्यजनदर्शनीयाभ्यामिति** ॥ सुकृतपुण्यैः सुष्ठु कृतपुण्यैः जनैः दर्शनीयाभ्यां द्रष्टुं शक्याभ्यामित्यर्थः । इतिशब्द उक्तौ । कियच्चिरं वा मेघा-

**सीता**—(आश्वस्य) केच्चिरं वा मेहन्तरेण पुण्णचन्दस्स दंसणम्।

किय्च्चिरं वा मेघान्तरेण पूर्णचन्द्रस्य दर्शनम्।

**तमसा**—अहो संविधानकम्।

एको रसः करुण एव निमित्तभेदा-
द्भिन्नः पृथक्पृथगिव श्रयते विवर्तान्।
आवर्तबुद्बुदतरङ्गमयान्विकारा-
नम्भो यथा सलिलमेव तु तत्समग्रम्॥ ४७॥

**रामः**—विमानराज, इत इतः।

(सर्वे उत्तिष्ठन्ति।)

**तमसावासन्त्यौ**—(सीतारामौ प्रति)

अवनिरमरसिन्धुः सार्धमस्मद्विधाभिः
स च कुलपतिराद्यश्छन्दसां यः प्रयोक्ता।
स च मुनिरनुयातारुन्धतीको वासिष्ठ-
स्त्वयि वितरतु भद्रं भूयसे मङ्गलाय॥ ४८॥

(इति निष्क्रान्ताः सर्वे।)

छाया नाम तृतीयोऽङ्कः।

---

न्तरेण पूर्णचन्द्रस्य दर्शनम्। लभ्यत इति शेषः। अथ निरतिशयप्रणयब-न्धविवशयोर्निरन्तरसमनुभूतविरहव्यथयोरनयोरन्तरान्तरा समुल्लसितानेकविधान् भावानालोच्य सविस्मयमाह—**अहो इति**॥ संविधानमेव संविधानकम्। जन्मान्तरकृतं कर्मेत्यर्थः। दैवविलसितमिति यावत्। अनयोरित्यर्थात्। कुत इत्यत्राह—**एक इति**॥ **एकः** सततानुवृत्तः **रसः** स्थायित्वेन संभावितः **करुण एव** शोक एव नतु रत्यादिकः। यद्यपि प्रियतमवासन्तीकरिकल-भमयूरादिसंदर्शने तत्र तत्र रत्यादिकः प्रतीयते तथाप्यभिव्यञ्जकविभावादि-सामर्थ्यात् प्रकृत एव करुणस्तत्तदात्मकतां भजते नतु रत्यादिकोऽभिव्यज्यत इत्यर्थः। **निमित्तभेदात्** कारणभेदात् **भिन्नान्** अनेकस्वभावान् **पृथ-गिव** तत्तत्कालसमभिव्यक्तानिव **श्रयते** भजते **विवर्तान्** विकारान्। रत्या-दिभ्रान्तिकारिण इत्यर्थः। उक्तमर्थमुपमानेन स्फुटयति—**आवर्तबुद्बुदत-रङ्गमयानिति**॥ आवर्तस्य जलवेगप्रतिघातो निमित्तं, बुद्बुदस्य तरङ्गप्र-तिघातः, तरङ्गस्य तु वाय्वभिघातः। यथाशब्द उपमानद्योतकः। **सलिलमेव** नतु द्रव्यान्तरम् **समग्रं** सकलम्॥ **विमानराज** विमानवर। इत एहि।

## चतुर्थोऽङ्कः ।

(ततः प्रविशतस्तापसौ ।)

**एकः**—सौधातके, दृश्यतामद्यासन्नभूयिष्ठातिथिजनस्य समधिकारम्भरमणीयता भगवतो वाल्मीकेराश्रमपदस्य । तथाहि ।

---

आरोहामीति शेषः । **सीतारामौ प्रतीति** ॥ आशासाते इति शेषः । तत्प्रकारमेव कथयति—**अवनिरिति** ॥ **अवनिः** सीताप्रसवित्री **अमरसिन्धुः** भगीरथसंबन्धाद्रघुकुलदेवता **अस्मद्विधाभिः** अन्याभिः वनदेवताभिः इतराभिर्नदीभिरिति च । तच्छब्दः प्रकरणादिवैशिष्ट्यात् प्रसिद्धिपरामर्शनद्वारा वाल्मीकिमृषिं परामृशति । चकारः समुच्चये । **कुलपतिः** वैखानसप्रभृतीनामृषीणां भर्ता । **आद्यः** पुरातनः **छन्दसां** अनुष्टुप्प्रभृतीनाम् निखिलशब्दविन्यासावच्छेदकानां, सर्वेषां च वेदानां, **प्रयोक्ता** कर्ता प्रवक्ता च । **सः** रघुकुलाचार्यः । मुनिरिति पूर्वत्राप्यनुषञ्जनीयम् । **अनुयातारुन्धतीक इति** ॥ अरुन्धती चेत्यर्थः । **वितरतु** ददातु । **भद्रं** कल्याणम् । इतरेतरसंघटनासमर्थं पुण्यम् । **भूयसे** उत्कृष्टतमाय । **मङ्गलाय** अनयोरविश्लेषणावस्थानस्य त्रैलोक्यरक्षाहेतुत्वाज्जगदनुग्रहात्मने कल्याणाय । इति रमणीयम् ॥

विचारितः सम्यगुदात्तनायकप्रशान्तगम्भीरकथासमुज्ज्वले ।
मया तृतीयो भवभूतिनाटके मनोहरोऽङ्को रसभावनिर्भरः ॥

॥ इति भावार्थदीपिकाख्यायाम् उत्तररामचरितव्याख्यायां तृतीयोऽङ्कः ॥

॥ अथ चतुर्थोऽङ्कः ॥

अथ विष्कम्भकमुपनिबध्नन्नादौ द्वितीयाङ्कविष्कम्भके सीतापरित्यागस्यारुन्धत्यादीनां संनिधानेऽनुपपत्तिं शङ्कमानां वासन्तीं प्रति ऋश्यश्रृङ्गसत्रे गुरुजनस्तदासीदित्यारभ्य वाल्मीकितपोवनं गत्वा तत्रैव वत्स्याम इतीत्यन्तेन तदुपपत्तिं प्रतिपादयन्त्या आत्रेय्या वचनेन प्रतिपादितं वसिष्ठादीनां वाल्मीकितपोवनप्रवेशं संघटयितुमतीताङ्कावसाने स च कुलपतिरित्यत्र कुलपतिशब्देन सूचितं वाल्मीकिशिष्यप्रवेशमाह—**ततः प्रविशतस्तापसाविति** ॥ **एक इति** ॥ प्रविष्टयोरित्यर्थात् । आहेति शेषः । **सौधातकिः** सुधातुरपत्यम् । अपत्यार्थे इञ् अकङ् चान्तादेशः । **दृश्यतामिति** ॥ त्वयेति शेषः । **आसन्नभूयिष्ठातिथिजनस्य** आसन्नः प्राप्तो भूयिष्ठो महत्तरोऽतिथिजनो यस्मिंस्तस्य । आसन्नभूयिष्ठः प्राप्तप्रायोऽतिथिजनो यस्मिन्निति वा । **समधिकारम्भरमणीयतेति** ॥ प्रतिदिनविधेयाद्व्यतिरिक्तेनारम्भेण पाका-

नीवारौदनमण्डमुष्णमधुरं सद्यःप्रसूतप्रिया-
पीतादभ्यधिकं तपोवनमृगः पर्याप्तमाचामति ।
गन्धेन स्फुरता मनागनुसृतो भक्तस्य सर्पिष्मतः
कर्कन्धूफलमिश्रशाकपचनामोदः परिस्तीर्यते ॥ १ ॥

सौधातकिः—साअदं अणज्झाअकालणाणं अणेअपौराणं साव-सेसभूदजिण्णकुच्छाणं ।

स्वागतमनध्यायकारणानामनेकपौराणां सावशेषभूतजीर्णकूर्चानाम् ।

---

दिकर्मणा रमणीयतेत्यर्थः । **आश्रमपदस्य** तपस्विजननिवासस्थानस्य । उक्तमर्थमुपपादयति—**नीवारेति** ॥ **नीवारौदनमण्डम्** नीवारौदनस्य व्रतिनामुपयोक्तव्यस्यौदनस्य मण्डमवस्रावः । 'सर्वरसाग्रे मण्डमास्त्रियाम्' इत्यमरः । **उष्णमधुरम्** अयातयामत्वेनापरिक्षीणरसम् । **सद्यःप्रसूतप्रियापीतात्** सद्यः तत्क्षणमेव प्रसूतया निजवध्वा पीतात् । कर्मणि क्तः । **अभ्यधिकम्** अवशिष्टम् **तपोवनमृगः** तपोवनभवो मृगः **पर्याप्तम्** आतृप्ति **आचामति** पिबति । अभ्यागतबाहुल्यात्तत्पर्याप्तनीवारतण्डुलपाकादित्यर्थः । न त्वेतावतैव पर्यवसितम् किंत्वपरमपि रमणीयत्वं विद्यत इत्याह—**गन्धेनेति** ॥ कर्कन्धूफलमिश्रशाकपचनामोदः परिस्तीर्यत इति संबन्धः । कर्कन्धूफलमिश्रस्य बदरीफलरसरूषितस्य शाकस्य शाकिन्यादेः पत्रस्य पचनेन य आमोदः सः । यद्यपि कलाशास्त्रे—'मूलपत्रकरीराग्रफलकाण्डास्थिरूढकाः । त्वक् पुष्पं कवचं चेति शाकं दशविधं स्मृतम् ॥' इति शाकस्य बाहुविध्यं प्रतिपादितम् तथापि फलस्य पृथगुपादानादत्र पत्रमेव शाकशब्देन विवक्षितमिति बोद्धव्यम् । **परिस्तीर्यते** स्वयमेव व्याप्नोति । अत्र कर्मणः कर्तृभावेन क्रियानिष्पत्तेर्वेगातिशयो व्यज्यते । कीदृश इत्यत्राह—**सर्पिष्मतः भक्तस्य गन्धेनानुसृत इति** ॥ सर्पिष्मतः सर्पिषि पच्यमानस्य भक्तस्य ओदनस्य गन्धेनानुसृतः । अत्र श्रुतिः—'ब्राह्मणायाभ्यागताय सर्पिष्मदन्नं पचति' इति । अत्र हेतुमाह—**मनाक्स्फुरतेति** ॥ ईषदुन्मीलितेत्यर्थः । कटूम्लरूपेण शाकपचनामोदेनाभिभवात् घृतपायसगन्धस्येषदुन्मीलनम् । यद्यप्येवमखिलातिथिजनसपर्यानिर्वहणपर्याप्तादधिकतरसंपादितोऽत्र संप्रत्यातिथेयसंभारः तथाऽपि कतिपये यदि परमागन्तुका एवावशिष्येरन्निति सप्रमोदमाह—**साअदमिति** ॥ स्वागतमनध्यायकारणानामनेकपौराणां सावशेषभूतजीर्णकूर्चानाम् । **स्वागतं** शोभनमागतम् । भवत्विति शेषः । **हेतु-**

**प्रथमः**—(विहस्य) अपूर्वः कोऽपि बहुमानहेतुर्गुरुषु सौधातकेः।

**सौधातकिः**—भो दण्डाअण, किंणामहेओ एसो दाणिं महन्तस्स थेरीसत्थस्स धुरंधरो अज्ज अदिही आअदो।

भो दाण्डायन, किंनामधेय एष इदानीं महतः स्थविरसार्थस्य धुरंधरोऽद्यातिथिरागतः।

**दाण्डायनः**—धिक्प्रहसनम्। नन्वयमृश्यश्रृङ्गाश्रमादरुन्धतीं पुरस्कृत्य महाराजदशरथधर्मदारानधिष्ठाय भगवान्वसिष्ठः प्राप्तः। तत्किमेवं प्रलपसि।

---

माह—**अनध्यायकारणानामिति** ॥ अध्ययनानर्हस्य कालस्य निमित्तभूतानामित्यर्थः। तथाच याज्ञवल्क्यः—'श्वक्रोष्टुगर्दभोलूकसामबाणार्तनिस्वने। अमेध्यशवशूद्रान्ते श्मशानपतितान्तिके॥ देशेऽशुचावात्मनि च विद्युत्स्तनितसंप्लवे। भुक्त्वार्द्रपाणिरम्भोऽन्तरर्धरात्रेऽतिमारुते॥ पांसुवर्षे दिशां दाहे सन्ध्यानीहारभीतिषु। धावतः पूतिगन्धे च शिष्टे च गृहमागते॥' इति। यमोऽपि—'आगतं चातिथिं दृष्ट्वा नाधीयीतैव बुद्धिमान्। अभ्यनुज्ञापिते तस्मिन्नध्येतव्यं प्रयत्नतः॥' इति। **अनेकपौराणामिति** ॥ अनेके बहवः पौराः परिवारतया येषां तेषाम्। **सावशेषभूतजीर्णकूर्चानामिति** ॥ सावशेषभूता अवशेषसहिताः सन्तो जीर्णकूर्चा येषां तेषाम्। अपरिगृहीतातिथेयैरेव कैश्चिदतिथिजनैः सहितानामित्यर्थः। अयमत्राशयः—आश्रमवासिनामुपाध्यायस्य चास्माकमवशिष्टागन्तुकजनसपर्यासंपादनव्यग्रतया शिष्टानध्यायस्यैवास्य पौष्कल्याद्वटुजनदुर्लभस्वच्छन्दखेलनविनोदस्तावदावयोर्जीयतामिति। अध्ययनकातर्यावगमनाद्विहासः। **अपूर्वः** नूतनः **कोऽपि** निर्देशानर्हः **बहुमानहेतुः** प्रतिपत्तिकारणं **गुरुषु** महत्तरेषु **सौधातकेः** तत्त्वाभिनिविष्टबुद्धेः। गम्भीराक्षेपोऽयम्। भो दाण्डायन किंनामधेय एष इदानीं महतः स्थविरसार्थस्य धुरंधरोऽद्यातिथिरागतः। **किंनामधेय इति** ॥ नामधेयप्रश्नेन परिहासो व्यज्यते। भर्त्सनागर्भमेष इत्यसिनीयोक्तिः। इदानीमित्यनेनानवसरप्राप्तिर्व्यज्यते। **महतः** भूयसः **स्थविरसार्थस्य** वृद्धवर्गस्य **धुरंधरो** नाथः **अद्य** अस्मिन् दिने। धिगिति निन्दायाम्। नन्वित्यनुनये। एष इत्यस्योत्तरम्—**अयमिति** ॥ दर्शनसमय एवास्य महाप्रभावतावगम्यत एवेति भावः। महतः स्थविरसार्थस्य धुरंधर इत्यस्य—**महाराजदशरथधर्मदारानधिष्ठायेति** ॥ इदानीमित्यस्य—**ऋश्यशृङ्गाश्रमादिति** ॥ नच सामान्यातिथिवत् अध्वपरिश्रमापनोदकमातिथेयं

**सौधातकिः**—हुं वसिट्ठो । हुं वसिष्ठः ।

**दाण्डायनः**—अथ किम् ।

**सौधातकिः**—मए उण जाणिदं वग्घो विअ को वा एसोत्ति ।

मया पुनर्ज्ञातं व्याघ्र इव को वा एष इति ।

**दाण्डायनः**—आः, किमुक्तं भवति ।

**सौधातकिः**—जेण परागदमेत्तेण एव्व वराई कल्लोलिआ मह माहेई ।

येन परागतमात्रेणैव वराकी कल्लोलिता मम माहेयी ।

**दाण्डायनः**—समांसो मधुपर्क इत्याम्नायं बहुमन्यमानाः श्रोत्रियायाभ्यागताय वत्सतरीं महोक्षं वा महाजं वा पचन्ति गृहमेधिनः । तं हि धर्मं धर्मसूत्रकाराः समामनन्ति ।

**सौधातकिः**—भो, णिगिहीदोसि । भोः, निगृहीतोऽसि ।

---

लब्धुमयमत्रागत इत्यपादानकथनेन व्यज्यते । **तत्** तस्मात् । किंशब्दः क्षेपे । **प्रलपसि** प्रवदसि । हुमिति भर्त्सने । 'आमन्त्रणे भर्त्सने हुम्' इत्यमरः । मया पुनः ज्ञातं व्याघ्र इव को वा एष इति । आ इति कोपे । **किमुक्तं भवतीति** ॥ अनेन वचनोपन्यासेन त्वया किं समर्थितमित्यर्थः । येन परागतमात्रेणैव वराकी कल्लोलिता मम माहेयी । **येन** यस्मात् कारणात् **परागतमात्रेणैव** आगत्यासनपरिग्रहणात् पूर्वमेव । अनारब्धेऽपि मधुपर्कविधान इत्यवधारणेन द्योत्यते । **वराकी** अशरणा । अप्रतिविधेयतया आपतितक्रूरतरविनिपातेनेति यावत् । **कल्लोलिता** तरलिता । भीतेति यावत् । **माहेयी** गौः । 'माहेयी सौरभेयी गौः' इत्यमरः । तेनैव कारणेन मया व्याघ्र इव को वा एष इति ज्ञातमिति संबन्धः । **समांसो** मांससहितः **मधुपर्कः** अतिथिसत्कारः । इतिशब्दः स्वरूपे । **आम्नायं** वेदम् । मधुपर्को नामातिथिसत्काररूपः स्मार्तः कर्मविशेष इति विष्णुः । **श्रोत्रियायाभ्यागताय** श्रोत्रियातिथये । 'श्रोत्रियंश्छन्दोऽधीत' इति छन्दोऽध्येतरि श्रोत्रियशब्दो निपातितः । **गृहमेधिनः** गृहे मेधा हिंसा येषां ते । तदुक्तम्—'खण्डनी पेषणी चुल्ली उदकुम्भी च मार्जनी । पञ्चसूना गृहस्थस्य ताभिः स्वर्गं न विन्दति ॥' इति । **तम्** आम्नायपठितं मधुपर्कम् । हिशब्दोऽवधारणे । **धर्मसूत्रकाराः** स्मृतिशास्त्रप्रवर्तका मन्वादयः **समामनन्ति** सम्यक्स्मरन्ति । भोः निगृहीतोऽसि ।

**दाण्डायनः**—कथमिव ।

**सौधातकिः**—जेण आअदेसु वसिट्ठमिस्सेसु वच्छदरी विससिदा । अज्ज एव्व पच्चाअदस्स राएसिणो जणअस्स भअवदा वम्मीइणा दहिमहूहिं एव्व णिव्वत्तिदो महुवक्को । वच्छदरी उण विसज्जिदा ।

येनागतेषु वासिष्ठमिश्रेषु वत्सतरी विशासिता । अद्यैव प्रत्यागतस्य राजर्षेर्जनकस्य भगवता वाल्मीकिना दधिमधुभ्यामेव निर्वर्तितो मधुपर्कः । वत्सतरी पुनर्विसर्जिता ।

**दाण्डायनः**—अनिवृत्तमांसानामेवमृषयो मन्यन्ते । निवृत्तमांसस्तु

---

भो इति दर्पे । **निगृहीतोऽसि** खण्डिताहंकारोऽसि । पराजितोऽसीति यावत् । तदुक्तं तार्किकरक्षायाम्—'अखण्डिताहंकृतिना पराहंकारखण्डनं निग्रहः' इति । कथमिति प्रश्ने । इवशब्दो वाक्यालंकारे । येन आगतेषु वासिष्ठमिश्रेषु वत्सतरी विशसिता अद्यैव प्रत्यागतस्य राजर्षेर्जनकस्य भगवता वाल्मीकिना दधिमधुभ्यामेव निर्वर्तितो मधुपर्कः वत्सतरी पुनर्विसृष्टा । यतः किल भगवता वाल्मीकिनाऽद्यैवात्रागतस्यान्यस्यातिथेर्बद्धां वत्सतरीं विसृज्य दधिमधुभ्यामेव मधुपर्कः कृतः । अतः कारणादतिथिपूजने 'वत्सतरीं महोक्षं वा महाजं वा पचन्ति गृहमेधिन' इति प्रतिज्ञातस्य हानिसंभवात्प्रतिज्ञाहानिरिति प्रोक्तं निग्रहस्थानं तव बलादापतितमित्यर्थः । ननु स्वेनैव पूर्वमुक्तस्य पुनस्त्यागे हि प्रतिज्ञाहानिरिति प्रोक्तं निग्रहस्थानं, नतु येन केनापि प्रकारेण । तथा चास्य लक्षणमुक्तं तार्किकरक्षायाम्—'कथायां यच्च पक्षादि येन निर्दिष्टमादितः । तस्य तेन पुनस्त्यागः प्रतिज्ञाहानिरुच्यते ॥' इति । अतः कथमत्रोक्तनिग्रहस्थानापत्तिरिति चेदुच्यते—अनभिज्ञोऽसि नूनं काव्यव्यवहाराणाम् । न खलु रसप्रधानेषु निबन्धनेषु केवलशास्त्रीयव्यवहारो युक्तः । तद्गन्धेन तु कथनं रसावहम् । यथा खल्वनुमानादौ काव्यालंकारे केवलशास्त्रीयसाध्यसाधनादिनिर्देशस्य चमत्कारकारित्वाभावात् कविकल्पितस्यैवोपादानम् । अतोऽत्र वृत्तवर्तिष्यमाणकथांशसंघटनात्मके वाल्मीकिशिष्यसंलापे विजिगीषुकथाप्रसिद्धनिग्रहस्थानोद्भावनं परिहीणतल्लक्षणमपि हास्यरसं पुष्णाति । स च कौसल्यादीनामितरेतरसंदर्शनोपबृंहितस्य विप्रलम्भश्रृङ्गारतया परिणंस्यतः प्रबन्धव्यापिनः करुणस्यैवाङ्गभावमापद्यत इति कुशाग्रीयधिषणक्षोदनीयमिति विमलमतिभिः सहृदयैः सम्यगनुसंधेयमित्यास्तां तावत् । प्रकृतमनुसरामः । न खलु जनकपरिपूजने वत्सतरीविशसनाभावेन मम प्रतिज्ञाहानिरित्याह—**निवृत्तमांसानामिति** ॥

तत्रभवान् जनकः ।

**सौधातकिः**—किंणिमित्तम् । किंनिमित्तम् ।

**दाण्डायनः**—स तदैव देव्याः सीतायास्तादृशं दैवदुर्विपाकमुपश्रुत्य वैखानसः संवृत्तः । तथास्य कति वत्सराश्चन्द्रद्वीपे तपस्तप्यमानस्य ।

**सौधातकिः**—तदो किंति आअदो । ततः किमित्यागतः ।

**दाण्डायनः**—चिरंतनप्रियसुहृदं प्राचेतसं द्रष्टुम् ।

**सौधातकिः**—अवि अज्ज संबन्धिणीहिं समं णिउत्तं से दंसणं ण वेत्ति ।

अप्यद्य संबन्धिनीभिः समं निर्वृत्तमस्य दर्शनं न वेति ।

**दाण्डायनः**—संप्रत्येव भगवता वसिष्ठेन देव्याः कौसल्यायाः सकाशं भगवत्यरुन्धती प्रहिता । यथा स्वयमुपेत्य स्नेहादयं द्रष्टव्य इति ।

**सौधातकिः**—जह सव्वे एदे ठविरा परप्परं मिलिदा, तह अह्मे

---

निवृत्तं वार्जितं मांसं यैः तेषाम् । **एवम्** उक्तप्रकारेण । **ऋषयः** धर्मशास्त्रकारा **मन्यन्ते** स्मरन्ति । **निवृत्तमांसस्त्विति** ॥ तुशब्दोऽन्येभ्यो व्यतिरेकं द्योतयति । किंनिमित्तम् । **सः** जनकः **तदैव** दुर्विपाकश्रवणसमय एव **देव्याः** असंभावनीयपापपरिणतेः **सीतायाः** आजानपावनायाः **तादृशम्** असदृशं **दैवदुर्विपाकम्** दैवस्य जन्मान्तरकृतस्य कर्मणः दुर्विपाकं दुष्टविपाकं फलम् परित्यागमित्यर्थः । **वैखानसः संवृत्तः** वैखानसव्रतपरो जातः । **तथा** वैखानसव्रतपरतया **अस्य** जनकस्य कति वत्सराः । अतीता इति शेषः । ननु स्वल्पसंख्या गणनार्हा इति काका प्रकाश्यते । **चन्द्रद्वीपे** चन्द्रसंज्ञके द्वीपे । **तपस्तप्यमानस्येति** ॥ तपस्तपःकर्मकस्यैवेति यक् । तप आर्जयत इत्यर्थः । **ततः** तर्हि चन्द्रद्वीपादिति वा । **किमिति** किमर्थम् । इतिर्हेतौ । **चिरंतनप्रियसुहृदं** चिरंतनं प्रियसुहृदम् । बाल्यादेवारभ्यातिस्निग्धं सखायम् । अप्यद्य संबन्धिनीभिः समं निर्वृत्तमस्य दर्शनं न वेति । अपिशब्दः प्रश्ने । **संबन्धिनीभिः** सीताश्वश्रूभिः **निर्वृत्तं** अतिक्रान्तम् **अस्य** जनकस्य । वाशब्दो विकल्पे । इतिशब्दो मनने । त्वया किं ज्ञातमित्यर्थः । **प्रहिता** प्रेषिता । **स्वयमुपेत्येति** ॥ नियोगवचनमन्तरेणापि जनकसकाशं गत्वेत्यर्थः । इतिर्हेतौ । यथा सर्वे एते स्थविराः परस्पर-

वि वडुहिं सह मिलिदा अणज्झाअमहूसवं खेलन्ता माणेह्म । अह कहिं सो जणओ ।

यथा सर्व एते स्थविराः परस्परं मिलिताः, तथावामपि वटुभिः सह मिलितावनध्यायमहोत्सवं खेलन्तौ मानयावः । अथ कस्मिन् स जनकः । (इति परिक्रामतः ।)

**दाण्डायनः**—तदयं प्राचेतसवसिष्ठावुपामन्त्र्याश्रमाद्बहिर्वृक्षमूले तिष्ठति । य एषः

हृदि नित्यानुषक्तेन सीताशोकेन तप्यते ।
अन्तःप्रदीप्तदहनो जरन्निव वनस्पतिः ॥ २ ॥

(इति निष्क्रान्तौ ।)

इति मिश्रविष्कम्भः ।

---

मिलिताः तथा आवां हि वटुकैः समं मिलितौ अनध्यायमहोत्सवं खेलन्तौ मानयावः । यथाशब्दः प्रकारे । एत इत्यभिनीयोक्तिः । **स्थविराः** परिणतवयसः । **परस्परमिलिताः** इतरेतरयोगसंतुष्टाः । **तथा** अविकलमेव । **आवां** त्वमहं च । **वटुकैः** अनध्यायलाभसंतुष्टैः **मिलितौ** परिवृतौ **अनध्यायमहोत्सवं** स्वाच्छन्द्यसमुचितकालम् । आनन्दहेतुत्वादुत्सव इत्यध्यवसायः । **खेलन्तौ** क्रीडन्तौ । 'क्रीडा खेला च कुर्दनम्' इत्यमरः । इतिशब्द उक्तौ । अथशब्दः प्रश्ने । **कस्मिन्निति** ॥ प्रदेश इति शेषः । **सः** वैखानसव्रतमवलम्ब्य चन्द्रद्वीपादिहागतः । **तत्** तर्हि । यदि जनकवृत्तं पृच्छसि तर्हि तदपि कथयामीत्यर्थः । **अयं** जनकः **प्राचेतसवसिष्ठौ** चिरंतनप्रियसुहृदौ **उपामन्त्र्य** रहस्यालापं कृत्वा **आश्रमाद्बहिः** मुनिजननिवासाद्दूरे **वृक्षमूले** कस्मिंश्चित्तरुमूले । वैखानसव्रतसमुचिते स्थान इत्यर्थः । तदुक्तमादिकविना—'हस्तादानो मुखादानो नियतो वार्क्षमूलिकः । वानप्रस्थो भविष्यामि अदृष्ट्वा जनकात्मजाम् ॥' इति । **तिष्ठति** ध्यानमूकोऽवतिष्ठत । उक्तमर्थमुपपादयति—**य इति** ॥ यः एष हृदि नित्यानुषक्तेन सीताशोकेन तप्यते इति संबन्धः । **हृदीति** ॥ नतु बाहिर्लक्षयितुं शक्यत इत्यर्थः । **नित्यानुषक्तेन** सततानुवृत्तेन **सीताशोकेन** सीतानिमित्तेन शोकेन **तप्यते** प्रदहति । कर्मकर्तरि यक् । उपमानेन चैतत्स्फुटयति—**अन्तरिति** ॥ कोटराभ्यन्तर इत्यर्थः । **प्रदीप्तदहनः** प्रज्वलद्दावपावकः **जरन्** पुराणः **वनस्पतिः** वृक्षः । अत्र धर्माणां बिम्बप्रतिबिम्बतयोपादानाद्वाक्यार्थोपमा ॥ इति विष्कम्भकः ॥ अथ तापसपरिसूचितं जनकप्रवेशं कथयति—**तत इति** ॥ **अपत्य इति** ॥ मे मन्युः न विरमति इत्यन्वयः । **मे** संसारायाथार्थ्य-

(ततः प्रविशति जनकः ।)

जनकः—

अपत्ये यत्तादृग्दुरितमभवत्तेन महता
विषक्तस्तीव्रेण व्रणितहृदयेन व्यथयता ।
पटुर्धारावाही नव इव चिरेणापि हि न मे
निकृन्तन्मर्माणि क्रकच इव मन्युर्विरमति ॥ ३ ॥

भोः कष्टम् । एवं नाम जरसा दुःखेन च दुरासदेन भूयः पराकसांतपनप्रभृतिभिस्तपोभिः शोषितान्तःशरीरधातोरनुपस्तम्भन एव महानद्यापि मम दग्धदेहो न पतति । अन्धतामिस्रा ह्यसूर्या नाम

---

मवगच्छतोऽपि मन्युः दुःखं न विरमति नोपशाम्यति । हिरवधारणे । केवलं न विरमति प्रत्युत वर्धते इत्यवधारणेन द्योत्यते । नन्वभिलषितविनाशजनितः शोकः कस्यापि न विरतिमुपयायादित्यत्राह—चिरेणापीति ॥ ननु कालवशात् सहनीयं भवेदेवेत्यत्राह—नव इवेति ॥ नवत्वे हेतुमाह—विषक्त इति ॥ विषक्तो विशेषेण सक्तः बद्ध इत्यर्थः । हृदीत्यर्थात् । ननु मूढजनस्येव कथमस्य हृदि मन्युर्निबध्नीयादित्यत्राह—महतेति ॥ ननु तादृशे हृदि किं मन्युं जनयेदित्यत्राह—तीव्रेणेति ॥ तीव्रतामुपपादयति—व्रणितहृदयेनेति ॥ व्रणितं व्रणवत्कृतं हृदयं येन तेन । विन्मतोर्लुगिति मतोर्लुकि तत्करोतिणितजन्तात् क्तः । अत्र ज्ञापककारणमाह—व्यथयतेति ॥ तच्छब्दाकांक्षितमर्थमाह—अपत्य इति ॥ अपत्यशब्देन तद्विपत्तिर्मुनेरपि प्रक्षोभदायिनीति व्यज्यते । तादृक् असंभावनीयतया वागिन्द्रियाविषयम् । अनेन यच्छब्दार्थं किंचिद्विवृणोति—दुरितं पापम् । परित्यजनमित्यर्थः । अत्र पातकवाचिना दुरितशब्देन तत्कार्यभूतं परित्यजनं लक्ष्यते । अशक्यप्रतिविधानताप्रकाशनं फलम् ॥ अभवत् अतर्कितोपनतम् । उपमानेन चैतत्स्फुटयति—क्रकच इवेति ॥ क्रकचशब्देन शस्त्रान्तराभेद्यस्य तरोः सारतरमर्मावभेदकोऽयोविकारः कथ्यते । क्रकचः करपत्रं स्यादित्यमरः । अत्र साधारणधर्मानाह—पटुरित्यादिना ॥ पटुः अनवरतं स्फुटप्रकाशः कठिनाभिघातेऽप्यकुण्ठश्च । धारावाही सततानुवृत्तः निशाताश्रिश्च । मर्माणि कृन्तन् जीवितनिवासस्थानान्युच्छिन्दन् अभेद्यांशविदारकश्च । भो इति खेदे । कष्टमिति कृच्छ्रे । कृच्छ्रतां प्रतिपादयति—एवमिति ॥ नाद्यापि दग्धदेहः पतति इति संबन्धः । एवमिति वक्ष्यमाणम् । नामेति कुत्सायाम् । दग्धदेहः पतनार्हतायामपि तदभावात् गर्ह्यत्वम् ।

ते लोकाः प्रेत्य येभ्यः प्रलीयन्ते य आत्मघातिन इत्येवमृषयो मन्यन्ते। अनेकसंवत्सरातिक्रमेऽपि प्रतिक्षणपरिभावनास्पष्टनिर्भासः प्रत्यग्र इव न मे दारुणो दुःखसंवेगः प्रशाम्यति। अयि मातः देवयजनसंभवे देवि सीते, ईदृशस्ते निर्माणभागः परिणतः, येन लज्जया स्वच्छन्दमाक्रन्दितुमपि न शक्यते। हा पुत्रि,

अनियतरुदितस्मितं विराज-
त्कतिपयकोमलदन्तकुड्मलाग्रम्।
वदनकमलकं शिशोः स्मरामि
स्खलदसमञ्जसमञ्जुजल्पितं ते ॥ ४ ॥

---

पतनार्हतामुपपादयति—**जरसेति** ॥ तामेवोपोद्बलयति—**दुरादसेन दुःखेन चेति** ॥ कारणान्तरमप्याह—**भूय इति** ॥ पराको मासोपवासः। सान्तपनं नाम कृच्छ्रम्। प्रभृतिशब्देन च षष्ठकालाशनादयो गृह्यन्ते। ननु तपस्विनां देहः सुचिरकालावस्थायीत्यत्राह—**अनुपस्तम्भन इति** ॥ उपस्तम्भनं नाम कदल्यादेराश्रयदानार्थमान्तिकनिखातस्तरुकाण्डः। तेन च पतनप्रतिबन्धकसामान्यं लक्ष्यते। तर्हि गरोपयोगादिना देहं पात्यतामित्यत्राह—**अन्धतामिस्रा इति** ॥ ज्योतिर्विरहिता इत्यर्थः। एतदेवाह—**असूर्या इति** ॥ **प्रेत्य** मृत्वा। **येभ्यः** उक्तरूपेभ्यः। क्रियार्थेत्यादिना चतुर्थी। यान् लोकाननुभवितुमित्यर्थः। **प्रलीयन्ते** संश्लिष्यन्ति। तत्रत्यभूतसंघातात्मकतया परिणमन्तीत्यर्थः। तद्वासिनो जायन्त इति यावत्। **ऋषयः** धर्मशास्त्रकाराः **मन्यन्ते** स्मरन्ति। तद्वृथा मा विषीदः पर्यवस्थापय हृदयमित्यत्राह—**अनेकेति** ॥ **प्रतिक्षणपरिभावनास्पष्टनिर्भास इति** ॥ प्रतिक्षणं प्रसरन्त्या परिभावनया चिन्तया स्पष्टनिर्भासः स्फुटः प्रकाशो यस्य सः। **दुःखसंवेगो** दुःखातिशयः **न प्रशाम्यति** विरतो न भवति। ननु परिदेवनादयो दुःखप्रशमनोपाया अपि सन्तीत्यत्राह—**अयीत्यादि** ॥ **मातः** अस्मत्कुलवैशिष्ट्यकारिणि **देवयजनसंभवे** क्रतुवरफलभूते **सीतादेवि** अगर्भसंभवमहिते। **ईदृशः** असंभावनीयः **ते** पुण्यशीलायाः **निर्माणभागः** जननान्तरादृष्टविशेषः **परिणतः** अनुभव्यतां प्राप्तः। असंभावनीयतामेवाह—**येनेति** ॥ यादृशेनेत्यर्थः। **लज्जया** अपत्रपया **स्वच्छन्दं** निःशङ्कम् **आक्रन्दितुमपि** विलपितुमपि। अपिशब्दाद्वृत्त्यन्तराभावो द्योत्यते। **न शक्यते** लब्धावसरो न भवेयम्। तर्हि तत्स्मरणं विनैव जोषमास्स्वेत्यत्राह—**हा पुत्रीति** ॥ हेति विषादे। **पुत्रि** मदङ्कपरिवर्धिते। **अनियतेति** ॥ ते

भगवति वसुंधरे, सत्यमतिदृढासि ।

त्वं वह्निर्मुनयो वसिष्ठगृहिणी गङ्गा च यस्या विदु-
र्माहात्म्यं यदि वा रघोः कुलगुरुर्देवः स्वयं भास्करः ।
विद्यां वागिव यामसूत भवती शुद्धिं गतायाः पुन-
स्तस्यास्त्वद्दुहितुस्तथा विशसनं किं दारुणेऽमृष्यथाः ॥ ५ ॥

---

वदनकमलकं स्मरामि इति संबन्धः । ते निजोदयपरिष्कृतयजनभूमेः **वदनकमलकं** वदनमेव कमलकम् । स्वार्थे कः अनुकम्पायामल्पार्थे वा । **स्मरामि** स्मृतिचक्षुषावलोकयामि । स्मर्तव्यताहेतुमाह—**शिशोरिति** ॥ **अनियतरुदितस्मितम्** अनियते निमित्ताभावादव्यवस्थिते रुदितस्मिते यस्मिंस्तत । ततः किमस्यायातमित्यत्राह—**विराजत्कतिपयकोमलदन्तकुड्मलाग्रमिति** ॥ विराजतां विशेषेण राजतां दीप्यतां कतिपयानामसकलानाम् अत एव कोमलानां दन्तकुड्मलानामग्राणि यस्मिंस्तत् । रुदितास्मितयोरत्यन्तशोभावहमित्यर्थः । पुनरपि हृदयहारित्वे कारणमाह—**स्खलदसमञ्जसमञ्जुजल्पितमिति** ॥ स्खलत् असमग्रवाक्यं, असमञ्जसम् अस्फुटवर्णविभागम्, अत एव मञ्जु श्रवणरसायनं जल्पितं यस्मिंस्तत् । एवमात्मनः सीताशैशवावस्थास्मरणविहस्ताशयतामालोच्य तन्मातुरपि भूमेः तद्विरहिततां स्वबुद्ध्यैवोत्प्रेक्ष्य सविषादमेव तामुपालभते—**भगवतीति** ॥ तथाविधानिजतनयाविपत्तावपि निर्विकारतादर्शनादाक्षेपगर्भो भगवच्छब्दनिर्देशः । **वसुन्धरे** दिव्यरत्नप्रसविनि **सत्यमतिदृढाऽसि** नियतमेव कठिनतरहृदयासि । ननु रूढिवशात्त्वयि स्थिरा सर्वंसहेत्यादिसंज्ञाः प्रवर्तन्ते । अपितु योगादेवेत्यर्थः । अत्र हेतुमाह—**त्वमित्यादि** ॥ त्वं तस्या दुहितुः तथा विशसनं किममृष्यथा इति संबन्धः । **त्वं** सीताजनयित्री **तस्याः** लोकातिक्रान्तगुणगणमाहितायाः **दुहितुः** गुणविरहेऽपि स्नेहकातर्यसमुचितायाः **तथा** अतिकष्टतया **विशसनं** प्राणान्तिकविनिपातम् । **किममृष्यथाः** कथं क्षान्ता भवसि । ननु क्षन्तुं शक्येत्याह—**त्वमित्यादि** ॥ यस्याः माहात्म्यं त्वं वह्निः मुनयः वसिष्ठगृहिणी गङ्गा च विदुः इति संबन्धः । **मुनयः** अगस्त्यभरद्वाजादयः । **विदुः** जानीयुः । नेतरे पृथग्जना इति परिगणनसामर्थ्यादवगम्यते । **यदिवेति** प्रकृतान्यथात्वे निपातसमुदायः । यद्येतेभ्योऽन्यः कश्चिज्जानीयात्तर्हि निखिलकर्मसाक्षी भगवान् साक्षाद्विवस्वानेवेत्याह—**रघोरिति** ॥ यद्यपीयमेवंविधा तथाऽपि किमस्या भूमेरित्यत्राह—**विद्यामिति** ॥ **वागिव** अकृतकवाणीव । **याम्** इतरमहिलाजनपरिगणनानर्हाम् । **असूत** प्रसूतवती । ततोऽपि प्रकृष्टतामाह—**पुनरिति** ॥ विशेषेणेत्यर्थः । **शुद्धिं गतायाः** अग्निप्रवेशपरिपू-

(नेपथ्ये)

इत इतो भगवतीमहादेव्यौ।

जनकः—अये, गृष्टिनोपदिश्यमानमार्गा भगवत्यरुन्धती। (उत्थाय) कां पुनर्महादेवीत्याह। (निरूप्य) हा हा, कथमियं महाराजदशरथस्य धर्मदाराः प्रियसखी मे कौसल्या। क एतां प्रत्येति सैवेयमिति।

आसीदियं दशरथस्य गृहे यथा श्रीः
श्रीरेव वा किमुपमानपदे न सैषा।
कष्टा दशा यदिह दैववशेन जाता
दुःखात्मकं किमपि भूतमहो विपाकः ॥ ६ ॥

---

तायाः। मर्षणहेतुमाह—**दारुण इति** ॥ यत एवंभूता अतस्त्वमतिदृढासीति संबन्धः। अथाङ्कमध्येऽपि चूलिकां योजयंस्त्वं वह्निरित्यादौ वसिष्ठगृहिणी-शब्देन सूचितमरुन्धतीप्रवेशं कथयति—**नैपथ्य इति** ॥ अत्रारुन्धतीकौसल्ययोः प्रवेशस्य यवनिकान्तरगतेन कञ्चुकिना सूचितत्वाच्चूलिका। अये इति स्मरणे। **कां पुनरिति** ॥ पुनश्शब्दो वाक्यालंकारे। **निरूप्येति** ॥ महादेवीशब्दवाच्या भगवत्यारुन्धत्या सहागतेयं का वा स्यादिति सम्यगवलोक्येत्यर्थः। हा हेति विषादातिशयात्। महाराजदशरथस्येत्यनेन चक्रवर्तिगृहिणीभावौचित्यं व्यज्यते। धर्मदारशब्देन गृहस्थसमयोचिताचारप्रवणता। प्रियसखीत्यनेन च भर्तृबन्धुषु सुहृद्भावेन वर्तितव्यमिति प्रतिपादितधर्मपरतया पतिदेवताकुलमौलिता। किंशब्दः क्षेपे। **एताम्** एवंभूतां कौसल्याम् **प्रत्येति** प्रत्यभिजानाति। न कोऽपीत्यर्थः। **सैवेयमिति** प्रत्यभिज्ञास्वरूपकथनम्। इतिशब्दः प्रकारे। कुतः पुनरप्रत्याभिज्ञेयतेत्यत्राह—**आसीदिति** ॥ इयं दशरथस्य गृहे आसीदिति संबन्धः। **इयम्** अतिशोचनीयतयेदानीं पुरतो दृश्यमाना **दशरथस्य** चक्रवर्तिकुलोद्भवस्य राज्ञः **गृहे** निखिलसंपत्परिपूर्णे हर्म्ये **आसीत्** अवर्तत। कथमित्यत्राह—**यथा श्रीरिति** ॥ निखिलसंपदधिदेवताभूता महालक्ष्मीरिवेत्यर्थः। ननु उपमायां साधर्म्यमात्रमेव स्यादित्यत्राह—**श्रीरेवेति** ॥ वाशब्दो विकल्पे। किंशब्द उत्प्रेक्षायाम्। नन्वध्यवसाये तदेकताप्रतीतिहेतुभूतस्योपमानधर्मस्योपमेयेऽपि प्रतीतेरत्र खलाश्रयणचाञ्चल्यादयो दोषा अपि प्रतीयेरन्नित्यत्राह—**उपमानपद इति** ॥ उपमानस्थान इत्यर्थः। **सा** तथाविधाऽपि सती **एषा** श्रीः। लक्ष्म्याः कौसल्यायाश्च मिथ उपमानोपमेयभावकल्पनं अत्यन्तमसमीचीनमित्यर्थः। इह

अयमपरः पापो विपर्यासः।

य एव हि जनः पूर्वमासीन्मूर्तो महोत्सवः।
क्षते क्षार इवासह्यं जातं तस्यैव दर्शनम् ॥ ७ ॥

(ततः प्रविशत्यरुन्धती कौसल्या कञ्चुकी च।)

**अरुन्धती**—ननु ब्रवीमि द्रष्टव्यः स्वयमुपेत्य वैदेह इत्येष वः कुलगुरोरादेशः। अत एवाहं प्रेषिता। तत्कोऽयं पदे पदे महाननध्यवसायः।

**कञ्चुकी**—देवि, संस्तभ्यात्मानमनुरुध्यस्व भगवतो वसिष्ठस्यादेशमिति विज्ञापयामि।

**कौसल्या**—ईरिसे काले मिहिलाहिवो मए दट्ठव्वो त्ति समं

---

दैववशेन कष्टा दशा जाता यत् तद्दुःखात्मकं किमपि भूतमिति संबन्धः। **इह** एवंभावे सति। लक्ष्मीमप्यतिशय्य वर्तनौचित्येऽपीत्यर्थः। **दैववशेन** जन्मान्तरादृष्टपरिणामबलेन **कष्टा** असंभावनीया। **दुःखात्मकं** दुःखैकरसं **किमपि** अनिर्वाच्यं वस्तु **भूतं** जातम्। कथं नाम चेतनादृष्टपरिपाकाः परिच्छेत्तव्या इत्यत्राह—**अहो इति**॥ **विपाकः** अनुभवपथमापन्नं जन्मान्तरकृतसुकृतदुष्कृतफलम्। अयमिति वक्ष्यमाणपरामर्शः। **अपरः** प्रकृतादतिशयितः **पापः** कष्टतरः **विपर्यासः** परिवृत्तिः। न केवलमवस्थायाः वस्तुस्वभावस्यापि अन्यथात्वं जातमित्यर्थः। तत्तु कीदृशमित्यत्राह—**य एवेति**॥ अवधारणेन विपर्यासानौचित्यं व्यज्यते। हिशब्दोऽनुभवस्यानन्यथाभावमवगमयति। सामान्यवाची जनशब्दोऽत्र विशेषे पर्यवस्यति। **पूर्वं** जानकीसंनिधाने **मूर्तः** नयनग्राह्यः। **महोत्सव इति**॥ कारणे कार्यव्यपदेशः। क्षते क्षार इत्यनेन कौसल्यादर्शनमिदानीं प्रकृतामेव सीतापरित्यागव्यथामुपोद्बलयतीति द्योत्यते। नन्वित्यनुनये। **द्रष्टव्यः** द्रष्टुं योग्यः। स्वयंशब्देन जनकेच्छाविरहेऽप्यावश्यकता द्योत्यते। **गत्वा** सादरमुपेत्य। इतिशब्दः प्रकारे। कुलगुरोरित्यनेनानतिलङ्घनीयता कथ्यते। **अत एव** स्वयमुपगमनार्थमेव **अहं** स्वामिमतानिर्वाहयित्री **प्रेषिता** प्रहिता। **तत्** तस्मात्। किंशब्दः क्षेपे। **अयं** अनवसरप्रवृत्तः **पदे पदे** प्रातिक्षणं प्रतिपदविन्यासमिति वा **महान्** चिकीर्षितप्रतिबन्धी **अनध्यवसायः** करणीयकरणकातर्यम्। **देवि** उचितज्ञे **संस्तभ्य** स्थिरीकृत्य **आत्मानं** मानसम् **अनुरुध्यस्व** आद्रियस्व **भगवतः** अविचारणीयशासनस्य **वसिष्ठस्य** कुलगुरोः **आदेशं** नियोगम्। ईदृशे काले मिथिलाधिपो मया द्रष्टव्य इति सममेव सर्वदुःखानि समवतरन्ति। न शक्नो-

एव्व सव्वदुक्खाइं समोदरन्ति । ण सक्कणोमि उव्वट्टमाणमूलब-न्धणं हिअअं पज्जवत्थावेदुम् ।

ईदृशे काले मिथिलाधिपो मया द्रष्टव्य इति सममेव सर्व-दुःखानि समवतरन्ति । न शक्नोम्युद्वर्तमानमूलबन्धनं हृदयं पर्यवस्थापयितुम् ।

अरुन्धती—अत्र कः संदेहः ।

संतानवाहीन्यपि मानुषाणां
दुःखानि सद्बन्धुवियोगजानि ।
दृष्टे जने प्रेयसि दुःसहानि
स्रोतःसहस्रैरिव संप्लवन्ते ॥ ८ ॥

कौसल्या—कहं वच्छाए वहूए पिदुणो एव्वंगदस्स राएसिणो मुहं दंसेह्म ।

कथं वत्साया वध्वाः पितुरेवंगतस्य राजर्षेर्मुखं पश्यामः ।

---

मि उद्वर्तमानमूलबन्धनं हृदयं पर्यवस्थापयितुम् । **ईदृशे** वधूविनिपातकृच्छ्र-यापनीये **काले** दुर्निवारबले । अत्र मिथिलाधिपशब्दो मुख्यार्थस्यानुपयोगात् सीतापितृत्वदशरथसुहृत्त्वादिरूपेऽर्थेऽभिसंक्रामति । **मया** सीताश्वश्र्वा **द्रष्टव्यः** अपरिहार्यदर्शनः । इति हेतौ । **सममेव** युगपदेव **सर्वदुःखानि** भर्तृविना-शजादीन्यपि **समवतरन्ति** अनुभवपथमवगाहन्ते । **उद्वर्तमानमूल-बन्धनं** उद्वर्तमानं विपरिवर्तमानं मूलबन्धनं यस्य तत् । व्यत्यस्तपूर्वसंनि-वेशमित्यर्थः । **पर्यवस्थापयितुं** पूर्वसंस्थानं प्रापयितुम् । स्थिरीकर्तुमिति यावत् । कौसल्याकथितमनुवदति—**अत्रेति** ॥ अस्मिन् विषय इत्यर्थः । **संदे-हो** विकल्पः । कस्यापि न विमतिरित्यर्थः । कुत इत्यत्राह—**सन्तानवा-हीनीति** ॥ संतानतया अविच्छेदेन वाहः प्रसरणं येषां तानि । अपिर्विरोधे । **मानुषाणां** अविस्मरणीयसौहृदवृत्तानां **दुःखानि** रजोविकाराणि चित्तपरि-स्पन्दनानि **सद्बन्धुवियोगजानि** पुत्रादिविनाशजनितानि । **दृष्टे** यदृच्छया नयनगोचरतां प्राप्ते **जने** संबन्धिनि **प्रेयसि** अतिस्निग्धे । **दुस्सहानीति** हेतुगर्भं विशेषणम् । **स्रोतस्सहस्रैरिव** बह्वीभिः प्रणालीभिरिव । प्रवाहवा-चिना स्रोतश्शब्देन तन्मार्गा लक्ष्यन्ते । **संप्लवन्ते** प्रवहन्ति । कथं वत्साया वध्वाः पितुरेवंगतस्य राजर्षेर्मुखं पश्यामः । कथं वत्साया वध्वाः पितुः मुखं पश्याम इति संबन्धः । कथमिति वितर्के । **वत्सायाः** मदङ्कपरिवर्धितायाः **वध्वाः** पुत्रगृहिण्याः **पितुः** कल्याणयोजनव्यसनिनः **मुखं** तनयाप-

अरुन्धती—

एष वः श्लाघ्यसंबन्धी जनकानां कुलोद्वहः।
याज्ञवल्क्यो मुनिर्यस्मै ब्रह्मपारायणं जगौ ॥ ९ ॥

कौसल्या—एसो सो महाराअस्स हिअआणन्दो वच्छाए वहूए पिदा राएसी सीरद्धओ। हद्धी सुमारिदह्मि अणुट्ठिदमहूसअे दिअहे। हा देव्व, सव्वं एव्व तं णत्थि।

एष स महाराजस्य हृदयानन्दो वत्साया वध्वाः पिता राजर्षिः सीरध्वजः। हा धिक् स्मारितास्मि अनुष्ठितमहोत्सवे दिवसे। हा दैव, सर्वमेव तन्नास्ति।

जनकः—(उपसृत्य) भगवत्यरुन्धति, वैदेहः सीरध्वजोऽभिवादयते।

---

रिभवकलुषं मुखं **पश्यामः** द्रष्टव्यबुद्ध्याऽवलोकयामः। ननु सुहृद्दर्शनमादरणीयमित्यत्राह—**एवंगतस्येति** ॥ दैवोपपादितविषमदशस्येत्यर्थः। अपरिभवनीयतामाह—**राजर्षेरिति** ॥ एष इत्यभिनीयोक्तिः। **वः** रघुकुलजातानाम्। **श्लाघ्यसंबन्धी** सर्वप्रकारेणापि संमतः संबन्धी **जनकानां** विदेहप्रभृतीनां राज्ञां **कुलोद्वहः** कुलोत्कर्षप्रवर्तकः **याज्ञवल्क्यः** दिवाकरान्तेवासी मुनिः **ब्रह्मपारायणं** निखिलामपि वेदान्तसंहितां **जगौ** प्रोवाच। ब्रह्मप्रवणतामाह—**मुनिरिति** ॥ मननशील इत्यर्थः। तदुक्तं मनुना—'मननान्मुनिरुच्यत' इति। एष स महाराजस्य हृदयानन्दो वत्साया वध्वाः पिता राजर्षिः सीरध्वजः। हा धिक् स्मारिताऽस्मि अनुष्ठितमहोत्सवे दिवसे। हा दैव सर्वमेव तन्नास्ति। एषः स इति प्रत्यभिज्ञा। **महाराजस्य** दशरथस्य। हृदयानन्द इत्यव्यभिचारेण कार्यकारिताप्रातिपत्तये घृतस्यायुरेवेदमित्यादिवदध्यवसायः। **वत्सायाः** मन्मनोनन्दिन्याः **वध्वाः** सीतायाः **पिता** जनयिता **राजर्षिः** सर्वथा संभावनार्हः **सीरध्वजः** जनकः। हा धिगिति पूर्ववृत्तस्मरणजनितवेदनानुभावः। **स्मारिताऽस्मि** उद्बोधितनिखिलपूर्वसंस्काराऽस्मि। अनेनेत्यर्थात्। **अनुष्ठितमहोत्सवे** निवृत्तसीतापरिणयने **दिवसे** अयोध्याप्रस्थानसमय इत्यर्थः। हा दैवेति वक्ष्यमाणविषय आक्षेपः। परस्तात् कथनेन स्मरणेन वाऽप्यलमिति शेषः। आक्षिप्तमेव पुनः सशोकमनुसंधत्ते—**सर्वमेव तन्नास्तीति** ॥ दशरथः सीतारामभद्रमुखदर्शनमयोध्यानिवाससौख्यं चेत्यर्थः। **भगवति** षड्गुणपरिपूर्णे **अरुन्धति** वासिष्ठगृहिणि। **वैदेहः सीरध्वज इति** गोत्रनामग्रहणपूर्वकत्वादभिवादनविधानस्य। **अभिवादयते** अभिवादनं करोति। **यथेति** ॥ भगवति अवनितललीनेन शिरसा वन्द

यया पूतंमन्यो निधिरपि पवित्रस्य महसः
पतिस्ते पूर्वेषामपि कुलगुरूणां गुरुतमः ।
त्रिलोकीमाङ्गल्यामवनितललीनेन शिरसा
जगद्वन्द्यां देवीमुषसमिव वन्दे भगवतीम् ॥ १० ॥

**अरुन्धती**—अनक्षरं ते ज्योतिः प्रकाशताम् । स च त्वां पुनातु देवः परो रजसो य एष तपति ।

**जनकः**—आर्ये गृष्टे, अपि कुशलमस्याः प्रजापालस्य मातुः ।

**कञ्चुकी**—(स्वगतम्) निरवशेषमतिनिष्ठुरमुपालब्धाः स्मः ।

---

इति संबन्धः । भगवतीमिति युष्मदर्थे । अवनितले लीनेन भूतलसंस्पृष्टेन **शिरसा** मूर्ध्ना । वन्दनीयतां प्रतिपादयति—**ययेति** ॥ ते पतिः यया पूतंमन्य इति संबन्धः । **ते** पतिदेवताकुलमौलेः **पतिः** भर्ता । ययेति पुण्यव्रतवैशिष्ट्यमनूद्यते । हेतौ तृतीया । आत्मानं पूतं मन्यत इति पूतंमन्यः । 'आत्ममाने खश्च' इति खश् । किं वा निजोत्कर्षस्य न्यूनतयेत्यत्राह—**पवित्रस्य महसो निधिरपीति** ॥ पवित्रस्य जगत्पावनस्य महसः तेजसः ब्राह्मस्येत्यर्थः । निधीयत इति निधिः । किमु तादृशस्योत्कर्षस्यानवगमादित्यत्राह—**पूर्वेषामपि कुलगुरूणां गुरुतम इति** ॥ किं पुनस्त्वत्साहित्यश्लाघायां कारणमित्यत्राह—**त्रिलोकीमाङ्गल्यामिति** ॥ एतदेवोपपादयति—**जगद्वन्द्यामिति** ॥ अत्रापि हेतुमाह—**देवीमिति** ॥ वन्दनस्यावर्जनीयतामुपमानेन प्रतिपादयति—**उषसमिवेति** ॥ यया पूतंमन्य इत्यादिकमुषस्यपि समानम् । यया उषसा पवित्रस्य महसो निधिः सूर्यः । अस्मिन् पक्षे ते पूर्वेषां कुलगुरूणामपि गुरुतमः पतिरिति योजना । अक्षरविरहितम् **अनक्षरम्** । सकलश्रुतिभिरपि तटस्थस्वरूपलक्षणाबोध्यतयाऽनभिधेयमित्यर्थः । 'अनक्षरमवाच्यं स्यात्' इत्यमरः । **ज्योतिः** स्वप्रकाशपराचिदात्मकमात्मतत्त्वं **प्रकाशताम्** अपरोक्षज्ञानविषयो जायताम् । **सः** जगत्पावनः । चकारः समुच्चये । **पुनातु** अन्तःकरणपरिशोधनं करोतु । तमःप्रतिबन्धमपनयत्वित्यर्थः । **देवः** सूर्यः । कीदृश इत्यत्राह—**परोरजस इति** ॥ सत्त्वात्मक इत्यर्थः । यच्छब्दो निरतिशयप्रभावतां निर्दिशति । **एषः** पुरतो दृश्यमानः । **तपति** ईष्टे । निग्रहानुग्रहयोरित्यर्थात् । तप ऐश्वर्ये इति धातुः । दीप्यत इति वा । अपिशब्दः प्रश्ने । **कुशलं** शरीरादिष्वनामयम् । अस्या इत्यभिनीयोक्तिः । **प्रजापालस्य** लोकेप्सितविधायिनः । **मातुः** जनयित्र्याः । **निरवशेषम्** अपरिहीणम् । **अतिनिष्ठुरम्** अत्यन्तासह्यं च । इत्युपाल-

(प्रकाशम्) राजर्षे, अनेनैव मन्युना चिरपरित्यक्तरामभद्रमुखदर्शनां नार्हसि दुःखयितुमतिदुःखितां देवीम् । रामभद्रस्यापि दैवदुर्योगः कोऽपि । यत्किल समन्ततः प्रवृत्तबीभत्साकिंवदन्तीकाः पौराः । न चाग्निशुद्धिमल्पकाः प्रतियन्तीति दारुणमनुष्ठितं देवेन ।

**जनकः**—(सरोषम्) आः, कोऽयमग्निर्नामास्मत्प्रसूतिपरिशोधने । कष्टमेवंवादिना जनेन रामभद्रपरिभूता अपि पुनः परिभूयामहे ।

**अरुन्धती**—(निःश्वस्य) एवमेतत् । अग्निरग्निरिति वत्सां प्रति परिलघून्यक्षराणि । सीतेत्येव पर्याप्तम् । हा वत्से,

---

म्भनक्रियाविशेषणम् । **उपालब्धाः स्मः** निन्दावचनपात्रीकृता भवामः । कुलशीलादीनामननुरूपमेतदिति निन्दासूचनमुपालम्भः । 'स्यात्सनिन्द उपालम्भ' इत्यमरः । राजर्षे इत्यनेनावगतसंसारतत्त्वस्य तव नोचितमेतादृशपरिभवोद्घट्टनमिति द्योत्यते । **अनेनैव** त्वदीयेनैव **मन्युना** रोषेण सीतापरित्यागजेनेत्यर्थः । **चिरपरित्यक्तरामभद्रमुखदर्शनामिति** ॥ सीतापरित्यागश्रवणसमय एवोपेक्षितनिजसुतमुखावलोकनामित्यर्थः । **नार्हसि** योग्यो न भवसि । **दुःखयितुं** पीडयितुम् । **अतिदुःखिताम्** असमानशोकविवशाम् । **देवीं** संभावनीयाम् । किमु रामभद्र एवात्रोपालभ्य इत्यत्राह—**रामभद्रस्यापीति** ॥ **दैवदुर्योगः** दैवस्य जन्मान्तरादृष्टस्य दुर्योगो दुष्टो योगः परिणतिभेदः । **कोऽपि** अनुभवैकप्रतिविधानः । पौराः समन्ततः प्रवृत्तबीभत्साकिंवदन्तीकाः यत् असौ रामभद्रस्य कोऽपि दैवदुर्योग इति योजना । ननु लोकप्रत्ययार्थं पावकप्रवेशनमपि कृतमित्यत्राह—**नचेति** ॥ **अग्निशुद्धिम्** इतराननुष्ठेयं कर्म **अल्पकाः** क्षुद्रचेतसः । कुत्सायां कः । **प्रतियन्ति** विश्वसन्ति । इतिशब्दः स्वरूपे । **दारुणमनुष्ठितं** अनाचरणीयं कर्म कृतम् । आ इति कोपे । किंशब्दः क्षेपे । नामेति कुत्सायाम् । **अस्मत्प्रसूतिपरिशोधने** अस्मदपत्यपवित्रीकरणे । प्रसवाक्रियावाचिनाऽत्र प्रसूतिशब्देन तत्कार्यभूतमपत्यं लक्ष्यते । आजानपावनताप्रकाशनं फलम् । कष्टमित्यसह्यतायाम् । **एवंवादिना** लोकप्रत्ययार्थमग्निप्रवेशनं कृतमिति वदता जनेन । नह्यत्र शत्रुमित्रादिविभाग इति भावः । **रामभद्रपरिभूता अपीति** ॥ अस्मत्प्रसूतिवैशिष्ट्यं जानताप्येवमनुष्ठितमिति परिभवः । पुनश्शब्दो विशेषे । **अग्निरग्निरिति** ॥ गौरवातिशयप्रकाशनाय द्विर्वचनम् । **वत्सां प्रति** सीतां प्रति **परिलघूनि** स्वल्पगुणप्रतिपादकानि । सीतेत्येवेत्यवधारणेन सीतानामाभिलापादस्या वैशिष्ट्यं प्रतीयते तन्नियतमग्निपरिशुद्धेति वचनेन

**शिशुर्वा शिष्या वा यदसि मम तत्तिष्ठतु तथा**
**विशुद्धेरुत्कर्षस्त्वयि तु मम भक्तिं जनयति।**
**शिशुत्वं स्त्रैणं वा भवतु ननु वन्द्यासि जगतो**
**गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः ॥ ११ ॥**

**कौसल्या**—अह्मो संमीलिदह्मि वेअणआ। (इति मूर्च्छति।)
**अहो, संमीलितास्मि वेदनया।**

**जनकः**—हा, किमेतत्।

**अरुन्धती**—राजर्षे, किमन्यत्।

**स राजा तत्सौख्यं स च शिशुजनस्ते च दिवसाः**
**स्मृतावाविर्भूतं प्रियसुहृदि दृष्टे तदखिलम्।**

---

हीयेतेति व्यज्यते। एवंविधायाः परित्यागवृत्तमनुस्मृत्य सविषादमाह—**हा वत्स इति** ॥ **शिशुर्वेति** ॥ मम शिशुर्वा शिष्या वा भवसि यत् तत् तथा तिष्ठतु इत्यन्वयः। **मम** अतिवत्सलायाः **शिशुः** उपलाळनीया **शिष्या** अनुशासनीया। वाशब्दोऽवधारणे। तच्छब्दो यच्छब्दनिर्दिष्टयोः शिशुत्वशिष्यत्वयोः परामर्शकः। **तथा तिष्ठतु** आवयोः संबन्धमात्रप्रतिपादकं भवतु। किमतः परमित्यत्राह—**विशुद्धेरिति** ॥ **उत्कर्षो**ऽतिशयः। तुर्विरोधे। **त्वयि** शिशुत्वाद्यननुगुणप्रतिपत्तिसमुचितायामपि **मम** वसिष्ठगृहिण्याः **भक्तिं** प्रावण्यं **जनयति** उपपादयति। ननु लोकानामेवास्यामविश्वास इत्यत्राह—**ननु वन्द्यासीति** ॥ **जगतः** सर्वभूतस्य। ननु स्त्रीत्वाद्यविनाभूतानां हृदयतारल्यादीनां संभवात् कथं विश्वास इत्यत्राह—**गुणा इति** ॥ सौशील्यादय इत्यर्थः। **पूजास्थानं** बहुमतिहेतुः। **गुणिषु** गुणवत्सु सत्त्वादिगुणप्रधानेषु जनेष्विति वा। तथाच भर्तृहरिः—'अतश्चानेकान्ते गुरुलघुतयाऽर्थेषु गुणिनामवस्था वस्तूनि प्रथयति च संकोचयति च ॥' अम्मो संमीलिताऽस्मि वेदनया। अम्मो इति खेदे। **संमीलिताऽस्मि** अन्धीभूतहृदयास्मि। हेति विषादानुभावः। किंशब्दो वितर्के। **एतत्** संमूर्च्छनम्। **राजर्षे इति** ॥ नचाविदितं तव किंचिदस्तीति भावः। किंशब्दः क्षेपे। **अन्यत्** वक्ष्यमाणादितरत्। **सः** तथाभूतः। ईदृश इति निर्देशानर्ह इत्यर्थः। **राजा** सकलजनहृदयाह्लादकारी। **तत्** अतिक्रान्तम् **सौख्यं** निखिलविभवोपभोगजनितमपरिमितं सुखम्। **सः** सुचिरकाललब्धः। चकारः समुच्चये। **शिशुजनः** अपत्यानि रामभद्रादयः सीतोर्मिळादिर्वधूजनश्च। **ते** प्रतिनिवर्तनानर्हा **दिवसाः** तत्तदुपभोगगुणानि दिनानि। **स्मृतौ** संस्कारजनिते प्रत्यये

विपाके घोरेऽस्मिन्ननु खलु विमूढा तव सखी
पुरन्ध्रीणां चेतः कुसुमसुकुमारं हि भवति ॥ १२ ॥

जनकः—हन्त सर्वथा नृशंसोऽस्मि । यच्चिरस्य दृष्टान्प्रियसुहृदः प्रियान् दारानस्निग्धवत्पश्यामि ।

स संबन्धी श्लाघ्यः प्रियसुहृदसौ तच्च हृदयं
स चानन्दः साक्षादपि च निखिलं जीवितफलम् ।
शरीरं जीवो वा यदधिकमतोऽन्यत्प्रियतरं
महाराजः श्रीमान्किमिव मम नासीद्दशरथः ॥ १३ ॥

---

**आविर्भूतं** विषयीभूतम् । **प्रियसुहृदि** निखिलानुभवसाक्षिणि **दृष्टे** नयनगोचरतां प्राप्ते । तच्छब्दः स राजेत्यादिना निर्दिष्टानामर्थानां परामर्शकः । **अखिलं** समस्तम् **विपाके** कर्मफलपरिणामे **घोरे** अनुभवैकप्रतिकरणे **अस्मिन्** वर्तमाने । ननुरनुमनने । खलुरवधारणे । **तव** दशरथप्रियसुहृदः **सखी** वयस्यगृहिणी । **पुरन्ध्रीणां** स्त्रीणामेव हृदयं कुसुमसुकुमारं भवत्येव किमुत पुरन्ध्रीणामिति भावः । **चेतः** हृदयं **कुसुमसुकुमारम्** अधीरतरं भवति । नच कालान्तरे देशान्तरेऽवस्थान्तरे वा पुरन्ध्रीत्वं कथंचिदपि हृदयसौकुमार्यं व्यभिचरतीत्यर्थः । हिशब्दः प्रसिद्धौ । हन्तेति खेदे । **सर्वथेति** ॥ असदृशस्य परिभवस्य भावेऽभावे वापीत्यर्थः । **नृशंसोऽस्मि** क्रूरतरहृदयोऽस्मि । हेतुमाह—**यदिति** ॥ **चिरस्य** चिरकालेन **दृष्टान्** यदृच्छयाऽवलोकितान् । **प्रियसुहृदः** दशरथस्य । अत्र विशेषणं विशेष्यार्थप्रतिपत्तिं करोति । **प्रियान्** चित्तानुवर्तनचतुरान् **दारान्** धर्मदारान् त्रिवर्गसाधनहेतुभूतान् **अस्निग्धवत्** विद्वेषिवद् शत्रुरिव **पश्यामि** अवलोकयामि । अतः सर्वथाऽपि नृशंसोऽस्मि इति संबन्धः । नन्वसदृशपरिभाविनः पिता दशरथोऽपि इदानीं तथाविध एव अतस्तत्संबन्धादियमपि अपराधिनीत्यत्राह—**स इति** ॥ अनेन च श्लोकेन स्वयंवरतः प्रभृति परिचयक्रमवशादुत्तरोत्तरं तत्तदवस्थासु दशरथविषयतया पूर्वमुपजातः प्रतीतिक्रमो वर्ण्यते । तत्तद्गुणवैशिष्ट्यानुस्मरणादेव प्रतिवाक्यमनुभूतपरामर्शकः तच्छब्दः । असावित्यप्यनुभूतपरामर्शकः । अतो न प्रक्रमभङ्गदोषः । यथा 'लावण्यं तदसौ कान्तिस्तद्रूपं स वचःक्रमः । तदा सुधास्पदमभूदधुना तु ज्वरो महान् ॥' इति । स इति प्रमादरहिततायर्थमभिसंक्रामति । अपिचेति विशेषे । **जीवितफलं** जीवितप्रयोजनम् । संसारसारभूतः पदार्थो मम दशरथ एवेत्यर्थः । एवमस्य हेतुफलरूपाभिलषितात्मकतामुपपाद्य परमप्रेमास्पदतया पुनरपि प्राधान्यमुपपाद-

कष्टम् । इयमेव सा कौसल्या ।

यदस्याः पत्युर्वा रहसि परिमन्तूयितमभू-
दभूवं दम्पत्योः पृथगहमुपालम्भविषयः ।
प्रसादे कोपे वा तदनु मदधीनो विधिरभू-
दलं वा तत्स्मृत्वा दहति यदवस्कन्द्य हृदयम् ॥ १४ ॥

अरुन्धती—हा कष्टम् । अतिचिरनिरुद्धनिःश्वासविष्फुरणमस्या हृदयम् ।

---

यति—**शरीरमिति** ॥ इतरेषां पुनस्तदर्थत्वमेवेति भावः । ननु शरीरादपि प्रेमास्पदभूतं वस्तु किं नास्तीत्यत्राह—**जीवो वेति** ॥ तथाच श्रीमद्भागवते—'देहोऽपि ममताभाक् चेत्तर्ह्यसौ नात्मवत्प्रियः । यज्जीर्यत्यपि देहेऽस्मिन् जीविताशा दुरत्यया ॥ तस्मात्प्रेयस्तमस्त्वात्मा सर्वेषामपि देहिनाम् ॥' इति । जीवितादपि प्रेमास्पदतामाह—**यदधिकमिति** ॥ अन्वयेनोक्तमर्थं द्रढयति—**किमिवेति** ॥ इवशब्दो वाक्यालंकारे । उक्तरूपतामुपपादयति—**महाराज इति** ॥ **श्रीमानिति** आयुष्मत्पुण्यात्मप्रभृतिवत् स्नेहातिशयवशात् प्रयोगः । शोभाद्यर्थानां तु महाराजशब्देनैव गतार्थत्वात् । अत्र रूपकातिशयोक्त्योः संसृष्टिः । रामभद्रपरिभवेऽपि दशरथवदेवेयमपि माननीयेत्याह—**कष्टमिति** ॥ **इयमेव** पुरतो दृश्यमानैव । **सा** दशरथप्रियमहिषी **कौसल्या** अस्मत्प्रियसखी । प्रसंगात् पूर्वानुभूतं किमपि सौहृदवृत्तमनुसंधत्ते—**यदिति** ॥ अस्याः पत्युर्वा रहसि यत् परिमन्तूयितमभूत् तद्दंपत्योः अहं पृथक् उपालम्भविषयः अभूवमित्यन्वयः । **अस्याः** कौसल्यायाः **पत्युः** दशरथस्य । वाशब्दो विकल्पे । **रहसि** इतरावगमनानर्हे समये **यत्** यस्मात् परिमन्तुरेव **परिमन्तूयितम्** । कण्ड्वादित्वात् स्वार्थे यक्, तस्य च सनादित्वात्तदन्तस्य धातुसंज्ञायां भावे निष्ठा । अपराध इत्यर्थः । 'आगोऽपराधो मन्तुश्च' इत्यमरः । यच्छब्दबलात्तच्छब्दः सिध्यति । दम्पत्योरित्यनेन उभयोरपि स्वस्मिन् विश्वासस्य तुल्यरूपता व्यज्यते । **अहं** न पुनरियं पतिर्वा **पृथक्** इतरेतरावगमनं विनैव **उपालम्भविषयः** दोषारोपणपात्रम् । **प्रसादे** अन्योन्यानुकूल्ये । **कोपे** इतरेतरवैमुख्ये । वाशब्देन तत्र तत्रौचित्यस्य स्वायत्तता व्यज्यते । **तदनु** उपालम्भनानन्तरं **मदधीनः** नतु तदायत्तः **विधिः** विधानं प्रसादकोपयोर्निर्वहणप्रकार इत्यर्थः । उक्तमर्थमाक्षिपति—**अलमिति** ॥ वाशब्दोऽवधारणे । **तत्** प्रियसुहृच्चरित्रम् । **स्मृत्वेति** ॥ अलंखल्वोरित्यादिना प्रतिषेधे क्त्वा । तादृशं प्रियसुहृच्चरित्रं न स्मर्तुं

**जनकः**—हा प्रियसखि । (इति कमण्डलूदकेन सिञ्चति ।)

**कञ्चुकी**—

सुहृदिव प्रकटय्य सुखप्रदां
प्रथममेकरसामनुकूलताम् ।
पुनरकाण्डविवर्तनदारुणः
परिशिनष्टि विधिर्मनसो रुजम् ॥ १५ ॥

**कौसल्या**—(आश्वस्य) हा वच्छे जाणइ, कहिं सि । सुमरामि दे विवाहलच्छीपरिग्गहे किदमङ्गलं उप्फुल्लमुद्धमुहपुण्डरीअं आरुहन्तकौमुदीचन्दमससुन्दरेहिं अंगएहिं पुणो वि पुत्ति अज्ज एहि मे उच्छङ्गम् । संपदा महाराओ एव्वं भणदि—एसा रहुउलमहत्तराणं वहू अह्माणं दु जणअसुदा दुहिदेव्व ।

हा वत्से जानकि, कुत्रासि । स्मरामि ते विवाहलक्ष्मीपरिग्रहे कृतमङ्गलम् उत्फुल्लमुग्धमुखपुण्डरीकमारोहत्कौमुदीच-

---

शक्यमित्यर्थः । अत्र कारणमाह—**दहतीति** ॥ **अवस्कन्द्य** बलादाक्रम्य परिशोष्येति वा । आक्षेपासङ्गत्योः सङ्करः । **अतिचिरनिरुद्धनिश्वासविस्फुरणमिति** ॥ अतिचिरनिरुद्धेन निश्वासेन हेतुना विष्फुरणं प्रचलनं यस्मिन्निति विग्रहः । हृदयमित्यत्यन्तसन्निकर्षात्स्तनमध्य उपचारः । दृश्यमानस्य हृदयस्फुरणस्य कारणमुत्प्रेक्षते—**सुहृदिति** ॥ विधिः प्रथमं मनसः एकरसां सुखप्रदामनुकूलतां सुहृदिव प्रकटय्य पुनः अकाण्डविवर्तनदारुणः रुजं परिशिनष्टि इत्यन्वयः । **विधिः** ईश्वरः । **प्रथमं** पूर्वम् । **मनसः** चित्तस्य **एकरसाम्** एकस्वभावाम् **सुखप्रदां** निरतिशयानन्ददायिनीम् **अनुकूलतां** तत्तदीप्सितघटनापरायणताम् **सुहृदिव** प्रियवयस्य इव **प्रकटय्य** प्रदर्श्य **पुनः** पश्चात् **अकाण्डविवर्तनदारुणः** अकाण्डेऽनवसर एव विवर्तनेनानुकूलतापरिवर्तनेन दारुणः क्रूरः **रुजं** पीडाम् **परिशिनष्टि** परिशेषयति । ण्यर्थोऽत्रान्तर्भावितः । प्रतिकूलचेष्टितः परिपन्थीवेति भावः । हा वत्से जानकि कस्मिन्नासि । स्मरामि ते विवाहलक्ष्मीपरिग्रहे कृतमङ्गलम् उत्फुल्लमुग्धमुखपुण्डरीकम् आरोहत्कौमुदीचन्द्रमस्सुन्दरैरङ्गकैः पुनरपि पुत्रि अद्य एहि मे उत्सङ्गम् । **विवाहलक्ष्मीपरिग्रहे** विवाहलक्ष्म्याः विवाहसमयसमुचितायाः शोभायाः परिग्रहे संपादने **कृतमङ्गलं** मङ्गलालङ्करणपरिष्कृतम् । **उत्फुल्लमुग्धमुखपुण्डरीकम्** उत्फुल्लं विकसितं मुग्धं मनोज्ञं

न्द्रमस्सुन्दरैरङ्कैः मे पुनरपि पुत्रि अद्य एहि मे उत्सङ्गम् । सर्वदा महाराज एवं भणति—एषा रघुकुलमहत्तराणां वधूः, अस्माकं तु जनकसुता दुहितैव ।

कञ्चुकी—यथाह देवी ।

पञ्चप्रसूतेरपि राज्ञ आसीत्
प्रियो विशेषेण सुबाहुशत्रुः ।
वधूचतुष्केऽपि यथा हि शान्ता
प्रिया तनूजास्य तथैव सीता ॥ १६ ॥

जनकः—हा प्रियसख महाराज दशरथ, एवमसि सर्वप्रकारहृदयंगमः कथं विस्मर्यसे ।

---

मुखपुण्डरीकं मुखमेव पुण्डरीकम् । **आरोहत्कौमुदीचन्द्रमस्सुन्दरैः** आरोहन्त्या नितरां रोहन्त्या प्रसरन्त्या कौमुद्या नयनाह्लादकारिण्या प्रभया हेतुना चन्द्रमस्सुन्दरैः चन्द्रशकललोभनीयैः अङ्कैः अतिदयनीयैरङ्गैः । **पुनरपीति** ॥ तादात्विकमङ्गलभूषाविशेषलसितां त्वां पूर्वमुत्संगे सकृद्धारणान्न परितृप्तेत्यर्थः । इतराभ्योऽपि वधूभ्यः सीतायां वात्सल्यातिशये कारणमाह—**संपदेति** ॥ सर्वदा महाराज एवं भणति । एषा रघुकुलमहत्तराणां वधूः अस्माकं तु जनकसुता दुहितैव । **रघुकुलमहत्तराणां** दिलीपप्रभृतीनां राज्ञां **वधूः** पुत्रभार्या । तुर्विशेषे । जनकसुतेत्यनेन दशरथस्य तत्सख्यमनुस्मारयति । **दुहितैवेति** ॥ सखिसुता धर्मतो निजसुतैवेत्यर्थः । तन्ममापि धर्मसाम्यात्तथैवेति भावः । **यथेति** ॥ तथैव महाराजा भणतीति शेषः । प्रीत्यतिशये तु न तादृशो धर्मो निमित्तं तस्योर्मिलादावपि समानत्वादित्याह—**पञ्चप्रसूतेरिति** ॥ पञ्चप्रसूतेः अपि राज्ञः सुबाहुशत्रुः विशेषेण प्रियः आसीत् । वधूचतुष्केऽपि अस्य यथा तनूजा शान्ता प्रिया तथैव सीता इत्यन्वयः । **पञ्चप्रसूतेः** पञ्च प्रसूतयोऽपत्यानि यस्य तस्य । अपिर्विरोधे । राज्ञ इत्यनेन विशेषानुपपत्तिः सूचिता । **सुबाहुशत्रुः** सुबाहुहन्ता । **विशेषेण** इतरापत्येभ्य इत्यर्थात् । **वधूचतुष्केऽपि** चतसृषु वधूषु । निर्धारणे सप्तमी । अतः कस्यापि कस्मिन्नपि प्रीत्यतिशये कारणं दुर्विज्ञानमेवेति भावः । हेति विषादानुभावः । **प्रियसख** हृदयनिर्विशेष **महाराज** चित्तानुवर्तनकुशल । **एवमसीति** ॥ सीतायां विशेषदृष्टिरसीत्यर्थः । **सर्वप्रकारहृदयङ्गमः** सर्वप्रकारेणापि हृदयंगमः । **कथं विस्मर्यस इति** ॥ किं करोमि न विस्मर्तुं शक्यत इत्यर्थः । विस्मरणाशक्यतामुपपादयति—**कन्याया इति** ॥

कन्यायाः किल पूजयन्ति पितरो जामातुराप्तं जनं
संबन्धे विपरीतमेव तदभूदाराधनं ते मयि ।
त्वं कालेन तथाविधोऽप्यपहृतः संबन्धबीजं च तत्
घोरेऽस्मिन्मम जीवलोकनरके पापस्य धिग्जीवितम् ॥ १७॥

**कौसल्या**—पुत्ति सीदे, किं करोमि । दिढवज्जलेवणिबन्धणिच्चलं एत्थ हदजीविदं मं मन्दभाइणिं ण परिच्चअदि ।

पुत्रि सीते, किं करोमि । दृढवज्रलेपनिबन्धनिश्चलमत्र हतजीवितं मां मन्दभागिनीं न परित्यजति ।

**अरुन्धती**—आश्वसिहि राजपुत्रि, बाष्पविश्रामोऽप्यन्तरालेषु कर्तव्य एव । अन्यच्च किं न स्मरसि । यदवोचदृष्यश्रृङ्गाश्रमे युष्माकं

---

कन्यायाः पितरः जामातुः आप्तं जनं पूजयन्ति किलेत्यन्वयः । कन्याया इति सामान्ये विशेषकथनं लोकसंमतिप्रदर्शनार्थम् । **आप्तं** स्निग्धं **जनं** पित्रादिकं **पूजयन्ति** समाराधयन्ति । किलेति प्रसिद्धौ । **संबन्धे** आवयोरित्यर्थात् **विपरीतमेव** विपरीतं यथेति क्रियाविशेषणम् । पूज्यपूजकताव्यत्ययेनेत्यर्थः । **तत्** तथाभूतम् **आराधनं** परिचरणम् । कथमित्यत्राह—**ते मयीति** ॥ **त्वं** तथाविध आराधकः । **तथाविधोऽपि** प्रतिपादितगुणविशिष्टोऽपि । **कालेन** बलिनामपि बलिष्ठेन **अपहृतः** विनाशितः । **संबन्धबीजं** संबन्धनिमित्तम् । सीतेत्यर्थः । अपहृतमिति लिङ्गविपरिणामेनानुषञ्जनीयम् । चकारः समुच्चये । **तत्** अवाग्विषयगुणविशिष्टम् । **घोरे** क्रूरतरे **अस्मिन्** अनुभूयमाने **मम** असदृशशोकावेगविवशस्य **जीवलोकनरके** जीवलोकाख्ये नरके । पतितस्येत्यर्थात् । नरकपतनौचित्यमुपपादयति—**पापस्येति** ॥ पुत्रि सीते किं करोमि दृढवज्रलेपनिबन्धनिश्चलं हतजीवितमत्र मां मन्दभागिनीं न परित्यजति । **दृढवज्रलेपनिबन्धनिश्चलमिति** ॥ दृढं येन केनाप्यनपनेयम् वज्रलेपनिबन्धनमिव वज्रलेपप्रक्षेप इव निश्चलमित्यर्थः । **हतजीवितं** दुष्टजीवितम् । **अत्र** अस्मिन् समये । **न परित्यजतीति** ॥ यथा किल शिल्पिना प्रासादादिनिर्माणे शिलासन्धानदार्ढ्यार्थं वज्रलेपाख्यो द्रव्यविशेषः प्रक्षिप्यते तद्वदेव शरीरसंधानदार्ढ्यार्थं जीवितं विधिना प्रक्षिप्तम् । अत एवेदानीमीदृशेऽपि पीडापरिगमे मम शरीराज्जीवितं नोद्गच्छतीत्यर्थः । **आश्वसिहि** प्रार्थनायां लोट् । राजपुत्रीत्यनेन शोकवैवश्यस्यानुपपत्तिः सूचिता । **बाष्पविश्रामः** बाष्पविरामः । अपिशब्देनाशक्यविश्रमणता द्योत्यते । **अन्तरालेषु** शोकवेगप्रसराणामुद्गमनान्तरालेषु कालेषु ।

**कुलगुरुः**—भवितव्यं तथेत्युपजातमेव, किंतु कल्याणोदर्कं भविष्यतीति ।

**कौसल्या**— कुदो । अदिक्कन्दा मणोरहा एदे ।

कुतः । अतिक्रान्ता मनोरथा एते ।

**अरुन्धती**—तत्किं मन्यसे राजपुत्रि मृषोद्यं तदिति । न हीदं क्षत्रिये । भवितव्यं तु तेन ।

आविर्भूतज्योतिषां ब्राह्मणानां
ये व्याहारास्तेषु मा संशयो भूत् ।
भद्रा ह्येषां वाचि लक्ष्मीर्निषक्ता
नैते वाचं विप्लुतार्थां वदन्ति ॥ १८ ॥

---

कारणान्तरमप्याह—**अन्यच्चेति** ॥ किं न स्मरसीत्यनेन चित्तावलम्बनार्थं तत् पूर्वं कुलगुरुणा कथितमिति द्योत्यते । **ऋष्यशृङ्गाश्रम इति** ॥ स्थितवेति शेषः । सीतावृत्तोपलम्भनानन्तरामित्यर्थात् । युष्माकं कुलगुरुरित्यनेन शोकापनोदनपरता व्यज्यते । एवशब्दो भिन्नक्रमः । तथैव भवितव्यामिति । अनेन समाधानाशक्यता व्यज्यते । **उपजातमिति** ॥ सीतापरित्यजनामिति शेषः । कष्टतरत्वादेव नाम्ना निर्देशाभावः । अवश्यानुभवनीयायामस्यां विपत्तौ किमस्माकमवलम्बनमित्यत्राह—**किंत्विति** ॥ कल्याण उदर्कश्चरमकालानुभवो यस्य तत् कल्याणोदर्कमित्युपजातसीतापरित्यजनविशेषणम् । 'उदर्कः फलमुत्तरम्' इत्यमरः । कुतः अतिक्रान्ता मनोरथा एते । कुतः इत्यसंभावनीयतायाम् । कल्याणोदर्कमित्यनुषज्यते । कथंचिदप्येतत कल्याणोदर्कं न संभवेदेवेत्यर्थः । असंभावनीयतामेव प्रतिपादयति—**अतिक्रान्ता इति** ॥ एते मनोरथा अतिक्रान्ता इति संबन्धः । एत इति बुद्धिस्था अयोध्यागमनरामभद्रमुखदर्शनसीतालाभादयो निर्दिश्यन्ते । अलभ्यवस्तुपरिकीर्तनकातर्यात् संज्ञया परिगणनाभावः । **मनोरथाः** अभिलषितानि **अतिक्रान्ताः** अतीताः । प्रतिनिवर्तनानर्हा जाता इत्यर्थः । **किं मन्यस इति** ॥ राजपुत्रि तत् मृषोद्यमिति किं मन्यस इति संबन्धः । राजपुत्रीत्यनेन मनोरथलाभयोग्यता व्यज्यते । **तत्** कल्याणोदर्कं भविष्यतीति तव वचनं **मृषोद्यं** मृषावादः । वदेः संप्रसारणम् । मिथ्याभूतार्थप्रतिपादनमित्यर्थः । क्षत्रिय इत्यनेन वासिष्ठकथिते मिथ्यात्वसंभावनं तव नोचितमिति । **भवितव्यं तु तेनेति** ॥ कुलगुरुकथितेन कल्याणोदर्केणेत्यर्थः । अत्र हेतुमाह—**आविर्भूतज्योतिषामिति** ॥ आविर्भूतं तपोबलादुपजातं ज्योतिः अनागतादिविषयप्रतिभात्मकं चक्षुर्येषां तेषाम् । उक्तं

(नेपथ्ये कलकलः । सर्वे आकर्णयन्ति ।)

**जनकः**—अत्र शिष्टानध्याय इत्यस्खलितं खेलतां वटूनामयं कोलाहलः ।

**कौसल्या**—सुलहसोक्खं दाणिं बालत्तणं होदि । (निरूप्य) अह्महे, एदाणं मज्झे को एसो रामभद्दकोमारलच्छीसावट्ठम्भेहिं मुद्धललिदेहिं अङ्गेहिं दारओ अह्माणं लोअणाइ सीदलावेदि ।

सुलभसौख्यमिदानीं बालत्वं भवति । अहो, एतेषां मध्ये क एष रामभद्रकौमारलक्ष्मीसावष्टम्भैर्मुग्धललितैरङ्गैर्दारकोऽस्माकं लोचने शीतलयति ।

---

चैतत् द्वितीयाङ्कविष्कम्भके—'अव्याहतं ज्योतिरार्षं ते प्रातिभं चक्षुः' इति । अथवा आविर्भूतं मायावरणनिर्मुक्तं ज्योतिः स्वप्रकाशपरचिदात्मकमात्मतत्त्वं येषां तेषामिति । **ब्राह्मणानाम्** ऋषीणाम् **व्याहाराः** व्याहृता अर्थाः । कर्मणि घञ् । **तेषु** व्याहृतेषु **संशयः** सत्यत्वसंदेहः **मा भूत्** नोत्तिष्ठताम् । कुत इत्यत्राह—**भद्रेति** ॥ कल्याणीत्यर्थः । हिशब्दः प्रसिद्धौ । **एषां** प्रतिपादितगुणविशिष्टानां ब्राह्मणानां **वाचि** स्वच्छन्दप्रवृत्तायामपि **लक्ष्मीः** वाक्यार्थघटयित्री निरतिशयप्रभावा कापि शक्तिः । अघटमानघटनापाटवादेव लक्ष्मीशब्दः प्रयुक्तः । **निषक्ता** सन्निहिता अधिष्ठितेति यावत् । अस्तीति शेषः । पूर्वोक्तं निगमयति—**नैत इति** ॥ **विप्लुतार्थामिति** ॥ विप्लुतो मिथ्याभूतोऽर्थो यस्याः ताम् । अर्थासंस्पर्शिनीमित्यर्थः । **नेपथ्ये कलकलः** । श्रूयत इति शेषः । बहूनामविभक्तो व्याकुलशब्दः कलकलः । 'कोलाहलः कलकल' इत्यमरः । **अत्र** अस्मिन्नाश्रमे । शिष्टनिमित्तकोऽनध्यायः **शिष्टानध्यायः** । इतिर्हेतौ । **अस्खलितं** स्खलितं प्रतिबन्धः, तदभावो यथा तथेति क्रियाविशेषणम् । **खेलतां** क्रीडताम् **वटूनां** ऋषिकुमाराणाम् **अयं** श्रूयमाणः । सुलभसौख्यमिदानीं बालत्वं भवति । सुलभं सौख्यं यस्मिंस्तत् । अस्मिन्नवसरे बालत्वं बालभावः । निश्चिन्तानामेवेदानीं दुःखाननुविद्धं सुखं, न पुनरस्माकमिति भावः । अम्महे एतेषां मध्ये एष रामभद्रकौमारलक्ष्मीसावष्टम्भैरङ्गैर्दारकोऽस्माकं लोचने शीतलयति । **एतेषां** खेलतां वटूनां **मध्ये** इत्यनेन इतरकुमारकव्यतिरेकं द्योतयति । **रामभद्रकौमारलक्ष्मीसावष्टम्भैरिति** ॥ रामभद्रस्य कौमारलक्ष्म्या शैशवकान्त्या सावष्टम्भैः सविशेषैरित्यर्थः । 'अवष्टम्भः सुवर्णे च स्तम्भप्रारम्भभयोरपि । आश्रये च विशेषे च प्राघाते परिघे तथा ॥' इति शब्दरत्नाकरे । अत्र लवस्य कौमारलक्ष्म्यां रामभद्रकौमारलक्ष्म्याः सादृश्यादध्यवसायः । वक्ष्यति च 'कुवलयदलस्निग्धश्यामः शिख-

**अरुन्धती**—(अपवार्य । सहर्षबाष्पम्) इदं नाम तद्भागीरथीनिवेदितं रहस्यं कर्णामृतम् । नत्वेतद्विद्मः कतरोऽयमायुष्मतोः कुशलवयोरिति ।

**जनकः**—

कुवलयदलस्निग्धश्यामः शिखण्डकमण्डनो
वटुपरिषदं पुण्यश्रीकः श्रियैव सभाजयन् ।
पुनरिव शिशुर्भूत्वा वत्सः स मे रघुनन्दनो
झटिति कुरुते दृष्टः कोऽयं दृशोरमृताञ्जनम् ॥ १९ ॥

---

ण्डकमण्डनो वटुपरिषदं पुण्यश्रीकः श्रियैव सभाजयन् । पुनरिव शिशुर्भूत्वा वत्सः स मे रघुनन्दनो झटिति कुरुते दृष्टः कोऽयं दृशोरमृताञ्जनम् ॥' इति । **अङ्गैः** अवयवैः । उपलक्षणे तृतीया । **दारकौ** बालकः । भागीरथीनिवेदितं रहस्यं तत् कर्णामृतम् इदं नामेति संबन्धः । **रहस्यम्** इतरजनाविज्ञेयतया गूहनीयम् । **इदं** नयनगोचरीभूतम् । नामेति संभावनायाम् । श्रवणरसायनतया पूर्वमनुभूतमेवेदानीं नयनास्वादनीयं जातमिति संभावयामीत्यर्थः । अत्र वाल्मीकितपोवनोपकण्ठे परित्यज्य निवृत्ते लक्ष्मणे दुरुत्तरं निजदैवदुर्विपाकमालोच्य तादात्विकप्रसववेदनाक्षमतया च मत्प्रवाहपतितया सलिलान्तरे प्रसूतौ बालकौ मात्रा सममुपादाय रसातलं नीत्वा कुशलवाविति तयोर्नामनी विधाय स्तन्यपोषणकालावसानपर्यन्तं परिरक्ष्य पश्चात्क्षत्रियोचितसकलक्रियासंपादनार्थमेतौ मया वाल्मीकिहस्ते समर्पितौ । तौ पुनरिदानीमस्मिन् प्राचेतसाश्रमे कुमारौ वर्धेते इति स्वतीरसंनिहितामरुन्धतीं प्रति रहसि भागीरथीवचनमभ्यूह्यम् । एतच्छब्दो वक्ष्यमाणपरामर्शकः । **विद्मः** जानीमः । कतर इति द्वयोरेकस्य पृथक्करणे । 'किंयत्तदोर्निर्धारणे द्वयोरेकस्य डतरच्' इति स्वार्थे डतरच् । कुशलवयोर्द्वयोरयं क इत्यर्थः । **कुवलयदलस्निग्धश्याम इति** ॥ मे वत्सः स रघुनन्दनः पुनः शिशुर्भूत्वेव कः अयं दृष्टः नयनयोः झटिति अमृताञ्जनं कुरुते इत्यन्वयः । **मे** जामातृलाभपरिखिन्नस्य **वत्सः** संतापहारकः **सः** कौशिकेन सहास्मन्नगरमुपयातः **रघुनन्दनः** रामभद्रः । पुनःशब्द आवृत्तौ । **शिशुर्भूत्वा** अस्मत्परितोषणाय शैशवावस्थामवलम्ब्य । इवशब्द उत्प्रेक्षायाम् । **कः** कतमगोत्रजातः **अयं** वटुपरिषदि परिक्रीडमानः **दृष्टः** दर्शनक्रियाकर्मभूतः । **दृशोः** नयनयोः रम्यदर्शननिरुत्सुकयोः **झटिति** आपातमात्र एव **अमृताञ्जनम्** अमृताप्यायनम् । उत्प्रेक्षानिमित्तमुपपादयति—**कुवलयदलस्निग्धश्याम इति, शिखण्डकमण्डन**

**कञ्चुकी**—नूनं क्षत्रियब्रह्मचारी दारकोऽयमिति मन्ये ।

**जनकः**—एवमेतत् । अस्य हि

चूडाचुम्बितकङ्कपत्रमभितस्तूणीद्वयं पृष्ठतो
भस्मस्तोमपवित्रलाञ्छनमुरो धत्ते त्वचं रौरवीम् ।
मौर्व्या मेखलया नियन्त्रितमधोवासश्च माञ्जिष्ठकं
पाणौ कार्मुकमक्षसूत्रवलयं दण्डोऽपरः पैप्पलः ॥ २० ॥

---

इति च ॥ **वटुपरिषदं** वटुसमूहम् । **पुण्यश्रीकः** मङ्गलकान्तिः **श्रियैव** निजप्रभयैव **सभाजयन्** परिशोभयन् । नूनमिति निश्चये । **क्षत्रियब्रह्मचारी** क्षत्रिय एव ब्रह्मचारी **दारको** बालः **अयं** पुरोवर्ती । इतिशब्दः प्रकारे । **मन्ये** संभावयामि । एवमित्यनुवादे । **एतत्** त्वया संभावितं वस्तु । क्षत्रियब्रह्मचार्येवेत्यर्थः । कुत इत्यत्राह—**अस्य हीति** ॥ अस्य पृष्ठतः तूणीद्वयं अभितः चूडाचुम्बितकङ्कपत्रं हि इत्यन्वयः । **अस्य** कुमारस्य **पृष्ठतः** पृष्ठे **तूणीद्वयं** शराधियुग्मम् **अभितः** परितः **चूडाचुम्बितकङ्कपत्रं** चूडायां शिखायां चुम्बितानि स्पृष्टानि कङ्कपत्राणि शरा यस्मिन् तत् । उरः रौरवीं त्वचं धत्ते । **रौरवीं** रुरुसंबन्धिनीम् । **त्वचं** अजिनम् । अत्र बृहस्पतिः—'ब्राह्मणस्याजिनं कार्ष्णं रौरवं क्षत्रियस्य तु' इति । कीदृशमुर इत्यत्राह—**भस्मस्तोमपवित्रलाञ्छनमिति** ॥ भस्मस्तोमो भस्मरचितस्तोमः त्रिपुण्ड्र एव पवित्रं लाञ्छनं यस्मिन् तत् । अधोवासः मौर्व्या मेखलया नियन्त्रितं माञ्जिष्ठं चेत्युभयमपि विधेयम् । **अधोवासः** परिधानीयम् **मौर्व्या** मूर्वया रचितया । अत्र मनुः—'मौञ्जी त्रिवृत् समा श्लक्ष्णा कार्या विप्रस्य मेखला । क्षत्रियस्य तु मौर्वी ज्या वैश्यस्य शणतान्तवी ॥' इति ॥ **नियन्त्रितं** निबद्धम् । मञ्जिष्ठया रक्तं माञ्जिष्ठम् । तदेव माञ्जिष्ठकम् । अत्रापि मनुः—'वसीरन्नानुपूर्व्येण शाणक्षौमाविकानि च' इति । वसिष्ठोऽपि—'माञ्जिष्ठं क्षौमं क्षत्रियस्य' इति । पाणौ कार्मुकमक्षसूत्रवलयं अपरः पैप्पलः दण्डः इति संबन्धः । **अक्षसूत्रवलयं** अक्षमालावलयम् **अपरः** अन्यः न केवलं पाणौ कार्मुकाक्षसूत्रवलये एव, पैप्पलो दण्डोऽपीत्यर्थः । **पैप्पलः** पिप्पलविकारः । 'बोधिद्रुमश्चलदलः पिप्पलः कुञ्जराशनः' इत्यमरः । अत्र यमः—'विप्रस्य दण्डः पालाशो बैल्वो वा धर्मतः स्मृतः, । आश्वत्थः क्षत्रियस्याथ खादिरो वाऽपि धर्मतः ॥' इति । **तत्** तस्मात् । यतो गृष्टेर्मम च तर्क एकरूपः तत इत्यर्थः । **भगवति** दिव्यज्ञानसंपन्ने **अरुन्धति** वसिष्ठगृहिणि । किंशब्दः प्रश्ने । **उत्प्रेक्षसे** परितर्कयसि । **कुतस्त्यः** किंजातीयः कतमगोत्रजातो वा **अयं** क्षत्रियव्यञ्जनो दृश्यमानः । इतिशब्दः प्रकारे । **अयौ**

तद्भगवत्यरुन्धति, किमुत्प्रेक्षसे कुतस्त्योऽयमिति ।

अरुन्धती—अद्यैव वयमागताः ।

जनकः—आर्ये गृष्टे, अति हि मे कौतुकं वर्तते । तद्भगवन्तं वाल्मीकिमेव गत्वा पृच्छामः । इमं च दारकं ब्रूहि—वत्स केऽप्येते प्रवयसस्त्वां दिदृक्षव इति ।

कञ्चुकी—यदाज्ञापयति देवः । (इति निष्क्रान्तः ।)

कौसल्या—किं मण्णेध । एव्वं भणिदो आअमिस्सदि ण वेत्ति ।

किं मन्यध्वे । एवं भणित आगमिष्यति न वेति ।

जनकः—न भिद्यते सद्वृत्तमस्य निर्माणस्य ।

कौसल्या—(निरूप्य) कहं दाणिं सविणआणिसमिदगिट्ठिवअणो विसज्जिदासेसदारओ एत्तोमुहं पसरिदो एव्व सो वच्छो ।

कथमिदानीं सविनयनिशमितगृष्टिवचनो विसृष्टाशेषदारक इतोमुखं प्रसृत एव स वत्सः ।

जनकः—(चिरं निवर्ण्य) भोः किमप्येतत् ।

---

वेति ॥ युष्माभिः सहैवात्रागताया मम कथमवगमनभेदः संभाव्यत इत्यर्थः । अतिरतिशये । हिरवधारणे । मे एनं पश्यतः कौतुकं परमार्थज्ञानोत्कण्ठा । तत् तस्मात् । भगवन्तम् अनागतादिदर्शननिपुणम् । एवशब्देन व्यर्थ एवास्माकं स्वबुद्ध्यैव परमार्थज्ञानवेदनप्रयत्न इति व्यज्यते । अत्र वाल्मीकिमेव गत्वा पृच्छाम इत्यस्यानन्तरं वाल्मीकिं पृच्छेति अर्थस्य इमं च दारकं ब्रूहीत्यत्र चकारेणावगतेः शब्दस्यानुपादानम् । ब्रूहि सम्यग्वद । प्रवयसो वृद्धाः । वाल्मीकिवचनश्रवणात्पूर्वमेव एतत्संवादे दाक्षिण्यसौशील्यादिदर्शनादस्याभिजात्यादिकं स्वयमेवावगन्तुं सुकरमिति भावः । किं मनुध्वे । एवं भणित आगमिष्यति न वेति । न भिद्यते न हीयते कर्मकर्तरि यक् । सद्वृत्तम् उत्तमवृत्तम् । अस्य ईदृग्विधस्य निर्माणस्य सृष्टिविशेषस्य । गुणानामाकृतिसौष्ठवाविनाभावादयमागामिष्यत्येवेत्यर्थः । अत्र क्रियावाचिना सृष्टिशब्देन तत्कर्मभूतः कुमारो लक्ष्यते । तपस्सारलब्धाया वेधसः सृष्टिक्रियाया वैशिष्ट्यस्य कुमारके प्रतीतिः फलम् । कथमिदानीं सविनयनिशमितगृष्टिवचनो विसृष्टाशेषदारक इतोमुखं प्रसृत एव स वत्सः । सविनयनिशामितगृष्टिवचन इति ॥ सविनयमेव निशमितं श्रुतं गृष्टिवचनं येन सः । विसृष्टाशेषदारकः विसृष्टाः स्वनिकटाद्विश्लेषिता अशेषा अपि दारका येन सः । एतच्चाभिजात्यादेर्लक्षणम् । महिम्नामिति ॥ एत-

महिम्नामेतस्मिन्विनयशिशिरो मौग्ध्यमसृणो
विदग्धैर्निर्ग्राह्यो न पुनरविदग्धैरतिशयः ।
मनो मे संमोहस्थिरमपि हरत्येष बलवा-
नयोधातुं यद्वत्परिलघुरयस्कान्तशकलः ॥ २१ ॥

(प्रविश्य)

**लवः**—अज्ञातनामक्रमाभिजात्यान् पूज्यान् सतः कथमभिवादये । (विचिन्त्य) अयं पुनरविरुद्धः प्रकार इति वृद्धेभ्यः श्रूयते । (सविनय-मुपसृत्य) एष वो लवस्य शिरसा प्रणामपर्यायः ।

**अरुन्धतीजनकौ**—कल्याणिन् , आयुष्मान्भूयाः ।

---

स्मिन् महिम्नामतिशयः इति संबन्धः । **एतस्मिन्** इतोमुखं प्रसृते । **महिम्नां** तत्तत्कर्मभरणक्षमाणामनुभावविशेषाणाम् । **अतिशयः** उत्कर्षः । इतरेतरपरिमिलनजनितः कोऽपि परिपाकविशेष इत्यर्थः । स तु कीदृश इत्यत्राह—**विदग्धैरिति** ॥ पटुतरहृदयैरित्यर्थः । **निर्ग्राह्यः** साकल्येन ग्राह्यः । अत्र हेतुमाह—**विनयशिशिर इति** ॥ विनयेन प्रह्वीभावेन शिशिरोऽनूष्मलः । इतरेषां पुनरीषद्ग्रहणमपि दुष्करमित्यत्राह—**न पुनरिति** ॥ **अविदग्धैः** प्राकृतजनैः । साकल्यग्रहणनिषेधस्यार्थसिद्धत्वेऽपि पुनर्विधानसामर्थ्यादीषद्ग्रहणमेव निषिध्यते । अत्रापि हेतुमाह—**मौग्ध्यमसृण इति** ॥ मौग्ध्येन बालभावेन मसृणोऽप्रकाशः । उक्तमर्थमुपपादयति—**मन इति** ॥ एष मे मनः संमोहस्थिरमपि हरति इति संबन्धः । **एषः** अतिशयः **मे** असमानशोकविवशस्य **मनः** अन्तरिन्द्रियं **संमोहस्थिरमपि** आन्ध्येन स्तब्धमपीत्यर्थः । विषयप्रवृत्तिशून्यमपीति यावत् । **हरति** आकर्षति । अत्र हेतुमाह—**बलवानिति** ॥ उपमानेन चैतत्स्फुटयति—**अयोधातुमिति** ॥ **परिलघुः** अतिकृशः **अयस्कान्तशकलः** अयस्कान्तखण्डः । **अज्ञातनामक्रमाभिजात्यानिति** ॥ अज्ञातोऽनवधारितो नामक्रमो नामहेतुकः क्रम उत्कर्षतरतमभावो यस्य तत् तादृशं आभिजात्यं येषां तान् **पूज्यान्** पूजार्हान् **सतः** उत्कृष्टान् । कथमिति वितर्के । **अभिवादये** अभिवादनं करोमि । बहूनां हि महतां समवाये नाम्नैव तेषामाभिजात्यतरतमभावमवगम्य तदनुसारेणाभिवादनं करणीयमिति भावः । **अविरुद्धो**ऽनुकूलः सदाचारस्येत्यर्थात् । **प्रकारो**ऽनुष्ठानम् । **वृद्धेभ्यः** पण्डितेभ्यः । श्रूयत इति वर्तमानप्रत्ययेनास्यानन्यथाभावमवगमयति । **प्रणामपर्यायः** प्रणामानां पर्यायः । सकृदनुष्ठितस्यैव पुनः पुनः करणं पर्यायः ।

**कौसल्या**—जाद, चिरं जीव । जात, चिरं जीव ।

**अरुन्धती**—एहि वत्स । (लवमुत्सङ्गे गृहीत्वा । आत्मगतम्) दिष्ट्या न केवलमुत्सङ्गश्चिरान्मनोरथोऽपि मे पूरितः ।

**कौसल्या**—जाद, इदो वि दाव एहि । (उत्सङ्गे गृहीत्वा) अह्महे, ण केवलं दरविकसन्तणीलुप्पलसामलुज्जलेण देहबन्धेण कवलिदारविन्दकेसरकसाअकण्ठकलहंसघोसघग्घराणुणादणिल्हादमाणदीहरेण सरेण अ रामभद्दस्स अणुकरोदि । णं अकठोरकमलगब्भमिदुलो सरीरप्पस्सो वि तारिसो एव्व । जाद पेक्खामि दे मुहम् । (चुबुकमुन्नमय्य निरूप्य सबाष्पाकूतम्) राएसि, किं ण पेक्खसि णिउणं णिरूवज्जन्तो वच्छाए मम वहूए अवि मुहचन्देण संवददि एव्व ।

जात इतोऽपि तावदेहि । अहो न केवलं दरविकसन्नीलोत्पलश्यामलोज्ज्वलेन देहबन्धेन कबलितारविन्दकेसरकषायकण्ठकलहंसघोषघर्घरानुनादनिर्ह्लादमानदीर्घेण स्वरेण च रामभद्रास्यानुकरोति । नन्वकठोरकमलगर्भमृदुलः शरीरस्पर्शोऽपि तादृश एव । जात, पश्यामि ते मुखम् । राजर्षे, किं न पश्यसि निपुणं निरूप्यमाणो वत्साया मम वध्वा अपि मुखचन्द्रेण संवदत्येव ।

---

प्रणन्तव्यसंख्यया प्रणमनमिति यावत् । जात चिरं जीव । **उत्संगे गृहीत्वा** अङ्के निधाय । जाद इदो वि दाव एहि । अहो न केवलं दरविकसन्नीलोत्पलश्यामलोज्ज्वलेन देहबन्धेन कबलितारविन्दकेसरकषायकण्ठकलहंसघोषघर्घरानुनादनिर्ह्लादमानदीर्घेण स्वरेण च रामभद्रस्यानुकरोति । नन्वकठोरकमलगर्भमृदुलः शरीरस्पर्शोऽपि तादृश एव । तात पश्यामि ते मुखम् । **दरविकसन्नीलोत्पलश्यामलोज्ज्वलेन** ईषद्विकचनीलोत्पलवत् श्यामलोज्ज्वलेन **देहबन्धेन** शरीरसंस्थानेन **कबलितारविन्दकेसरकषायकण्ठकलहंसघोषघर्घरानुनादनिर्ह्लादमानदीर्घेण** कबलितेनास्वादितेनारविन्दकेसरेण हेतुना कषायो रञ्जितः संपृक्तः कण्ठो यस्य तादृशस्य कलहंसस्य घोष इव कूजितमिव घर्घरानुनादसहितं यथा तथा निर्ह्लादमानेन अत एव दीर्घेणेत्यर्थः । **रामभद्रस्यानुकरोतीति** ॥ द्वितीयार्थे षष्ठी । **सबाष्पाकूतमिति** ॥ आहेति शेषः । आकूतमभिप्रायः । राजर्षे किं न पश्यसि निपुणं निरूप्यमाणो वत्साया मम वध्वा अपि मुखचन्द्रेण संवदत्येव । **वध्वा अपीति** ॥ न केवलं रामभद्रस्य सीताया अपीत्यर्थः । **संवदति** सादृश्यबुद्धि-

**जनकः**—पश्यामि सखि, पश्यामि ।

**कौसल्या**—अह्महे, उम्मत्तीभूदं विअ मे हिअअं किंवि इदो मुहं विप्पलवदि ।

अहो, उन्मत्तीभूतमिव मे हृदयं किमपीतोमुखं विप्रलपति ।

**जनकः**—

वत्सायाश्च रघूद्वहस्य च शिशावस्मिन्नभिव्यज्यते
संपृक्तप्रतिबिम्बितेव निखिला सैवाकृतिः सा द्युतिः ।
सा वाणी विनयः स एव सहजः पुण्यानुभावोऽप्यसौ
हा हा दैव किमुत्पथैर्मम मनः पारिप्लवं धावति ॥ २२ ॥

**कौसल्या**—ताद, अत्थि दे मादा, संसुमरासि वा ताम् ।

---

मुत्पादयति । अयं कुमार इति शेषः । शिशूनां हि स्त्रीपुंव्यत्ययेन मातृपितृसादृश्यम् अभ्यधिकसौभाग्याभिव्यञ्जकम् । तदुक्तं गोपालेन—'सुतो मातृमुखः श्रेष्ठः कन्या पितृमुखी शुभा' इति । होराशास्त्रेऽपि—'मातापित्रोरनुकृतिरियं पुत्रकन्याश्रया चेत्तत्संयोगाद्भवति विभवो लभ्यते दीर्घमायुः' इति । अम्मो इति खेदे । उन्मत्तीभूतमिव मे हृदयं किमपि इतोमुखं विप्रलपति । **उन्मत्तीभूतं** यथार्थचिन्तावन्ध्यीभूतम् **इतोमुखम्** एनमुद्दिश्य **विप्रलपति** विरुद्धं वदति । 'विप्रलापो विरोधोक्तिः' इत्यमरः । कौसल्याकथितमनुवदति—**वत्साया इत्यादिना** ॥ वत्सायाश्च रघूद्वहस्य च सैव निखिला आकृतिः अस्मिन् शिशौ संपृक्तप्रतिबिम्बितेव अभिव्यज्यते इत्यन्वयः । **वत्सायाः** सीतायाः **रघूद्वहस्य** रामभद्रस्य **सैव** सकललोकलोचनासेचनकतया पूर्वमनुभूतैव **आकृतिः** अवयवसंस्थानम् **अस्मिन्** पुरोवर्तिनि **शिशौ** किशोरके **संपृक्तप्रतिबिम्बितेव** संपृक्ततया इतरेतरसाधारणेन भूषणभूष्यभावेन प्रतिबिम्बितेव **अभिव्यज्यते** स्पष्टतया दृश्यते । उभयाकृतेर्मिश्रीभूय प्रकाशमुपपादयति—**सेत्यादिना** ॥ **द्युतिः** शरीरकान्तिः **विनयः** प्रह्वीभावः । असौ पुण्यानुभावोऽपीति योजना । **असौ** अस्मिन्दृश्यमानः **पुण्यानुभावः** पुण्यात्मकोऽनुभावः । सज्जनहृदयानुरञ्जकः प्रभाव इत्यर्थः । पुण्यस्यानुभाव उत्कर्ष इति वा । स एवेत्यनुषज्यते । **हा हा दैवेति** ॥ अकरुणेन हे त्वया सकलमपि स्मर्तव्यतां नीतमिति शेषः । ईदृशं दैववैपरीत्यं जानतोऽपि कथं ममैतादृशमनोरथविलसितं प्रसृतमिति सनिर्वेदमाह—**किमिति** ॥ **उत्पथैः** गम्यदेशप्रापणवन्ध्यैः **धावति** विशृङ्खलं प्रसरति । अत्र हेतुमाह—**पारिप्लवमिति** ॥ चञ्चलमित्यर्थः । परमार्थचिन्ताशून्यमिति यावत् ।

तात, अस्ति ते माता, संस्मरसि वा ताम्।

**लवः**—नहि।

**कौसल्या**—तदो कस्स तुमम्। ततः कस्य त्वम्।

**लवः**—भगवतो वाल्मीकेः।

**कौसल्या**—अइ ताद, कहिदव्वं कहेहि।

अयि तात, कथितव्यं कथय।

**लवः**—एतावदेव जानामि।

(नेपथ्ये)

भो भोः सैनिकाः, एष खलु कुमारश्चन्द्रकेतुराज्ञापयति—न केनचिदाश्रमाभ्यर्णभूमय आक्रमितव्या इति।

**अरुन्धतीजनकौ**—अये, मेध्याश्वरक्षाप्रसङ्गादुपागतो वत्सश्चन्द्रकेतुर्द्रष्टव्य इत्यसौ सुदिवसः।

**कौसल्या**—अहो वच्छलक्खणस्स पुत्तओ आणवेदित्ति अमिदबिन्दुसुन्दराइं अक्खराइं सुणीअन्दि।

अहो वत्सलक्ष्मणस्य पुत्रक आज्ञापयतीत्यमृतबिन्दुसुन्दराण्यक्षराणि श्रूयन्ते।

**लवः**—आर्ये, क एष चन्द्रकेतुर्नाम।

---

तात अस्ति ते माता संस्मरसि वा ताम्। अस्तीत्यत्र काका प्रश्नः। यदि वा सेदानीमत्र नास्ति तथापि किमु तां स्मरसि इत्याह—**संस्मरसि वेति**॥ **नहि** मातापि तावन्मम स्मृतिपथे नास्तीत्यर्थः। **तत इति**॥ यदि मातरं न स्मरसीत्यर्थः। **कस्येति**॥ को वा तव पितेत्यर्थः। नाहं पितरमपि स्मरामीत्याह—**भगवत इति**॥ अयि तात कथितव्यं कथय। **एतावदेवेति**॥ वाल्मीकेरहं पोष्यो रक्ष्यश्चेत्येतावन्मात्रमेव जानामीत्यर्थः। **भो भो इति**॥ चन्द्रकेतुसमाज्ञापितप्रातिबोधनत्वरया द्विर्वचनम्। सेनासंगताः सैनिकाः। सेनाया वेति ठक्। **आश्रमाभ्यर्णभूमयः** आश्रमान्तिकभूमयः। **नाक्रमितव्याः** पादपातानर्हाः। इतिशब्दः प्रकारे। **मेध्याश्वरक्षाप्रसंगात्** क्रतुपशुसंरक्षणवशात्। **द्रष्टव्यः** द्रष्टुं शक्यः। इतिर्हेतौ। अहो इत्यलभ्यलाभजनिते विस्मये। वत्सलक्ष्मणस्य पुत्रक आज्ञापयतीति अमृतबिन्दुसुन्दराण्यक्षराणि श्रूयन्ते। अक्षराणां प्रत्येकममृतबिन्दुसादृश्यमाह्लादकरत्वातिशयात्। एतच्छब्दो मेध्याश्वरक्षाप्रसङ्गागतत्वादिगुणवैशिष्ट्यपराम-

**जनकः**—जानासि रामलक्ष्मणौ दाशरथी ।

**लवः**—एतावेव रामायणकथापुरुषौ ।

**जनकः**—अथ किम् ।

**लवः**—तत्कथं न जानामि ।

**जनकः**—तस्य लक्ष्मणस्यायमात्मजश्चन्द्रकेतुः ।

**लवः**—ऊर्मिलापुत्रस्तर्हि मैथिलस्य राजर्षेर्दौहित्रः ।

**अरुन्धती**—(विहस्य) आविष्कृतं कथाप्रावीण्यं वत्सेन ।

**जनकः**—(विचिन्त्य) यदि त्वमीदृशः कथायामभिज्ञस्तद्ब्रूहि तावत्पृच्छामः—तेषां दशरथस्य पुत्राणां कियन्ति किंनामधेयान्यपत्यानि केषु वा दारेषु प्रसूतानि ।

**लवः**—नायं कथाविभागोऽस्माभिरन्येन वा श्रुतपूर्वः ।

**जनकः**—किं न प्रणीतः कविना ।

**लवः**—प्रणीतो न प्रकाशितः । तस्यैव कोऽप्येकदेशः प्रबन्धान्तरेण रसवानभिनेयार्थः कृतः । तं च स्वहस्तलिखितं मुनिर्भगवान्

---

र्शकः । जानासीति प्रसिद्धिवशादनूद्य कथनम् । **दाशरथी** दशरथपुत्रौ । एतावेवेत्यवधारणेन ज्ञातचरता सूच्यते । **रामायणकथापुरुषौ** रामायणकथानायकौ । अथकिमित्यनुवादे । **तत्** तर्हि । यदि रामायणकथापुरुषावेवेत्यर्थः । कथं न जानामीति निषेधनिरसनाद्वाल्मीकिप्रबन्धपरिशीलनं व्यज्यते । **तस्य** रामायणकथानायकत्वेन त्वया ज्ञातचरस्य । **ऊर्मिलापुत्र इति** ॥ लक्ष्मणस्यात्मजश्चेदयमित्यर्थः । **मैथिलस्य** जनकस्य **दौहित्रो** दुहितृपुत्रः । **आविष्कृतं** प्रकाशितम् । **कथाप्रावीण्यं** कथावैदग्ध्यम् । **अभिज्ञो** वेत्ता । **तत्** तर्हि **ब्रूहि** अविकलतयैव वद । **पृच्छामः** रामायणकथाप्रवीणं त्वामित्यर्थात् । **तेषां** रामायणकथापुरुषाणाम् । **कियन्तीति** ॥ कया संख्यया संख्यातानीत्यर्थः । **किंनामधेयानि** कीदृशनामधेयैराख्यातानि । **केषु वेति** ॥ कीदृशनामधेयेषु कियत्संख्यासंख्यातेषु वेत्यर्थः । **अयं** भवता पृष्टः **कथाविभागः** कथाविवेकः । **प्रणीतं** रचितम् । **कविना** वाल्मीकिना । **तस्यैव** प्रणीतस्यैव **कोऽपि** अविदितत्वान्निर्देष्टुमशक्यः । **एकदेशो** भागान्तरम् । **रसवान्** रसप्रचुरः । अतिशायने मत्वर्थीयः ॥ **अर्थ** इतिवृत्तम् । रसबाहुल्यादेव दृश्यात्मकं प्रबन्धमकरोदित्यर्थः । **तम्** अभि-

व्यसृजद्भगवतो भरतस्य तौर्यत्रिकसूत्रधारस्य ।

**जनकः**—किमर्थम् ।

**लवः**—स किल भगवान्भरतस्तमप्सरोभिः प्रयोजयिष्यतीति ।

**जनकः**—सर्वमिदमाकूततरमस्माकम् ।

**लवः**—महती पुनस्तस्मिन्भगवतो वाल्मीकेरास्था । यतो येषामन्तेवासिनां हस्तेन तत्पुस्तकं भरताश्रमं प्रति प्रेषितं तेषामानुयात्रिकश्चापपाणिः प्रमादापनोदार्थमस्मद्भ्राता प्रेषितः ।

**कौसल्या**—भादावि दे अत्थि । भ्रातापि तेऽस्ति ।

**लवः**—अस्त्यार्यः कुशो नाम ।

**कौसल्या**—जेट्ठेत्ति भणिदं होदि । ज्येष्ठ इति भणितं भवति ।

**लवः**—एवमेतत् । प्रसवानुक्रमेण स किल ज्यायान् ।

**जनकः**—किं यमजावायुष्मन्तौ ।

**लवः**—अथ किम् ।

---

नेयतया निबद्धम् । **स्वहस्तलिखितामिति** ॥ इतरजनाविज्ञेयत्वादिति भावः । **व्यसृजत्** अन्तेवासिहस्ते दत्वा प्रेषितवान् । **भरतस्य** नाट्यशास्त्रप्रणेतुर्मुनिवरस्य । **किमर्थमिति** ॥ अन्याचार्यहस्तप्रेषणे किं फलमेष पश्यतीत्यर्थः । किलेति वार्तायाम् । **भगवान्** सुविदितप्रपञ्चतत्त्वः ऊहापोहकुशल इति यावत् । तदुक्तं—'उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम् । वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ॥' इति । **भरतः** अभिनयशास्त्रप्रणेता **तं** तादृशं प्रबन्धम् **अप्सरोभिः** दिव्यनटीभिः । **प्रयोजयिष्यति** जनलोचनासेचनकतां कारयिष्यति । इतिर्हेतौ । एतच्च सप्तमाङ्कार्थबिन्दुतयापेक्षितम् । **सर्वमिति** ॥ प्रबन्धान्तरेण करणं भरतमुनिप्रेषणमप्सरोभिः प्रयोगकरणं चेत्यर्थः । **महती** अतिशायिनी । पुनश्शब्दो विशेषे । **तस्मिन्** अभिनेयप्रबन्धे **आस्था** अभिलाषातिशयः । अपायशङ्काकातर्यमिति यावत् । कथमवगतं त्वयेत्यत्राह—**यत इति** ॥ **अन्तेवासिनां** शिष्याणाम् । पुस्तकमेव पुस्तिका । अनुयात्रायां नियुक्तः **आनुयात्रिकः** । **प्रमादापनोदार्थं** पुस्तिकाभ्रंशपरिहारार्थम् । भ्राताऽपि ते अस्ति । काका प्रश्नः । **कुशो नाम** कुशसंज्ञया ख्यातः । ज्येष्ठ इति भणितं भवति । ज्येष्ठोचितार्यशब्दसमभिव्याहारादिति भावः । **प्रसवानुक्रमेणेति** ॥ नतु गर्भग्रहणक्रमेणेत्यर्थः । किलेति वार्तायाम् । **यमजौ** युगजातौ । **आयुष्मन्तौ** युवाम् । कथयेति प्रार्थनायां लोट् । **प्रकाशितो**

**जनकः**—वत्स, कथय प्रकाशितः कथाप्रबन्धस्य कीदृशः पर्यन्तः।
**लवः**—अलीकपौरापवादोद्विग्नेन राज्ञा निर्वासितां देवयजनसंभवां सीतादेवीमासन्नप्रसववेदनामेकाकिनीमरण्ये लक्ष्मणः परित्यज्य प्रतिनिवृत्त इति ।
**कौसल्या**—हा वच्छे मुद्धमुहि, को दाणिं दे सरीरकुसुमस्स झत्ति देव्वदुव्विलासपरिणामो एकाइणीए णिवडिदो ।

हा वत्से मुग्धमुखि, क इदानीं ते शरीरकुसुमस्य झटिति दैवदुर्विलासपरिणाम एकाकिन्या निपतितः।

**जनकः**—हा वत्से,

नूनं त्वया परिभवं च वनं च घोरं
तां च व्यथां प्रसवकालकृतामवाप्य ।

---

दर्शितः **कथाप्रबन्धस्य** रामायणनिबन्धनस्य **कीदृशः** कतमवृत्तप्रतिपादनपरः **पर्यन्तः** अवधिः । प्रकाशितकथापर्यन्तमाह—**अलीकेति** ॥ अलीकभूतेन लोकप्रवादेन जनपदव्यापिनाऽपवादेन हेतुना उद्विग्नेन कातरेणेत्यर्थः। **राज्ञा** निजप्रीतिविमुखेन **निर्वासितां** निजनगरान्निष्क्रामिताम् **देवयजनसंभवाम्** आजानपावनां **सीतादेवीं** प्रशस्तशीलाम् **आसन्नप्रसववेदनाम्** आसन्नगर्भविमोचनजनिततीव्रामयाम् आतिदयनीयामिति यावत् । **एकाकिनीं** निस्सहायाम् **अरण्ये** शून्याटवीप्रदेशे **परित्यज्य** निर्दयं विहाय **प्रतिनिवृत्तः** निजनगरं प्राप्तः । इतिशब्दः प्रकारे समाप्तौ वा । हा वत्से मुग्धमुखि क इदानीं ते शरीरकुसुमस्य झटिति दैवदुर्विलासपरिणाम एकाकिन्या निपतितः । **मुग्धमुखि** मनोज्ञमुखि आयासासहन इत्यर्थः । **कः** कष्टतरत्वान्निर्देशानर्हः **इदानीम्** अकाण्ड एव **ते** असंभावनीयविपत्तेः । शरीरस्य कुसुमस्य चाभेदकल्पनात् कोमलतरसुकुमारशरीरस्येत्यर्थः । **झटिति** अतर्कितमेव **दैवदुर्विलासपरिणामः** जननान्तरकृतकर्मफलपरिपाकः । परित्याग इत्यर्थः । **निपतितः** अपरिहार्यतया पतितः । हेति लववचनश्रवणजनितविषादानुभावः । **वत्से** पुत्रि । **नूनमिति** ॥ त्वया परिभवं च घोरं वनं च प्रसवकालकृतां तां व्यथां च अवाप्य क्रव्याद्गणेषु परितः परिवारयत्सु च असकृत्स्मृतोऽस्मि नूनमित्यन्वयः । **त्वया** पितृवत्सलया । **परिभवं** लोककर्तृकमित्यर्थात् । अलीकापवादकथनरूपमित्यर्थः । **घोरं** दुर्विगाहं **वनं** क्रूरसत्त्वाधिष्ठितं **प्रसवकालकृतां** प्रसवकालजनितां **ताम्** अतिदुस्सहां **व्यथां** पीडाम् **अवाप्य** अनुभूय **असकृत्** बहु-

क्रव्याद्गणेषु परितः परिवारयत्सु
संत्रस्तया शरणमित्यसकृत्स्मृतोऽस्मि ॥ २३ ॥

**लवः**—(अरुन्धतीं प्रति) आर्ये, कावेतौ ।

**अरुन्धती**—इयं कौसल्या । अयं जनकः ।

(लवः सबहुमानखेदकौतुकं पश्यति ।) ।

**जनकः**—अहो निर्मर्यादता दुरात्मनां पौराणाम् । अहो रामस्य राज्ञः क्षिप्रकारिता ।

एतद्वैशसवज्रघोरपतनं शश्वन्ममोत्पश्यतः
क्रोधस्य ज्वलितुं झटित्यवसरश्चापेन शापेन वा ।

**कौसल्या**—(सभयकम्पम्) भअवदि, परित्ताहि । पसादेहि कुविदं

---

कृत्वः स्मृतोऽस्मि, प्रथमतो नगरस्थितजनापवादपरिभवमवाप्य, पश्चाद्घोरतरं वनमनुभूय, पुनश्च प्रसवकालकृतां व्यथामवाप्य, ततोऽपि क्रव्याद्गणेषु परितः परिवारयत्सु इत्यर्थः । असकृत्स्मरणयोग्यतामेवाह--**शरणमिति** ॥ आश्रयान्तरादर्शनादित्यर्थः । इतिर्हेतौ । कीदृश्या त्वयेत्यत्राह—**संत्रस्तयेति** ॥ रघुनाथमातृत्वात्सीतापितृत्वाच्च बहुमानः । तयोरेव पुरतः सीतापरित्यजनप्रकारकथनात् खेदः । दुर्लभदर्शनलाभात्कौतुकम् । अहो इति खेदे । **निर्मर्यादतेति** ॥ निर्मर्यादानां भावो निर्मर्यादता । विश्रृङ्खलवादित्वमिति यावत् । **दुरात्मनां** दुष्टमनसाम् । दोषारोपणपराणामित्यर्थः । **पौराणां** सततदृष्टसीतामहिम्नाम् । किमिति क्षुद्रचेतसः पौरानुपालभे, रामभद्र एव वा कथमेवमकरोदित्याह—**अहो इति** ॥ अहो इति विस्मये निपातः । 'अहो ही विस्मये खेदे' इत्यमरः । **रामस्य** सकलजनमनोऽनुकूलस्य **राज्ञः** विश्वसनीयचेष्टितस्य **क्षिप्रकारिता** स्वायत्तकारिता । एवं पौरजनपौरोभाग्यजनितमलीकापवादं रामभद्रस्य च तदनुसारितां पुनरालोच्य विवृत्तमन्युः सावेगमाह—**एतदिति** ॥ एतत् वैशसवज्रघोरपतनं शश्वदुत्पश्यतो मम क्रोधस्य झटिति ज्वलितुं चापेन शापेन वा अवसरः इत्यन्वयः । **एतत्** अनुभूयमानं **वैशसवज्रघोरपतनं** वैशसमेव वज्रमशनिः तस्य घोरम् अप्रतिविधेयं पतनं **शश्वत्** सातत्येन **उत्पश्यतः** चिन्तयतः दुहितृपरिभवं सदा निरूपयतः इत्यर्थः । **मम** समाधिनिरतस्य अपि **क्रोधस्य** उन्मर्दितविवेकस्य **ज्वलितुं** विश्रृङ्खलं प्रसर्तुम् **चापेन** क्षात्रोचितेन **शापेन** मुनिजनसुलभेन प्रहरणेन । वाशब्दो विकल्पे । **अवसरः** औचित्यम् । उभयस्मिन्नपि समर्थोऽहमिति भावः । भगवति परित्रायस्व, प्रसादय कुपितं राजर्षिम् । राजर्षिशब्देन चाप-

राएसिम् ।

भगवति, परित्रायस्व, प्रसादय कुपितं राजर्षिम्

लवः—

एतद्धि परिभूतानां प्रायश्चित्तं मनस्विनाम् ।

अरुन्धती—

राजन्नपत्यं रामस्ते पाल्याश्च कृपणा जनाः ॥ २४ ॥

जनकः—

शान्तं वा रघुनन्दने तदुभयं यत्पुत्रभाण्डं हि मे
भूयिष्ठद्विजबालवृद्धविकलस्त्रैणश्च पौरो जनः ॥ २५ ॥

(प्रविश्य संभ्रान्ता वटवः ।)

वटवः—कुमार कुमार । अश्वोऽश्व इति कोऽपि भूतविशेषो जनपदेष्वनुश्रूयते, सोऽयमधुनास्माभिः स्वयं प्रत्यक्षीकृतः ।

लवः—अश्वोऽश्व इति नाम व्रतपशुसमाम्नाये सांग्रामिके च

शापयोः प्रावीण्यं व्यज्यते । **एतत्** उभयायत्तचेष्टितम् । हिरवधारणे । **परिभूतानां** न्यक्कृतानां **प्रायश्चित्तं** प्रतिक्रिया परिभवप्रक्षालनमिति यावत् । एतच्च रामभद्रे पौरजने च तव नोचितमित्याह—**राजन्निति** ॥ **अपत्यं** पुत्रः । सीतासंबन्धात्तव रक्ष्यः पोष्यश्चेत्यर्थः । **पाल्याः** अवश्यरक्षणीयाः । रामसंबन्धात्तत्प्रजा अपि स्वीया एवेत्यर्थः । **कृपणाः** क्षुद्राः । निस्सारा इति यावत् । **शान्तं** शममेतु । आशंसायां भूतवच्चेति क्तः । कोपवैवश्यादेवमुक्तिः । अत्र हेतुमाह—**तदिति** ॥ रामभद्र इत्यर्थः । **पुत्रभाण्डं** पुत्रात्मकं भाण्डं मूलधनम् । सर्वापायेभ्यो रक्षणीयं द्रव्यमेव रामभद्र इत्यर्थः । 'स्याद्भाण्डमश्वाभरणे मन्त्रे मूलवणिग्धने' इत्यमरः । तर्हि सीतागुणापवादिनि पौरजने प्रसरतु इत्यत्राह—**भूयिष्ठेति** ॥ भूयिष्ठा अतिरिक्ता द्विजा बाला वृद्धा विकलाः स्त्रैणाश्च यस्मिन् सः । विकलाः कुब्जवामनपङ्ग्वादयः । स्त्रैणाः स्त्रीसमूहाः, स्त्रीषु भक्ता विटा वेत्यर्थः । अस्मत्सन्नाहसहा नैते इति भावः । **संभ्रान्ता इति** ॥ अश्वदर्शनकुतूहलात्संभ्रमः । **वटव इति** ॥ शिष्टानध्यायवशादाश्रमोपकण्ठे तत्र तत्र खेलन्त ऋषिकुमारका इत्यर्थः । यः कश्चिदित्यनेन संज्ञाश्रवणसमये संज्ञिदिदृक्षाभावो व्यज्यते । भूतविशेष इत्यनेनादृष्टपूर्वत्वसंजातकुतूहलयोग्यतां प्रतिपादयति । जनपदेष्विति सप्तम्या अनन्यत्रभावोऽर्थः । अनुश्रूयत इत्यनेन बहुशः श्रुतस्य दर्शनमादरणीयमिति । अश्वोऽश्व इति क्रतुविधाने प्राधान्यात् बहुशः पाठौचित्यं व्यज्यते । **व्रतपशुसमाम्नाये** व्रतपशूनां दीक्षापशूनां

पठ्यते । तद्बूत कीदृशः ।

**वटवः**—अरे, श्रूयताम् ।

पश्चात्पुच्छं वहति विपुलं तच्च धूनोत्यजस्रं
दीर्घग्रीवः स भवति खुरास्तस्य चत्वार एव ।
शष्पाण्यत्ति प्रकिरति शकृत्पिण्डकानाम्रमात्रान्
किं व्याख्यानैर्व्रजति स पुनर्दूरमेह्येहि यामः ॥ २६ ॥

(इत्यजिने हस्तयोश्चाकर्षन्ति ।)

**लवः**—(सकौतुकोपरोधविनयम् ।) आर्याः पश्यत । एवमेभिर्नीतोऽस्मि । (इति त्वरितं परिक्रामति ।)

**अरुन्धतीजनकौ**—पूरयतु कौतुकं वत्सः ।

---

समाम्नाये पाठे । दीक्षासमाप्तिहिंस्यानां यज्ञियानां पशूनां पाठप्रकरण इत्यर्थः । **सांग्रामिके चेति** ॥ विधान इति शेषः । तस्मै प्रभवति संतापादिभ्य इत्यत्र संग्रामशब्दस्य संतापादिगणपाठात्तस्मै प्रभवतीति ठक् । अरे इत्यश्वदर्शनानादरेणैव तत्स्वरूपपरिप्रश्नजनितात्क्रोधान्निन्दागर्भं संबोधनम् । सापहासमेवोत्तरमाह—**पश्चादिति** ॥ पृष्ठ इत्यर्थः । पुच्छमिति द्वितीयया वैधर्म्यं प्रकाशयति । वहतीत्यनेन शोभाप्रकर्षो व्यज्यते । अत्र हेतुमाह—**विपुलमिति** ॥ एतदपि दर्शनीयमित्याह—**तच्च धूनोत्यजस्रमिति** ॥ पृष्ठतो लाङ्गूलमात्रमेव सर्वपशुसाधारणमिति भावः । कीदृशः पुनर्विशेष इत्यत्राह—**दीर्घग्रीव इति** ॥ किमेतावानेव विशेष इत्यत्राह—**खुरास्तस्य चत्वार एवेति** ॥ इतरपशुसाधारणं पुनः किमस्तीत्यत्राह—**शष्पाण्यत्तीति** ॥ शकृन्निर्हरणे पुनर्महान् विशेष इत्याह—**प्रकिरति शकृत्पिण्डकानाम्रमात्रानिति** ॥ प्रत्यक्षार्हे न युक्तं शाब्दादरणमित्याह—**किं व्याख्यानैरिति** ॥ एतावदेव फलिष्यतीत्यत्राह—**व्रजति स पुनर्दूरमिति** ॥ ततः किं कर्तव्यमित्यत्राह—**एह्येहीति** ॥ इतिशब्द उक्तौ । **अजिने हस्तयोश्चेति** ॥ अजिनेन सह हस्तकर्षणं बलीयसः इतरथा दुस्साधत्वात् । **सकौतुकोपरोधविनयमिति** ॥ कौतुकोपरोधसहितेन विनयेन सहितं यथा तथेत्यर्थः । आहेति शेषः । आर्या इति युष्मदर्थे । **पश्यत** वटुजनप्रोत्साहनमिति शेषः । **एवम्** अजिनकर्षणेन **एभिः** बहुभिः । **नीतोऽस्मीति** ॥ काममगतिरिति शेषः । **पूरयतु** साधयतु **कौतुकं** अश्वदर्शनाभिलाषम् । भगवति जानामि एतमपश्यन्ती वञ्चितेव भवामि तत् इत उन्नतीभूय पश्यामस्तावद्दर्पायमाणं दीर्घायुषमेतं वटुभिर्नीतम् । **वञ्चितेव** मुषितेव ।

**कौसल्या**—भअवदि, जाणामि एदं अपेक्खन्ती वञ्चिदा विअ होमि । ता इदो उण्णदीभविअ पेक्खह्म दाव दप्पाअन्तं दीहाउं एदं वडुहिं णीदं ।

भगवति, जानामि एतमपश्यन्ती वञ्चितेव भवामि । तदित उन्नतीभूय पश्यामस्तावद्दर्पायमाणं दीर्घायुषमेतं वटुभिर्नीतम् ।

**अरुन्धती**—अतिजवेन दूरमतिक्रान्तः स चपलः कथं दृश्यते ।

(प्रविश्य) **कञ्चुकी**— भगवान्वाल्मीकिराह—ज्ञातव्यमेतदवसरे भवद्भिरिति ।

**जनकः**—अतिगम्भीरमेतत्किमपि । भगवत्यरुन्धति, सखि कौसल्ये, आर्य गृष्टे, स्वयमेव गत्वा भगवन्तं प्राचेतसं पश्यामः ।

(इति निष्क्रान्तो वृद्धवर्गः ।)

---

(प्रविश्य)

**वटवः**—पश्यतु कुमारस्तावदाश्चर्यम् ।

**लवः**—दृष्टमवगतं च । नूनमाश्वमेधिकोऽयमश्व इति ।

**वटवः**—कथं ज्ञायते ।

**लवः**—ननु मूर्खाः, पठितमेव हि युष्माभिरपि तत्काण्डम् । किं

---

**इतः** अस्मात् स्थानात् **उन्नतीभूय** उत्तानीभूय । उद्ग्रीविकां विधायेति यावत् । **दर्पायमाणं** गर्वोद्रिक्तम् । लोहितादित्वात् क्यष् । **अतिजवेनेति** ॥ त्वरितगत्येत्यर्थः । **सः** द्रष्टुमीप्सितः **चपलो** बालः । बालचापल्यस्य मनोहारितातिशयादत्र विशेषणमपि विशेष्यप्रतीतिं करोति । **ज्ञातव्यं** ज्ञातुं शक्यम् **एतत्** कञ्चुकिमुखेन पृष्टं वस्तु **अवसरे** अवगमनार्हे काले । न त्विदानीमिति भावः । **अतिगम्भीरमिति** ॥ दुर्बोधतरार्थगर्भीकरणात् । **तमेव** ज्ञानावसरवेदिनमेव **भगवन्तम्** अव्याहतज्ञानदर्शं **प्राचेतसं** वाल्मीकिम् । नूनमिति निश्चये । **आश्वमेधिकः** अश्वमेधार्हः । तदर्हतीति ठक् । इतिशब्दः प्रकारे । कथमिति प्रश्ने । **ज्ञायते** अवगम्यते । नन्विति प्रश्ने । **पठितमेव** आवृत्तमेव । युष्माभिरपीत्यपिशब्देनावगमनार्हता प्रकाश्यते । **तत्** अश्वमेधप्रकरणं **काण्डं** वेदभाग इति यावत् । अत्र विध्यर्थवादमन्त्रसमूहात्मको वेदभागः काण्डशब्देनाभिधीयते । 'काण्डोऽस्त्री दण्डबाणार्ववर्गावसरवारिषु' इत्यमरः । किंशब्दः प्रश्ने । **न पश्यथ** न जानीथ । अश्वमे-

न पश्यथ प्रत्येकं शतसंख्याः कवचिनो दण्डिनो निषङ्गिणश्च रक्षितारः । तत्प्रायमेव बलमिदं दृश्यते । यदि न प्रत्ययस्तत्पृच्छत ।

**वटवः**—भो भोः, किंप्रयोजनोऽयमश्वः परिवृतः पर्यटति ।

**लवः**—(सस्पृहमात्मगतम्) अश्वमेध इति नाम विश्वविजयिनां क्षत्रियाणामूर्जस्वलः सर्वक्षत्रियपरिभावी महानुत्कर्षनिकषः ।

(नेपथ्ये ।)

**योऽयमश्वः पताकेयमथवा वीरघोषणा ।**
**सप्तलोकैकवीरस्य दशकण्ठकुलद्विषः ॥ २७ ॥**

**लवः**—(सव्यथमिव) अहो संदीपनान्यक्षराणि ।

**वटवः**—किमुच्यते । प्राज्ञः खलु कुमारः ।

**लवः**—भो भोः, किमक्षत्रिया पृथिवी यदेवमुद्घुष्यते ।

---

धप्रकरणकथितमिति शेषः । एतदेवानुस्मारयति—**प्रत्येकमित्यादिना** ॥ कवाचिदण्डिनिषङ्गिणः पृथक् पृथक् शतसंख्ययाऽश्वमेधप्रकरणे श्रूयन्त इत्यर्थः । वेदोक्तमर्थं दृष्टे वस्तुन्युपनयति—**तत्प्रायमेवेति** ॥ **बलम्** अश्वरक्षकं सैन्यम् । **यदि न प्रत्यय इति** ॥ अस्मदुक्ते भवतां विश्वासो नास्ति चेदित्यर्थः । **तत्** तर्हि । **पृच्छतेति** ॥ अश्वरक्षितॄनिति शेषः । एवं लववचनजातप्रत्यभिज्ञास्तद्दृढीकरणार्थं सैनिकान् पृच्छति—**किंप्रयोजन इति** ॥ सस्पृहमिति चक्रवर्तितनयस्वभावात् । **विश्वविजयिनां** भुवनजेतॄणाम् । **ऊर्जस्वलो** वीर्यवान् । ज्योत्स्ना तमिस्रेत्यादावूर्जस्वलशब्दो बलजन्ततया निपातितः । **सर्वक्षत्रियपरिभावीति** ॥ सर्वानपि क्षत्रियानधिकतरं परिभवतीत्यर्थः । बहुलमाभीक्ष्ण्य इति णिनिः । **महान्** अतिशयितः **उत्कर्षनिकषः** उत्कर्षपरीक्षास्थानम् । वटुजनप्रश्नस्योत्तरमाह—**योऽयमित्यादिना** ॥ पताका यशःपताका । ननु दानापदानादिनाऽपि यशो जायेतैवेत्यत्राह—**अथवेति** ॥ वीर इति घोषणा वीरघोषणा । ननु वीरजनपरिभवसंभावनाच्च युक्तमीदृशं वचनमित्यत्राह—**सर्वलोकैकवीरस्येति** ॥ कथमिदमवगम्यत इत्यत्राह—**दशकण्ठकुलद्विष इति** ॥ अहो इति खेदे । **संदीपनानीति** ॥ वीरजनहृदयदीप्तिकराणीत्यर्थः । व्यवसायवर्धनानीति यावत् । **अक्षराणि** वचनानि । योऽयमश्व इत्यादीनि सेनाध्यक्षपुरुषवचनानीत्यर्थः । अथाधिकारिपुरुषवचनजनितदृढप्रत्ययो वटुजनः सविस्मयं कुमारमनुमोदते—**किमुच्यत इति** ॥ प्रकृष्टाज्ञा यस्य सः **प्राज्ञः** । लौकिके वैदिके च निपुण इत्यर्थः । क्षत्रियरहिता **अक्षत्रिया** शूरजनशून्येति यावत् । अत्र हेतुमाह—**यदिति** ॥

(नेपथ्ये।)

रे रे, महाराजं प्रति कुतः क्षत्रियाः।

लवः—धिग्जाल्मान्।

यदि ते सन्ति सन्त्वेव केयमद्य बिभीषिका।
किमुक्तैरेभिरधुना तां पताकां हरामि वः॥ २८॥

हे वटवः, परिवृत्य लोष्टैरभिघ्नन्त उपनयतैनमश्वम्। एष रोहितां मध्ये वराकश्चरतु।

(प्रविश्य सक्रोधः पुरुषः।)

पुरुषः—धिक्चपल, किमुक्तवानसि। तीक्ष्णदण्डधरा ह्यायुधीय-

---

**एवं** वीरजनाधिक्षेपेण **उद्घुष्यते** उद्घोषणं क्रियते। ननु क्षत्रियाभावादित्याह—**महाराजं प्रतीति॥ कुत इति॥** सप्तम्यर्थे तसिः। **धिगित्यादि॥ जाल्मानिति॥** स्वकुलशीलाद्यनुरूपाचिन्ताशून्यानित्यर्थः। औणादिको मनिन्प्रत्ययः। जलति निश्चितधीर्न भवतीति निर्विचारो जाल्म इति प्राक्रियासर्वस्वे। 'जाल्मोऽसमीक्ष्यकारी स्यात्' इत्यमरः। **ते** क्षत्रियाः। अशूराणां क्षत्रियाणां जीवितं वृथैवेत्यर्थः। न पुनरहमेतेष्वन्यतम इत्याह—**केयमिति॥** अद्य इयं बिभीषिका का इति संबन्धः। **अद्य** मध्यत्र वर्तमाने **इयं** वटुजने प्रवृत्ता भीषयितुमिच्छा बिभीषा। बिभीषैव बिभीषिका। सन्नन्तत्वेन धातुत्वाद्धात्वर्थमात्रे ण्वुल्वाच्यः इति भावे ण्वुल्। किंशब्दः क्षेपे। नहि शूरा विकत्थन्त इति न्यायेनाह—**किमुक्तैरिति॥ तां** युष्माभिरुपपादितां **पताकाम्** एकवीरताप्रतिबोधिनीम्। **परिवृत्य** सैनिकाभिमुखो भूत्वा **लोष्टैः** मृत्खण्डैः **अभिघ्नन्तः** अपसारयन्तः **उपनयत** अस्मत्समीपमानयत। **एषः** अश्वः **रोहितां मध्ये** आश्रममृगाणां मध्ये **वराकः** अतिदयनीयः **चरतु** वीतभयः संचरतु। एभिर्नीतश्चेन्न चिरं जीविष्यतीत्यर्थः। **प्रविश्य सक्रोधः पुरुष इति॥** अयं तु सकलसेनापतिचरितपरीक्षणाय नियुक्तः कश्चिद्राजपुरुषः। **धिक् चपलेति॥** तव बालचापल्यमिदानीं न शोभत इति भावः। **किमुक्तवानसीति॥** अस्माभिरश्राव्यं वचनं त्वयोक्तमिति मे भावः। ततः किमित्यत्राह—**तीक्ष्णदण्डधरा इति॥** तीक्ष्णं दण्डं कुर्वाणा दण्डधराः क्रूरदण्डकारिण इत्यर्थः। **आयुधीयश्रेणयः** आयुधीयानां शस्त्रोपजीविनां श्रेणयः पङ्क्तयः। आयुधाच्छ चेति छः। शूराणां युष्माकं बालभाषिते का वा गणनेत्यत्राह—**शिशोरिति॥** अपिशब्दो मानहानिकातरतातिशयमवगमयति। **इमाम्** ऊष्मलां **न सहन्ते** न क्षमन्ते। तत् कथं सहसैव न

श्रेणयः शिशोरपि दृप्तां वाचं न सहन्ते । राजपुत्रश्चन्द्रकेतुरार्यसंतानः । सोऽप्यपूर्वारण्यदर्शनकुतूहलाक्षिप्तहृदयो न परागतोऽद्यापि । तत्त्वरिततरमनेन तरुगहनेनापसर्प ।

वटवः—कुमार, कृतं कृतमश्वेन । तर्जयन्ति विष्फुरितशरासनाः कुमारमायुधीयश्रेणयः । दूरे चाश्रमपदमितः । तदेहि । हरिणप्लुतकैः पलायामहे ।

लवः—किं नाम विष्फारयन्ति शस्त्राणि । (धनुरारोपयन्)

ज्याजिह्वया वलयितोत्कटकोटिदंष्ट्र-
मुद्गारिघोरघनघर्घरघोषमेतत् ।
ग्रासप्रसक्तहसदन्तकवक्त्रयन्त्र-
जृम्भाविडम्बि विकटोदरमस्तु चापम् ॥ २९ ॥

(इति यथोचितं परिक्रम्य निष्क्रान्ताः सर्वे ।)

चतुर्थोऽङ्कः ।

---

प्रतिक्रियां कुर्वन्तीत्यत्राह—**राजपुत्र इति** ॥ स्वामिहृदयापरिज्ञानादिति भावः । ईदृशे परिभवे किं स्वामिहृदयं परीक्षणीयमित्यत्राह—**आर्यसन्तान इति** ॥ तद्भृत्या न कथंचिदपि स्वायत्तकारिण इति भावः । स तु राजपुत्रः कुत्रेत्यत्राह—**सोऽपीति** ॥ **अपूर्वारण्यदर्शनकुतूहलाक्षिप्तहृदय इति** ॥ अपूर्वारण्यदर्शनजनितेन कुतूहलेनाक्षिप्तं स्वाधिकारचिन्ताजडं हृदयं यस्य सः । **न परागत इति** ॥ नतु प्रतिनिवृत्त इत्यर्थः । **अद्यापि** इदानीमपि **तत्** तस्मात् **त्वरिततरम्** अतिजवेनैव । **अनेन** पुरतो दृश्यमानेन **तरुगहनेन** तरुभिर्गहनेन दुर्गमेण सैनिकानामनुगन्तुमशक्येनेत्यर्थः । **अपसर्प** दूरतोऽपसर । **कृतमश्वेनेति** ॥ अश्वेन लभ्यमस्माकं किंचिदपि नास्तीत्यर्थः । कृतं वारण इत्यव्ययसूत्रम् । 'युगपर्याप्तयोः कृतम्' इत्यमरः । अपूर्वपशुदर्शनकुतूहलादेवास्माकमश्वलिप्सेत्यत्राह—**तर्जयन्तीति** ॥ क्रूरवचनैस्तुदन्तीत्यर्थः । छिन्त भिन्तेत्यादिकान् संलापान् कुर्वन्तीति यावत् । **विष्फुरितशरासनाः** संनद्धकार्मुका आरोपितचापा इति यावत् । चिन्तनीयमत्र प्रतिविधानमित्याह—**दूर इति** ॥ **आश्रमपदं** महामुनिगुप्तं स्थानम् । **इतः** अस्मात्प्रदेशात् । **एहि** अस्माभिः सहागच्छ । कथमीदृशाद्व्यतिकरादुत्तार इत्यत्राह—**हरिणप्लुतकैरिति** ॥ हरिणानां प्लुतकं हरिणप्लुतकम् । द्रुतपदकैर्गतिभेदैरित्यर्थः । **पलायामह इति** ॥ मृगन्याय एवेदानीमस्माभिराश्रयणीय

## पञ्चमोऽङ्कः ।

(नेपथ्ये ।)

**भो भो सैनिकाः, जातं जातमवलम्बनमस्माकम् ।**

---

इति भावः । किंशब्दः क्षेपे । नामेति क्रोधे । **विष्फारयन्ति** स्वनयन्ति । **शस्त्राणि** धनूंषि । **धनुरारोपयन्निति** ॥ आहेति शेषः । चापारोपणान्तरालकथनं संप्रहारत्वरया । **ज्याजिह्वयेति** ॥ एतच्चापं ग्रासप्रसक्तहसदन्तकवक्त्रयन्त्रजृम्भाविडम्बि अस्तु इत्यन्वयः । **एतत्** आरोप्यमाणं **चापं** संग्रामभरणक्षमं **ग्रासप्रसक्तहसदन्तकवक्त्रयन्त्रजृम्भाविडम्बि** ग्रासे कबले प्रसक्तस्य प्रकर्षेण सक्तस्य अत एव हसतोऽट्टहासं कुर्वतोऽन्तकस्य यद्वक्त्रयन्त्रं वक्त्रोदरं तस्य जृम्भां विदारणं विडम्बितुम् अनुकर्तुं शीलं यस्य तत् । अन्तकवक्त्रस्य यथा विदारणं तद्वदेव मम चापस्यारोपणकर्मापीत्यर्थः । अस्त्विति प्राप्तकाले लोट् । अत्र साधारणधर्मानाह—**ज्याजिह्वयेत्यादिना** ॥ जिह्वेव ज्या ज्याजिह्वा तया वलयिते संवेष्टिते उत्कटे क्रूरे कोटिदंष्ट्रे दंष्ट्रे इव कोटी उभयाटनी यस्येत्येकत्र । ज्यातुल्यया अतिदीर्घया जिह्वया वलयिते परिलीढे उत्कटकोटी क्रूरतीक्ष्णाग्रे दंष्ट्रे यस्मिन्नित्यन्यत्र । **उद्गारिघोरघनघर्घरघोषमिति** ॥ उद्गारी उद्गारवाननुस्वानयुक्तो घोरो घनवत् घर्घरश्च घोषो यस्य तत् । उद्गारीति पृथक् पदं वा । घोरघनघर्घरघोषमुद्गारीति संबन्धः । अवश्यमुद्गिरतीति उद्गारि । निरुपपदत्वात् आवश्यकार्थे णिनिः । अत्र विभाषोपसर्ग इत्यतो विभाषानुवृत्तेः कृत्यपि क्वचित् षष्ठी नेति केचित् इति प्रक्रियासर्वस्वकथनाद्धार्यैरामोदमुत्तममित्यादिप्रयोगदर्शनाच्च कृद्योगेऽपि कर्मता ज्ञेया । **विकटोदरमिति** ॥ विकटं विस्तृतम् उदरं काण्डाटनिगुणानामन्तरालो यस्य तत् । अन्यत्र तु स्पष्टमेव । अत्र अन्तकवक्त्रयन्त्रजृम्भणोपमया जगति यदन्तकवक्त्रजृम्भणे भवेत् तन्मम चापारोपणेऽपि संभवेदिति वस्तु प्रतीयते । उपमैव चात्रालंकारः । ननु रूपकोपमयोः संकरः । उपमारूपकयोः संकरो दुर्योज इत्यभियुक्ताः । अत एवंविधेषु स्थलेषु उपमारूपकयोः संकरस्य दुर्योजतयोपमैव व्याख्यातृभिर्व्याख्येयेत्यत्र सहृदयाः प्रमाणम् ॥ इति ॥

तुरीय एषोऽत्र यथामनीषं कथारसप्रह्वधिया रसार्द्रः ।  
अङ्को मया नाटकमौलिरत्ने व्याकारि सन्तः परिशोधयन्तु ॥

इति भावार्थदीपिकायामुत्तररामचरितव्याख्यायां चतुर्थोऽङ्कः ॥

———

नन्वेष त्वरितसुमन्त्रनुद्यमान-
व्यावल्गत्प्रजवनवाजिना रथेन।
उत्खातप्रचलितकोविदारकेतुः
श्रुत्वा नः प्रधनमुपैति चन्द्रकेतुः ॥ १ ॥

(ततः प्रविशति सुमन्त्रसारथिना रथेन धनुष्पाणिः साद्भुतहर्षसंभ्रमश्चन्द्रकेतुः ।)

**चन्द्रकेतुः**—आर्य सुमन्त्र, पश्य पश्य ।

---

पञ्चमोऽङ्कः ।

अथ नीरसवस्तुविस्तराभावाद्रसभावचिह्निताथोंपनिबन्धनोपलक्षितमङ्कमेवोपनिबध्नन् प्रविष्टपात्रेण चन्द्रकेतुप्रवेशं कथयति—**नैपथ्य इत्यादिना** ॥ उक्तं च—'अङ्क इति रूढशब्दो भावैश्च रसैश्च चिह्नयत्यर्थान् नानाविधानयुक्तान् यस्मात्तस्माद्भवेदङ्कः' इति । अत्र य एव पूर्वस्मिन्नङ्के किंप्रयोजनोऽयमश्व इत्यादिवटुजनप्रश्नस्य योऽयमश्व इत्यादिना प्रविष्ट एवोत्तरमुक्त्वा पुनरपि भो भो किम् अक्षत्रियेत्यादिलववचनस्य अरे महाराजं प्रतीत्यादिनोत्तरमभिधाय धिग्जाल्मानित्यादिना लववचनेन कुपितः प्रविश्य धिक् चपलेत्यादिना चन्द्रकेतोः प्रवेशं सूचितवान्, स एवेदानीमपि यवनिकान्तरितो भूत्वा चन्द्रकेतुप्राप्तिमभिहितवानित्यवगन्तव्यम् । भो भो इति कान्दिशीकानां सैनिकानां परावर्तनत्वरया । जातं जातमिति दार्ढ्यप्रतिपत्त्यर्थम् । अवलम्बनं तु कीदृशमित्यत्राह—**नन्विति** ॥ एष चन्द्रकेतुः नः प्रधनं श्रुत्वा उपैति ननु इत्यन्वयः । एष इत्यभिनीयोक्तिः । **चन्द्रकेतुः** महाराजेनाश्वरक्षणार्थं प्रहितः । **नः** निजभृत्यानाम् **प्रधनं** युद्धम् **श्रुत्वा** पृथग्जनवचनादवधार्य **उपैति** सन्निधत्ते । ननुरनुमनने । नन्वपूर्वारण्यदर्शनकुतूहलात् तपोवनसन्निकर्षाच्च श्लथीकृतसन्नाहश्चन्द्रकेतुरितस्ततः संचरतीत्यत्राह—**रथेनेति** ॥ ननु दर्शनीयं तपोवनं दृष्ट्वाऽस्माभिः संभूय गन्तुं रथेनेत आयातीत्यत्राह—**त्वरितसुमन्त्रनुद्यमानव्यावल्गत्प्रजवनवाजिनेति** ॥ त्वरां प्रापितेन सुमन्त्रेण नुद्यमानाः प्रेर्यमाणा अत एव व्यावल्गन्तः प्रजवनाश्च वाजिनोऽश्वा यस्मिन् तेन । ननु यः कश्चिदन्य एवाश्रममार्गेण रथेन द्रुततरमागच्छतीत्यत्राह—**उत्खातप्रचलितकोविदारकेतुरिति** ॥ उत्खातो ध्वजदण्डोपरि प्रतिष्ठितः प्रचलितो वेगवशात्तरलितः कोविदार एव केतुः ध्वजलाञ्छनं यस्य सः । उत्खातेन उत्खननेन हेतुना प्रचलितः कोविदार एव केतुः यस्येति वा । विषमितस्थलस्खलनात् प्रचलितकेतुलाञ्छनेनेत्यर्थः । 'कोविदारश्चमरकः कुद्दालो युगपत्रकः' इत्यमरः । **साद्भुतहर्षसंभ्रम इति** ॥ मुनिशिशोः पराक्रमश्रवणादद्भुतम् । समरलाभाद्धर्षः । स्वजननाशश्रवणात्संभ्रमः । पश्य पश्येत्यद्भुतातिशयात् ।

किरति कलितकिंचित्कोपरज्यन्मुखश्री-
रविरतगुणगुञ्जत्कोटिना कार्मुकेण ।
समरशिरसि चञ्चत्पञ्चचूडश्चमूना-
मुपरि शरतुषारं कोऽप्ययं वीरपोतः ॥ २ ॥

(साश्चर्यम् ।)

मुनिजनशिशुरेकः संवृतः सैन्यसङ्घै-
र्नव इव रघुवंशस्याप्रसिद्धप्ररोहः ।

---

**किरतीति** ॥ कोऽपि अयं वीरपोतः समराशिरसि चमूनामुपरि शरतुषारं किरतीत्यन्वयः । **कोऽपि** अनिर्देश्यपराक्रमः । अयमित्यभिनीयोक्तिः । **वीरपोतः** वीर एव शिशुः । **समरशिरसि** समरस्य शिरसि उपरितनकक्ष्यायाम् । अनेनालस्याभाव उक्तः । चमूनामित्यनेन सेनापतिबहुत्वाद्व्यूहबाहुल्यं व्यज्यते । तथा च वक्ष्यति 'आः कथमिदानीं भग्ना अपि परावृत्य पृष्ठानुसारिणः पर्यवष्टम्भयन्ति मां चमूपतय' इति । **शरतुषारं** शरमयं तुषारम् । तुषारं हिमम् । अनेन समरकर्मण्यतिमानुषत्वं व्यज्यते । **किरति** अभिवर्षति । अनेन दुष्परिहरत्वं व्यज्यते । कथमित्यत्राह—**कार्मुकेणेति** ॥ अन्यथानुपपत्त्या सिद्धस्यैव कार्मुकस्य करणत्वोक्त्या शरसंधानाकर्षणादीनामलक्ष्यत्वं व्यज्यते । कार्मुकस्य करणत्वं पुनः कथं ज्ञायत इत्यत्राह—**अविरतगुणगुञ्जत्कोटिनेति** ॥ अविरतं अविच्छिन्नं यथा तथा गुणेन हेतुना गुञ्जन्त्यौ शब्दायमाने कोटी उभयाटनी यस्य तेन । अध्यवसायान्तगामितामाह—**कलितकिंचित्कोपरज्यन्मुखश्रीरिति** ॥ कलितेनानुषक्तेन किंचित्कोपेन रज्यन्ती किमपि शोणायमाना मुखश्रीर्यस्य सः । कोपातिरेकः खलु निर्वेदादिजनकतया वीराणामध्यवसायप्रतिबन्धकः । निजकुलसादृश्यं सूचयति—**चञ्चत्पञ्चचूड इति** ॥ चञ्चन्त्यः समररभसेन लोलायमानाः पञ्चापि चूडाः शिखा यस्य सः । गोत्रचिह्नतया खलु रघुकुलकुमाराणां पञ्चशिखत्वम् । तथाच शाबरभाष्ये—'यथा शिखाकल्पो व्यवतिष्ठते, केचित्त्रिशिखाः केचित्पञ्चशिखा' इति । याज्ञवल्क्योऽपि—'चूडा कार्या यथाकुलम्' इति । रघुकुले तावत्पञ्चशिखत्वं प्रसिद्धम् । यथा—'चञ्चत्पिञ्छशिखण्डको रघुपतिश्चिच्छेद शार्वं धनुः' इति । किं पुनरत्याश्चर्यमित्यत्राह—**मुनिजनशिशुरिति** ॥ सैन्यसंघैः संवृतः एकः मुनिजनशिशुः दलितकरिकपोलग्रन्थिटंकारघोरज्वलितशरसहस्रैः मे कौतुकं करोतीत्यन्वयः । **सैन्यसंघैः** सैन्यव्यूहैः । **संवृतः** परिवृतः । एकशब्देन वीर्यातिशयो व्यज्यते । मुनिजनशिशुरित्यनेन युवभावेऽपि मुनीनां रणपाटवाभावे कथमस्य शैशव एवेदृशः पराक्रमो

दलितकरिकपोलग्रन्थिटंकारघोर-
ज्वलितशरसहस्रैः कौतुकं मे करोति ॥ ३ ॥

**सुमन्त्रः**—आयुष्मन्,

अतिशयितसुरासुरप्रभावं
शिशुमवलोक्य तवैव तुल्यरूपम् ।
कुशिकसुतमखद्विषां प्रमाथे
धृतधनुषं रघुनन्दनं स्मरामि ॥ ४ ॥

---

जायेतेत्यद्भुतातिशयो व्यज्यते । **दलितकरिकपोलग्रन्थिटंकारघोरज्वलितशरसहस्रैः** दलितकरिकपोलग्रन्थिना कटुत्वातिशयाद्दलिताः करिकपोलग्रन्थयः करिणां श्रवणसंधानानि येन तेन टङ्कारेण घोरं ज्वलितैः शरसहस्रैः । दलितकरिकपोलग्रन्थिभिः टंकारघोरैः ज्वलितैश्च शरसहस्रैरिति वा । **मे** बहुशः श्रुततातचरितस्यापि । **कौतुकं** स्पृहातिशयम् । कौतुकापादने कारणमाह—**रघुवंशस्याप्रसिद्धप्ररोह इवेति** ॥ अप्रसिद्धतामुपपादयति—**नव इति** ॥ उक्तं रघुवंशप्ररोहसादृश्यमनुवदति—**अतिशयितेति** ॥ शिशुमवलोक्य रघुनन्दनं स्मरामीत्यन्वयः । **शिशुम्** अतिलोभनीयम् । **अवलोक्य** दर्शनानुपदं मनसि भावयित्वा **रघुनन्दनं** श्रीरामचन्द्रं **स्मरामि** शिशुदशायां संस्थित इव पश्यामि । स्मृतिचक्षुषाऽवलोकयामि । संस्कारोद्बोधे कारणमाह—**अतिशयितसुरासुरप्रभावमिति** ॥ अतिशयितोऽधःकृतः सुराणामसुराणां च प्रभावो येन तम् । अतिशयिताः सुराश्च असुराश्च येन तादृशः प्रभावो यस्येति वा । ननु बाल्य एवैतादृशनिरतिशयप्रभावा अपि केचन राजपुत्राः श्रूयन्ते तत्कथमेतद्दर्शनेन रामभद्रविषयसंस्कारोद्बोध इत्यत्राह—**तवैव तुल्यरूपमिति** ॥ तथापि कथं बालकदर्शनेन रघुनन्दनस्मरणमित्यत्राह—**कुशिकसुतमखद्विषां प्रमाथे धृतधनुषमिति** ॥ अत्र लवदर्शनाद्रघुनन्दनस्मरणेन स्मरणमलंकारः । तदुक्तम्—यथानुभवमर्थस्य दृष्टे तत्सदृशे स्मृतिः स्मरणमिति । नन्वत्र 'भूयोऽवयवसामान्ययोगो जात्यन्तरस्य तत्' इत्युक्तेः पुत्रे पित्रवयवसामान्ययोगस्य सादृश्यानुपपत्तेः सदृशवस्तुदर्शनाभावात् कार्यकारणादिष्वेकतरदर्शनेनेतरसंबन्धिस्मरणस्य चारुत्वाभावाच्च न स्मरणमलंकारः, अपितु उपमैव इति चेत् मैवम् । वस्तुतोऽस्य रामभद्रतनयत्वेऽपि तस्य तदानीमविदितत्वेनानयोर्विजातीयत्वान्मुनिकुमारके सादृश्यसंभवात्तद्दर्शनेन रघुनन्दनस्मरणस्य चारुत्वातिशयप्रतीतेरलंकारव्यवहारोपपत्तेः । अन्यथा तवैव तुल्यरूपमित्यत्रापि ज्यायःकनीयसोः साधर्म्यासंभवादुक्तदोषोपपत्तेः

**चन्द्रकेतुः**—मम त्वेकमुद्दिश्य भूयसामारम्भ इति हृदयमपत्रपते ।

अयं हि शिशुरेककः समभरेण भूरिस्फुर-
त्करालकरकन्दलीजटिलशस्त्रजालैर्बलैः ।
क्वणत्कनककिङ्किणीझणझणायितस्यन्दनै-
रमन्दमददुर्दिनद्विरदडामरैरावृतः ॥ ५ ॥

कथमुपमैवालंकार इति निःशङ्कमभिधीयते । उक्तं चैतदालङ्कारिकैः—'उपमानोपमेययोरेव न कार्यकारणादिकयोः साधर्म्यं भवतीति तयोरेव समानेन धर्मेण संबन्ध उपमा' इति ॥ अथ सर्वतो निरुद्धलवप्रसरं सैनिकाभियोगमभिवीक्ष्य तेन चात्मनो यशःक्षयमभिशङ्कथाह—**ममेति** ॥ प्राथमिकतया प्रवृत्तसंप्रहारस्येत्यर्थः । **तुर्विशेषे** । को वा पुनर्विशेष इत्यत्राह—**एकमित्यादि** ॥ असहायमित्यर्थः । 'एकाकी त्वेक एककः' इत्यमरः । अज्ञातनामगोत्रपराक्रमादिकमिति वा । **उद्दिश्य** नतु यदृच्छया **भूयसाम्** अतिमहितवंशजातानामतिविपुलपराक्रमाणां बहूनां च । **आरम्भः** अभियोगः । इतिर्हेतौ । आरम्भमात्रात् नतु युद्धादिकरणात् । **हृदयं** विशेषज्ञानवत् **अपत्रपते** महाजनाल्लज्जते । 'लज्जा साऽपत्रपान्यत' इत्यमरः । वर्तमानप्रत्ययेनास्या विश्रमाभावः सूच्यते । न केवलं भवत्साधारण्येन मम विस्मय एव जायत इति वाक्यार्थः । उद्दीपनविभावमुखेन लज्जाया एवोत्कर्षमाह—**अयमिति** ॥ अयम् एककः शिशुः बलैः समभरेण आवृतः हि इत्यन्वयः । **अयं** पुरोभुवि दृश्यमानः **एककः** एकाकी **शिशुः** शरीरदार्ढ्यरहितः अभियोगानर्ह इत्यर्थः । **बलैः** अक्षान्तलवपराक्रमैः । **समभरेण** समसंनाहेन **आवृतः** निरुद्धचेष्टः कृतः । प्रसिद्धिवाचकोऽत्र हिशब्दः प्रत्येकमयमित्यादिभिः संबध्यते । अतिवेगेन पदातिभिः युगपद्युद्धकरणात्पूर्वमस्मद्बलेष्वयमयमिति प्रसिद्धः पुनर्वीक्षणे—**एकक इति** ॥ ततश्च शिशुरित्यर्थः । नन्वसमसमरचतुराशिशुदर्शनकुतूहलादेवायमिदानीमेभिः परिवार्यत इत्यत्राह—**भूरीत्यादि** ॥ भूरीणां प्रचुराणां स्फुरतां प्रकाशमानानां करालानां कराणां तेजसां कन्दलीभिः प्ररोहैर्जटिलानि निम्नोन्नतरूपतया प्रतीयमानानि हेतिजालानि येषां तैः । प्रहाररभसादुद्यतबहुविधायुधैरित्यर्थः । पुनः कीदृशैरित्यत्राह—**क्वणत्कनककिङ्किणीझणझणायितस्यन्दनैरिति** ॥ क्वणन्तीभिः कनककिङ्किणीभिः झणझणायितानि स्यन्दनानि येषां तैः । पुनरपि कीदृशैरित्यत्राह—**अमन्दमददुर्दिनद्विरदडामरैरिति** ॥ अमन्देन तुच्छेतरेण मददुर्दिनेन मदप्रवाहेण हेतुना दुर्दिनेन अन्धीकृतसर्वदिगन्तरेण द्विरदानां मत्तेभानां डामरोऽहंकारो येषु तैः । असमप्रविभवं वीरप्रकाण्डमेनमुद्दिश्यास्माकं समप्रतायां नैष्फल्यसंभवाल्लज्जाकरमेषां संनहनमिति भावः । त्रपातिरेकात् सैन्योपरि कोपं

सुमन्त्रः—वत्स, एभिः समस्तैरपि नालमस्य, किं पुनर्व्यस्तैः।

चन्द्रकेतुः—आर्य, त्वर्यतां त्वर्यताम्। अनेन हि महानाश्रितजनप्रमारोऽस्माकमारब्धः। तथा हि।

आगर्जद्गिरिकुञ्जकुञ्जरघटाविस्तीर्णकर्णज्वर-
ज्यानिर्घोषममन्ददुन्दुभिरवैराध्मातमुज्जृम्भयन्।
वेल्लद्भैरवरुण्डखण्डनिकरैर्वीरो विधत्ते भुवं
तृष्यत्कालकरालवक्त्रविघसव्याकीर्यमाणामिव ॥ ६ ॥

सुमन्त्रः—(स्वगतम्।) कथमीदृशेन सह वत्सस्य चन्द्रकेतोर्द्वन्द्वसंप्रहारमनुजानीमः। (विचिन्त्य) अथवा इक्ष्वाकुकुलवृद्धाः खलु वयम्। प्रत्युपस्थिते च रणे का गतिः।

---

दृष्ट्वाऽह—**एभिरिति** ॥ प्रवीरसंमतैरित्यर्थः। **समस्तैः** सर्वाभिसारोद्युक्तैः। किंशब्दः क्षेपे। कीदृशो वा निकर्षो जायेत, न कोऽपीत्यर्थः। अस्य लोकोत्तरप्रभावस्य प्रत्येकाभियोगे पुनः किं वा कथनीयमिति कैमुत्यन्यायेनाह—**किं पुनर्व्यस्तैरिति** ॥ अथ सुमन्त्रस्य कुमारयोरुभयोरप्युपरि साधारण्येन प्रसृतात्स्नेहरसाद्विस्मयातिशयाच्च किमपि निष्पन्दतामालोक्य ससंभ्रममाह—**आर्येति** ॥ **अनेन** सकलसैनिकैः परिवृतेनापीत्यर्थः। हिशब्दः प्रसिद्धौ। **महान्** मयैव प्रतिकर्तव्यः **आश्रितजनप्रमारः** भृत्यजननिग्रहः। आरब्धः। अतः शीघ्रमेव गत्वा स्वजनरक्षणं कर्तव्यमिति भावः। उक्तमेवार्थमुपपादयति—**तथाहीति** ॥ तथाहि वीरः भुवं वेल्लद्भैरवरुण्डखण्डनिकरैः तृष्यत्कालकरालवक्त्रविघसव्याकीर्यमाणामिव विधत्ते इत्यन्वयः। **तथा** उक्तप्रकारेण। हिर्हेतौ। **वेल्लद्भैरवरुण्डखण्डनिकरैः** वेल्लतां प्रचलतां अत एव भैरवाणां दुर्दर्शानाम् रुण्डखण्डानां मांसखण्डानां निकरैः समूहैः। **तृष्यत्कालकरालवक्त्रविघसव्याकीर्यमाणामिव** तृष्यतो बुभुक्षितस्य कालस्यान्तकस्य करालैः वक्त्रविघसैः वक्त्रपतितैः विघसैः भुक्तशेषैरिवेत्यर्थः। 'अमृतं विघसो यज्ञशेषभोजनशेषयोः' इत्यमरः। वीरत्वमेवोपपादयति—**आगर्जदिति** ॥ आगर्जद्गिरिकुञ्जायाः बृंहितरवैराध्मायमानपर्वतकन्दरायाः कुञ्जरघटायाः गजसेनायाः विस्तीर्णकर्णज्वरात्मकज्यानिर्घोषमुज्जृम्भयन् वर्धयन्नित्यर्थः। आगर्जद्गिरिकुञ्जं शब्दायमानपर्वतकन्दरं कुञ्जरघटाविस्तीर्णकर्णज्वरं च ज्यानिर्घोषमुज्जृम्भयन्निति वा। कीदृशमित्यत्राह—**अमन्ददुन्दुभिरवैराध्मातमिति** ॥ मदीयसैन्यपटहरवोऽप्येतस्य ज्यानिनादपरिबृंहणार्थमेव नियतं परिणमतीत्यर्थः। अत्र शृङ्गारहास्यव्यतिरिक्तानां षण्णां रसानां

चन्द्रकेतुः—(सविस्मयलज्जासंभ्रमम् ।) हन्त धिक् । अपवृत्तान्येव सर्वतः सैन्यानि मम ।

सुमन्त्रः—(रथवेगं निरूप्य) आयुष्मन्, एष ते वाग्विषयीकृतः स वीरः ।

चन्द्रकेतुः—(विस्मृतिमभिनीय) आर्य, किंनामधेयमाख्यातमाख्यायकैः।

सुमन्त्रः—लव इति ।

चन्द्रकेतुः—

भो भो लव महाबाहो किमेभिस्तव सैनिकैः ।
एषोऽहमेहि मामेव तेजस्तेजसि शाम्यतु ॥ ७ ॥

सुमन्त्रः—कुमार, पश्य पश्य ।

---

संकरः । कथमिति वितर्के । **ईदृशेन** बहुवीरविजयिना **वत्सस्य** बालकस्य **संप्रहारं** युद्धम् **अनुजानीमः** अनुमन्यामहे । युद्धप्रसंगान्निवर्तनमेव युक्तमिति भावः । **विचिन्त्येति** ॥ कुलोचितात् क्षत्रधर्मान्निवर्तनं केवलमनुचितमिति विचार्येत्यर्थः । आहेति शेषः । वचनप्रकारमेवाह—**अथवेति** ॥ **इक्ष्वाकुकुलवृद्धाः** इक्ष्वाकुप्रभृतिराजर्षिवृत्तज्ञाः । प्रत्युपस्थिते च रण इत्यनेन कालहरणमप्यनुचितमिति व्यज्यते । **का गतिरिति** ॥ अनुमननं विनास्माकमन्या गतिर्न दृश्यत इत्यर्थः । एकस्मिन् बहूनामुद्योगं दृष्ट्वैव विस्मयलज्जासंभ्रमाः । हन्तेति विषादे । धिगिति त्रपायाम् । **अपवृत्तानि** पराङ्मुखानि । एवशब्देन सौमुख्यचिन्तापि नास्त्येवेति प्रकाश्यते । सर्वत इत्यनेन कस्मिंश्चित्कोणे केनापि न युद्धोन्मुखतया स्थीयत इति व्यज्यते । आयुष्मन् स वीर एष इति संबन्धः । **सः** अस्मत्सैन्यप्रमाथी **एषः** पुरोवर्ती जातः । अतः किं कर्तव्यमित्यत्राह—**ते वाग्विषयीकृत इति** ॥ सामसाध्यश्चेदिदानीं संप्रहारो माऽस्त्विति भावः । नामविस्मृतिर्विस्मयादिवशात् । **आख्यायकैः** एतच्चरित्रवक्तृभिः पुरुषैः । भो भो इति बोधनीयत्वरया द्विर्वचनम् । **महाबाहो** विपुलतरपराक्रम । इदानीमेतावतैव तव महाबाहुत्वमाविष्कृतम् । अतः पराजितानां हननं वृथैवेति भावः । यदि पुनर्दर्पकण्डूपशमाभावादेव तादृशं कदनं करोषि तर्हि तदपनोदनमहमेव तावत् करोमीत्याह—**एषोऽहमिति** ॥ **एहि** आगच्छ । मामेवेत्यनेन क्षणमात्रमभिमुखीभूय तिष्ठसि चेत् बहुमतोऽसि, न पुनः क्षुद्रतरपदातिप्रमथनेनापीति व्यज्यते । नन्वपर्याप्त एव मम त्वमपीत्यत्राह—**तेजस्तेजसि शाम्यत्विति** ॥ एवमाहूतस्य पराभिपतनमभि-

व्यपवर्तत एष बालवीरः
पृतनानिर्मथनात्त्वयोपहूतः ।
स्तनयित्नुरवाद्द्विपावलीना-
मुपमर्दादिव दृप्तसिंहशावः ॥ ८ ॥

(ततः प्रविशति धीरोद्धतपरिक्रमो लवः ।)

लवः—साधु राजपुत्र, साधु । सत्यमैक्ष्वाकः खल्वसि । तदहं परागत एवास्मि ।

(नेपथ्ये महान्कलकलः ।)

लवः—(सावज्ञं परावृत्य ।) आः कथमिदानीं भग्ना अपि परावृत्य

---

वीक्ष्याह—**पश्य पश्येति** ॥ सावधानतया द्रष्टव्यं स्थातव्यं चेति भावः । **व्यपवर्तत इति** ॥ त्वया उपहूतः एष बालवीरः पृतनानिर्मथनात् व्यपवर्तते इत्यन्वयः । बालवीर इत्यनेन अद्भुतातिशयः प्रतीयते । **पृतनानिर्मथनात्** पृतनाया निर्मथनात् निबर्हणात् **व्यपवर्तते** परावर्तते । प्रकृतपृतना-निर्मथनमुपेक्ष्य त्वदभिमुखमागच्छतीत्यर्थः । उक्तमर्थं हृदयंगमीकरोति—**स्तनयित्नुरवादिति** ॥ स्तनयित्नोर्मेघस्य रवात् गर्जितादित्यर्थः । **द्विपावलीनां** गजसमूहानाम् **उपमर्दात्** निबर्हणात् **दृप्तसिंहशावः** दृप्तोऽप्र-तिविधेयः सिंहशावः सिंहशिशुः । उक्तोपमया द्वयोरप्यपरिमितपराक्रमत्वादे-कतरस्य जयः पराजयो वा नास्त्येवेत्युभयोरुपशमः श्रेयानिति व्यज्यते ॥ **धीरोद्धतपरिक्रम इति** ॥ धीरोद्धतः सगर्वः परिक्रमो यस्य सः । अयं च विलासो नाम सात्त्विको विकारः । तथाच दशरूपके—'गतिः सगर्वा दृष्टिश्च विलासे सस्मितं वचः' इति, 'दृष्टिस्तृणीकृतजगत्त्रयसत्त्वसारा धीरोद्धता नमयतीव गतिर्धरित्रीम् । कौमारकेऽपि गिरिवद्गुरुतां दधानो वीरो रसः किमयमेत्युत दर्प एव ॥' इत्यामुष्मिकपद्यमेवोदाहृतं च । **साध्विति** ॥ राजपुत्रस्य तव स्वकीयजनोन्मर्दकमदाह्वानं युक्ततरमेवेत्यर्थः । सत्यमिति हृदयसंमतिदार्ढ्ये । खलुः प्रसिद्धौ । पूर्वमैक्ष्वाक इति प्रसिद्धिमात्रम्, इदानीं तु मम हृदयसंम-तिर्जातेति भावः । **तत्** तस्मात् । यदि मामाह्वयसे तर्हीत्यर्थः । **परागत एव** त्वत्समीपमागत एव । इदानीं तव युद्धतृष्णामपनयामीत्यवधारणेन द्योत्यते । पृष्ठानुसारिणां बालानामविभक्तक्ष्वेलारवः कलकलः । अभिमुखीभावे पलायनं, प्रतिनिवर्तने पुनरनुपतनं च दृष्ट्वाऽवज्ञा । **परावृत्य** परिवृत्य । दृष्ट्वेति शेषः । आ इति पीडायाम् । कथमिति क्षेपे । **इदानीं** परावर्तने **भग्ना अपि** पराजिता अपि **परावृत्य** तत्तद्दिग्भ्योऽभिद्रुत्य **पृष्ठानुसारिणः** पृष्ठमनुसर्तुं शीलं येषां ते

पृष्ठानुसारिणः पर्यवष्टम्भयन्ति मां चमूपतयः। धिग्जाल्मान्।

अयं शैलाघातक्षुभितबडवावक्त्रहुतभु-
क्प्रचण्डक्रोधार्चिर्निचयकबलत्वं व्रजतु मे।
समन्तादुत्सर्पद्घनतुमुलहेलाकलकलः
पयोराशेरोघः प्रलयपवनास्फालित इव ॥ ९ ॥

(सावेगं परिक्रामति।)

**चन्द्रकेतुः**—भो भोः कुमार,

अत्यद्भुतादसि गुणातिशयात्प्रियो मे
तस्मात्सखा त्वमसि यन्मम तत्तथैव।

---

**पर्यवष्टम्भयन्ति** गतिविहीनं कुर्वन्ति। निरुन्धन्तीति यावत्। **मां** राजपुत्राभिगामिनम्। **चमूपतयः** पृतनापतयः। गम्भीराक्षेपोऽयम्। धिगिति निन्दायाम्। **जाल्मान्** स्वकुलशीलाद्युचितचिन्ताशून्यान् त्रपाहीनानिति यावत्। एतादृशान् प्रति निजोचितमवधारयति—**अयमिति**। अयम् ओघो मे शैलाघातक्षुभितबडवावक्त्रहुतभुक्प्रचण्डक्रोधार्चिर्निचयकबलत्वं व्रजतु इत्यन्वयः। **अयम्** अस्मद्गतिविघ्नकारी **ओघः** समूहः। **मे** एतादृशाधिक्कारासहिष्णोः। **शैलाघातक्षुभितबडवावक्त्रहुतभुक्प्रचण्डक्रोधार्चिर्निचयकबलत्वं** शैलाघातेन मन्दराघातेन क्षुभितः प्रचलितो यो बडवावक्त्रहुतभुक् तद्वत्प्रचण्डस्य क्रोधार्चिर्निचयस्य कबलत्वं ग्रसनयोग्यपिण्डतां व्रजतु। शैलाघातक्षुभितस्य बडवावक्त्रहुतभुजः प्रचण्डक्रोधेन जनितार्चिर्निचयस्य कबलत्वमिति च। प्राप्तकाले लोट्। अस्मत्प्रयत्नं विनाऽपि मदीयकोपाग्नावेते शलभतां व्रजेयुरिति लोटा प्रकाश्यते। उपमानेन चैतद्धृदयंगमीकरोति—**पयोराशेरिति**॥ कल्पान्तविघटितमर्यादस्येत्यर्थः। **ओघः** प्रवाहः। **प्रलयपवनास्फालितः** कल्पान्तवाताकुलितः। कीदृश ओघ इत्यत्राह—**समन्तादिति**॥ समन्तात् सर्वतः उत्सर्पन् उद्गच्छन् घनतुमुलोऽतिशयेन तुमुलो भयंकरो हेलाकलकलो हेलया जनितः कलकलः क्ष्वेलारवो यस्य सः। ओघशब्दस्तु समूहप्रवाहयोः साधारण्येनैव श्लिष्टतया प्रयुक्तः। अत्र रौद्ररसानुगुणसमासघोषाक्षरादिभिरोजोगुणो द्रष्टव्यः। **सावेगमिति**॥ आवेगः संभ्रमः। स पुनश्चन्द्रकेतुसमीपाभिसरणौत्सुक्यात्। पुनरपि सैन्योन्मर्दनोद्योगं दृष्ट्वा चन्द्रकेतुराह—**भोभो इति**॥ अत्यद्भुताद्गुणातिशयात् मे प्रियः असि, तस्मादेव सखा च असि इति यत् तत् मम तथैव इति संबन्धः। कालातिपातेऽप्येकरूपतयैवास्तामित्यर्थः। **तत्** तस्मात्।

तत्किं निजे परिजने कदनं करोषि
नन्वेष दर्पनिकषस्तव चन्द्रकेतुः ॥ १० ॥

**लवः**—(सहर्षसंभ्रमं परावृत्य।) अहो महानुभावस्यास्य प्रसन्नकर्कशा वीरवचनप्रयुक्तिर्विकर्तनकुलकुमारस्य। तत्किमेभिरेनमेव तावत्संभावयामि।

(पुनर्नेपथ्ये कलकलः।)

**लवः**—(सक्रोधनिर्वेदम्।) आः, कदर्थीकृतोऽहमेभिर्वीरसंवादविघ्नकारिभिः पापैः। (इति तदभिमुखं परिक्रामति।)

**चन्द्रकेतुः**—आर्य, दृश्यतां द्रष्टव्यमेतत्।

---

**किं** किमर्थम्। **निजे परिजन इति** ॥ धर्मतः साक्षिपरिजनस्यापि निजपरिजनत्वात् त्वदीयकदनमेव त्वया क्रियत इत्यर्थः। नन्वतिगर्वितेषु एतेषु सैनिकेष्वेव मम दर्पोपशमः कर्तुमुचित इत्यत्राह—**नन्विति** ॥ ननुरेवार्थे। **एषः** अभिमुखीभूय स्थितः। **चन्द्रकेतुः** दशरथपुत्रस्य रघुनाथानुजन्मन इन्द्रजिद्रिपोः पुत्रः **दर्पनिकषः** दर्पपरिच्छेत्ता। मया सहेदानीं क्षणमात्रं युद्धं करिष्यसि चेत्तव दर्पः स्वल्पीभवेदेवेति भावः। चन्द्रकेतुवचनगाम्भीर्याद्धर्षः। तस्य च न्यक्कारगर्भतया संरम्भः। अहो इति विस्मये। **महानुभावस्य** आकृत्यैवानुमेयमहानुभावतागुणस्येत्यर्थः। **अस्य** इतोमुखमागच्छतः **प्रसन्नकर्कशा** प्रसन्ना आपातमधुरा कर्कशा विचारदशायां हृदयप्रक्षोभदायिनी। **वीरवचनप्रयुक्तिः** वीरवचनप्रयोगः। वीरजनोचिताऽस्य वचनचातुरीति यावत्। **विकर्तनकुलकुमारस्य** महावंशजातस्य राजसूनोः आकृतिकुलयोरनुरूपा वाणी तावच्छ्रूयते। अतस्तदनुरूपमस्य कर्मापि भविष्यतीति भावः। **तत्** तस्मात्। **एनमेवेति** ॥ बहुभिरप्येभिः सह युद्धे जयोऽपि मम न्यूनतैवेत्यवधारणेन प्रकाश्यते। तावच्छब्दो वाक्यालंकारे। **संभावयामि** प्रीणयामि। **सक्रोधनिर्वेदमिति** ॥ वीरसंवादविघ्नकारित्वादेव क्रोधो निर्वेदश्च। आ इति पीडायाम्। **वीरसंवादविघ्नकारिभिः** वीरोक्तिप्रत्युक्तिरसानभिज्ञैः **कदर्थितः** पीडितः **अहं** राजपुत्रसंभावनाकुतुकी **एभिः** अभिमुखावस्थानेऽप्यसमर्थैः **पापैः** स्वामिप्रतिकूलचेष्टितैः। तिरश्चीनतयैकपार्श्वगतं स्वात्मानमपरपार्श्ववर्तिनः अश्वसेनापतीन्मुहुर्मुहुः प्रेक्षमाणं तं दृष्ट्वा चन्द्रकेतुः सविस्मयमाह—**आर्येति** ॥ **द्रष्टव्यमिति** ॥ युगपदेवोभयपार्श्ववर्तिनः परान् प्रत्येवंविधस्य युद्धकुतूहलित्वस्यान्यस्मिन्नसंभवात्सावधानमवलोकनीयमेतदिति भावः। **दर्पेणेति** ॥ एनमपि जेष्यामीति दर्पः।

दर्पेण कौतुकवता मयि बद्धलक्ष्यः
पश्चाद्बलैरनुसृतोऽयमुदीर्णधन्वा ।
द्वेधा समुद्धतमरुत्तरलस्य धत्ते
मेघस्य माघवतचापधरस्य लक्ष्मीम् ॥ ११ ॥

सुमन्त्रः—कुमार एवैनं द्रष्टुमपि जानाति । वयं तु केवलं परवन्तो विस्मयेन ।

चन्द्रकेतुः—भो भो राजानः,

संख्यातीतैर्द्विरदतुरगस्यन्दनस्थैः पदाता-
वत्रैकस्मिन्कवचनिचितैर्मेध्यचर्मोत्तरीये ।
कालज्येष्ठैरभिनववयःकाम्यकाये भवद्भि-
र्योऽयं बद्धो युधि समभरस्तेन धिग्वो धिगस्मान् ॥

---

कौतुकवतेति ॥ बहूनां पराजये दृष्टेऽपि ममाह्वानात् स च कौतुकेनानुविद्धश्चेत्यर्थः । मयि आह्वानकारिणि बद्धलक्षः निरुद्धदृष्टिः उदीर्णधन्वा आकृष्टधन्वा उत्क्षिप्तधन्वेति वा विष्फारितधन्वेति वा । द्वेधा इतरेतरप्रातिकूल्येन । समुद्धतमरुत्तरलस्य समुद्धताभ्यां प्रणुन्नाभ्यां मरुद्भ्यां वाताभ्यां तरलस्य अनवस्थितस्य गतागतं कुर्वत इत्यर्थः । माघवतचापधरस्य ऐन्द्रचापधरस्य लक्ष्मीं शोभाम् । अत्रोभयोरपि तरलत्वं नीलवर्णत्वं विचित्रचापधरत्वं च साम्ये निमित्तम् । अन्यस्य लक्ष्मीं कथमन्यो धत्त इत्यौपम्यपर्यवसायित्वान्निदर्शनालंकारः । उत्साहाङ्गभूतानां च दर्पकौतुकक्रोधचपलतादीनामिह शबलताऽपि । कुमार एवेत्यवधारणेन 'विद्वानेव विजानाति विद्वज्जनपरिश्रमम्' इति न्यायेनान्येषां दर्शनीयताबोधोऽपि नास्तीति व्यज्यते । एनं निरतिशयपराक्रमशालिनम् । द्रष्टुमपीत्यपिशब्देन संलापाद्युचिताचरणे पुनः का वा कथेति व्यज्यते । जानातीत्यनेन वयं तु केवलमतिविस्मयेन जडीभूताः किमपि न जानीम इति व्यज्यते । अन्याभिमुखमेकाकिनं पदातिं प्रति वाहनस्थानां बहूनामुद्योगं दृष्ट्वा सावज्ञमाह—भो इति ॥ राजान इत्याक्षेपगर्भं संबोधनम् । संख्यातीतैरिति ॥ भो राजानः भवद्भिः युधि अत्र योऽयं समभरः बद्धः तेन वः धिक् अस्मान् धिक् इत्यन्वयः । भवद्भिः लोकसंमतैः, तत्र तत्र समरे दर्शितापदानैरित्यर्थः । युधि अनतिलङ्घनीयमर्यादे अत्र अस्मिन् । इतः पूर्वमदृष्टसमरसाहस इत्यर्थः । योऽयमित्यनेन युष्माकं कथमिह ईदृशी संप्रतिपत्तिर्जातेति व्यज्यते । समभरः समसंनाहः । बद्धः विरचितः । तेन उक्तरूपेण समभररचनेन वः युष्मान् धिक् न्यक्कुर्महे

**लवः**—(सोन्माथम्) आः, कथमनुकम्पते नाम । (ससंभ्रमं विचिन्त्य) भवतु । कालहरणप्रतिषेधाय जृम्भकास्त्रेण तावत्सैन्यानि संस्तम्भयामि। (इति ध्यानं नाटयति ।)

**सुमन्त्रः**—तत्किमकस्मादुल्लोलाः सैन्यघोषाः प्रशाम्यन्ति ।

**लवः**—पश्याम्येनमधुना प्रगल्भम् ।

**सुमन्त्रः**—(ससंभ्रमम् ।) वत्स, मन्ये कुमारकेणानेन जृम्भकास्त्रमामन्त्रितमिति ।

---

**अस्मान्** युष्मद्भर्तॄन् **धिक्** न्यक्कुर्महे । भृत्यकर्मणाऽपि स्वामिदोषो जायतैवेति भावः । तदुक्तं श्रीमद्भागवते—'यन्नामानि च गृह्णाति लोको भृत्ये कृतागसि । सोऽसाधुवादस्तत्कीर्तिं हन्ति त्वचमिवामयः ॥' इति एवं भृत्यजनमात्मानं च विनिन्दन् पुनश्चाभियोज्याभियोक्तॄणां विशेषणदानद्वारा समसन्नाहानौचित्यमेवोपपादयति—**संख्यातीतैरित्यादिना** ॥ संख्यातीतैरित्यस्यासमतामाह—**एकस्मिन्निति** ॥ द्विरदतुरगस्यन्दनस्थैरित्यस्य—**पदाताविति** ॥ कवचनिचितैरित्यस्य—**मेध्यचर्मोत्तरीय इति** ॥ कालज्येष्ठैरित्यस्य—**अभिनववयःकाम्यकाय इति** ॥ अत्र परिकरविषमयोः संकरः । **सोन्माथमिति** ॥ आत्मनः समरम्भसानर्हताप्रकटनाज्जातश्चित्तप्रक्षोभ उन्माथः । कथमिति वितर्के । नामेति क्रोधे । इदानीमेतत्सैनिकेषु मयैव शूलोत्क्षेपं प्रक्षिप्तेष्वपि केवलमनुकम्पया किमु निन्दैव क्रियत इति भावः । भवत्विति निर्दोषे । अस्मन्निन्दनस्य कालहरणप्रतिषेधस्य च निर्दोष उपायो दृष्ट इत्यर्थः । स तु पुनः कीदृश इत्यत्राह—**कालहरणप्रतिषेधायेति** ॥ कालविलम्बनपरिहरणायेत्यर्थः । **जृम्भकास्त्रेण** इतः पूर्वमनुपयुक्तप्रयोगेण स्वतः प्रकाशिनास्त्रेण **तावत्** प्रथमं **सैन्यानि** अस्मदीप्सितपरिपन्थीनि **स्तम्भयामि** निश्चेष्टतामापादयामि । चन्द्रकेतोर्दर्पमपनीय पश्चाद्यथोचितं करिष्यामीति भावः । इतिशब्द उक्तौ । **ध्यानम्** अस्त्रदेवतास्मरणम् । अथ सैनिकघोषस्य सहसैवोपशममाकलय्य साशङ्कमाह—**तदिति** ॥ **तत्** तर्हि यदि सेनापतिभिः समसन्नाहेनायं कुमारोऽभियुज्यते ततः कथमेतदुपपद्येतेत्यर्थः । किंशब्दो जिज्ञासायाम् । **अकस्मात्** निर्हेतुकमेव **सैन्यघोषाः** सैनिकानां व्यूहीभावजनिताः क्ष्वेलारवाः **प्रशाम्यन्ति** उपरमन्ति । **पश्यामि** संभावयामि **एनम्** अभिमुखीभूयाऽगच्छन्तम् । प्रगल्भमिति गम्भीराक्षेपे, जितकाशिनमित्यर्थः । **ससंभ्रममिति** ॥ सैन्यपारवश्यं दृष्ट्वा संभ्रमः । **वत्सेति** ॥ संबोधनकाका त्वयेदानीं सम्यगवहितमनसा भवितव्यमिति द्योत्यते । कुत इत्यत्राह—**मन्य इति** ॥

चन्द्रकेतुः—अत्र कः संदेहः ।

व्यतिकर इव भीमस्तामसो वैद्युतश्च
प्रणिहितमपि चक्षुर्ग्रस्तमुक्तं हिनस्ति ।
अथ लिखितमिवैतत्सैन्यमस्पन्दमास्ते
नियतममितवीर्यं जृम्भते जृम्भकास्त्रम् ॥ १३ ॥

आश्चर्यमाश्चर्यम् ।

पातालोदरकुञ्जपुञ्जिततमःश्यामैर्नभो जृम्भकै-
रुत्तप्तस्फुरदारकूटकपिलज्योतिर्ज्वलद्दीप्तिभिः ।

---

संभावयामीत्यर्थः । कुमारेणेत्यनेन विस्मयनीयता प्रकाश्यते । जृम्भकास्त्रमामन्त्रितमित्यनेन प्रथमाङ्कुरितरामभद्रतनयत्वशङ्कैवोपोद्बल्यते । अत्र दयाविषादविस्मयादीनां संकरः । सुमन्त्रकथितमेव दृढीकरोति—**कः संदेह इत्यादिना** ॥ **व्यतिकर इति** ॥ अमितवीर्यं जृम्भकास्त्रं जृम्भते नियतमित्यन्वयः । **अमितवीर्यम्** इतरास्त्रव्यतिरिक्तवीर्यं **जृम्भकास्त्रं** तातपादेभ्योऽन्येनादृष्टप्रयोगसंहारं **जृम्भते** वर्धते । उक्तमेवार्थमुपपादयति—**प्रणिहितमिति** ॥ प्रकर्षेण निहितमित्यर्थः । अपिर्विरोधे । **चक्षुः** नायनं तेजः **हिनस्ति** पीडयति । जृम्भकास्त्रमित्यर्थात् । ग्रस्तमुक्तमिति क्रियाविशेषणम् । ग्रस्तत्वेन मोचनं यथा तथा हिनस्तीत्यर्थः । विषयान् प्राप्य श्लथीभूयेव निवर्तनं यथा तथैवेति यावत् । जृम्भकास्त्रतेजसश्चासाधारणं स्वरूपमुत्प्रेक्षया बोधयति—**वैद्युत इति** ॥ विद्युत्संबन्धीत्यर्थः । **तामसः** तमस्संबन्धी **व्यतिकरो** मेलनम् । कार्यमुखेनापि बोधयति—**अथेति** ॥ अथशब्दोऽर्थान्तरकथने । **लिखितमिवेति** ॥ बाह्येनाभ्यन्तरेणापि स्पन्देन रहितमित्यर्थः । **एतत्** एकस्वभावं **सैन्यं** सेना **अस्पन्दं** निर्विकारम् शिलापुत्रिकायमाणमित्यर्थः । पुनरपि विस्मयातिरेकेणाह—**आश्चर्यमिति** ॥ जृम्भकैः नभः अवस्तीर्यते इत्यन्वयः । **जृम्भकैः** जृम्भकास्त्रतेजोभिः **नभः** अन्तरीक्षम् **अवस्तीर्यते** पूर्यते । कीदृशैरित्यत्राह—**पातालोदरकुञ्जपुञ्जिततमःश्यामैरिति** ॥ पातालोदर एव कुञ्जे पुञ्जितं यत्तमः तद्वच्छ्यामैरित्यर्थः । अत्र कुञ्जशब्देन गर्भगृहं लक्ष्यते । अदृष्टतरणिकिरणतया श्यामलतमतमोवन्मलिनैरित्यर्थः । इतरास्त्रव्यतिरिक्तं विरुद्धधर्माध्यासितत्वेनातिविस्मयनीयं चास्य स्वरूपमित्याह—**उत्तप्तस्फुरदारकूटकपिलज्योतिर्ज्वलद्दीप्तिभिरिति** ॥ उत्तप्तं पुटपाकशोधितम् अत एव स्फुरदत्युज्ज्वलं यदारकूटं पित्तलं तस्य कपिलं यज्ज्योतिः तद्वज्ज्वलन्ती दीप्तिः येषां तैः । उत्प्रेक्षया पुनरुक्तमर्थं हृदयंगमी-

कल्पाक्षेपकठोरभैरवमरुद्व्यस्तैरभिस्तीर्यते
मीलन्मेघतटित्कडारकुहरैर्विन्ध्याद्रिकूटैरिव ॥ १४ ॥

सुमन्त्रः—कुतः पुनरस्य जृम्भकाणामागमः स्यात् ।

चन्द्रकेतुः—भगवतः प्राचेतसादिति मन्यामहे ।

सुमन्त्रः—वत्स, नैतदेवमस्त्रेषु विशेषतो जृम्भकेषु । यतः ।

कृशाश्वतनया ह्येते कृशाश्वात्कौशिकं गताः ।
अथ तत्संप्रदायेन रामभद्रे स्थिता इति ॥ १५ ॥

चन्द्रकेतुः—अपरेऽपि प्रचीयमानसत्त्वप्रकाशाः स्वयं सर्वं मन्त्रदृशः पश्यन्ति ।

सुमन्त्रः—वत्स, सावधानो भव । परागतस्ते प्रतिवीरः ।

कुमारौ—(अन्योन्यं प्रति ।) अहो प्रियदर्शनः कुमारः ।

---

करोति—**विन्ध्याद्रिकूटैरिवेति** ॥ अन्तरिक्षव्यापनं च तेषामुपपादयति—**कल्पाक्षेपकठोरभैरवमरुद्व्यस्तैरिति** ॥ कल्पःकल्पप्रलयः, तस्याक्षेप आगमः, तस्मिन् कठोरोऽद्रिभेदनपटुः भैरवः प्रचण्डस्वनश्च यो मरुत् तेन व्यस्तैरितस्ततः क्षिप्तैरित्यर्थः । कल्पाक्षेपे कल्पकर्तृकाक्षेपे तत्तद्भूतसंहरणे यः कठोरो बलवान् भैरवश्च मरुत् तेन व्यस्तैरिति वाऽर्थः । अस्त्रस्यासाधारणमाकारमुपपादयति—**मीलन्मेघतटित्कडारकुहरैरिति** ॥ मीलन्मेघानि, मीलितमेघानि तटित्कडाराणि तटिद्भिः कडाराणि कपिलानि कुहराणि येषां तैः । कन्दरोदरव्याकीर्णतटिन्मिश्रमेघनिकरैरिवेति संभावनादुत्प्रेक्षा । अत्र वीराङ्गभूतयोरेव रौद्राद्भुतयोः संकरः । अथ निश्चयकोट्यधिरूढया रामभद्रपुत्रत्वशङ्कयैवान्दोलितचित्तः पृच्छति—**कुत इति** ॥ रामभद्रव्यतिरेकेण जृम्भकाणामुपदेष्टा न विद्यत इति भावः । सुमन्त्राशयमजानन्नेवोत्तरमाह—**भगवत इति** ॥ स्वकीयशङ्कां चन्द्रकेतोरापादयितुं तदुक्तिमाक्षिपति—**वत्सेत्यादिना रामभद्रे स्थिता इत्यन्तेन** ॥ पुनरप्यजानन्नेवाह—**अपरेऽपीति**॥**उपचीयमानसत्त्वप्रकाशाः** उपचीयमानेन तपोविशेषैरुत्कृष्यमाणेन सत्त्वेन प्रकाशो मन्त्रदर्शनसामर्थ्यं येषां ते । **स्वयम्** उपदेशं विनैव **मन्त्रदृशः** मन्त्रदृश इति लब्धसंज्ञाः **पश्यन्ति** अवलोकयन्ति । अस्त्रोपनिषदमित्यर्थात् । अथ सैनिकान् स्तम्भयित्वा स्वसमीपमागतं लवं दृष्ट्वाह—**वत्सेति** ॥ निजरन्ध्रपरिहरणमवधानम् । भवेति प्राप्तकाले लोट् । ननुरेवार्थे **परागतः** प्रतिनिवृत्त्यागतः । **प्रवीर इति** ॥ आह्वानसमय एव बहून् जित्वाऽगतत्वात् प्रवीरशब्दवाच्य इत्यर्थः । **कुमारौ** लवचन्द्रकेतू ।

(सस्नेहानुरागं निर्वर्ण्य ।)

यदृच्छासंवादः किमु गुणगणानामतिशयः
पुराणो वा जन्मान्तरनिबिडबद्धः परिचयः ।
निजो वा संबन्धः किमु विधिवशात्कोऽप्यविदितो
ममैतस्मिन्दृष्टे हृदयमवधानं रचयति ॥ १६ ॥

**अन्योन्यमुद्दिश्येति** ॥ लवश्चन्द्रकेतुमुद्दिश्य चन्द्रकेतुश्च लवमित्यर्थः आहतुरिति शेषः । उभयोः परस्परभ्रातृत्वापरिज्ञानेऽपि, 'सतां हि संदेहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः' इत्युक्तन्यायेन तदनुरूपस्नेहातिशयजननमाह—**अहो इति** ॥ **प्रियदर्शन इति** ॥ प्रियं हृदयंगमं दर्शनं यस्य सः ॥ **सस्नेहानुरागमिति** निर्वर्णनक्रममुपपादयति । क्रमेणोत्कृष्टतां प्राप्तस्य स्नेहस्यैवानुरागशब्दवाच्यत्वात् निर्वर्णनं नाम पौनःपुन्येनावलोकनम् । **यदृच्छेति** ॥ एतस्मिन् दृष्टे मम हृदयमवधानं रचयतीति संबन्धः । **एतस्मिन्** अनुभवैकगम्यानुभावे **दृष्टे** नतु परिचिते **हृदयं** निश्चयात्मिका बुद्धिः **अवधानम्** ऐकाग्र्यं, विषयान्तरनिवर्तनमिति यावत् । **रचयति** आपादयति । अवधाननिमित्तानां च बाहुविध्येन नियतप्रतिपत्तेरभावात् तत्तद्रूपतया विकल्पयति—**यदृच्छेत्यादिना** ॥ हेतुं विनैव कस्यचित्क्वचिन्मनसोऽनुमोदनं यदृच्छासंवादः । अनुभूते वस्तुनि तथात्वप्रतीतिरित्यर्थः । विपर्ययज्ञानोदयाभाव इति यावत् । **किमु** तद्वशादिदं मम हृदयस्यावधानकरणं भवेदित्येको विकल्पः । अनेन च 'व्यतिषजति पदार्थानान्तरः कोऽपि हेतुः' इत्यादिना वक्ष्यमाणोऽर्थः संगृहीतः । नन्वनुकूला मनसो वृत्तिर्हि संवादः, सा खलु परिपन्थिनि कथमुपपद्यत इत्यत्राह—**किमु गुणानामतिशय इति** ॥ स्वकीयादपरिहीणतयैव शौर्यादेरस्मिन् संभव इत्यर्थः । परिपन्थिगतोऽपि शौर्यादिर्हि मनसोऽवधानं जनयत्येव । 'देव त्वद्विधानां गुणैकपक्षपातिनां रिपोरपि गुणाः प्रीतिं जनयन्ति' इति श्रीहर्षवचनात् । ननु तद्विषयापकारकरणं विनैव स्वस्मिन्नपकारविधायिनो गुणा अपि न तादृशाकारेण कस्यापि हृदयमभिविशेरन्नित्यत्राह—**पुराणो वेति** ॥ चिरकालानुस्यूत इत्यर्थः । **जन्मान्तरनिबिडबद्धः** अतीते जन्मनि दृढबद्धः शरीरान्तरारम्भेऽपि वासनारूपतया स्थित एतद्दर्शनादुद्बुद्ध इत्यर्थः ॥ तथाच शाकुन्तले—'रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दान् पर्युत्सुको भवति यत् सुखितोऽपि जन्तुः । तच्चेतसा स्मरति नूनमबोधपूर्वं भावस्थिराणि जननान्तरसौहृदानि ॥' इति । ननु तथाविधस्य परिचयस्य हृदयोल्लासकरणमात्र एव सामर्थ्यं, न त्वेवमवधानरचने इत्यत्राह—**निज इति** ॥ **अविदितः** पूर्वमविज्ञातः । विगलिततदंशतया प्रतीत इत्यर्थः । वाशब्दोऽवधारणे । तेन च विकल्पानां

**सुमन्त्रः**—भूयसां जीवधर्म एष यत् स्वरसमयी कस्यचित् क्वचित्प्रीतिः, यत्र लोकानामुपचारस्तारामैत्रकं चक्षूराग इति । तदप्रसंख्येयमनिबन्धनं प्रमाणमामनन्ति ।

अहेतुः पक्षपातो यस्तस्य नास्ति प्रतिक्रिया ।
स हि स्नेहात्मकस्तन्तुरन्तर्भूतानि सीव्यति ॥ १७ ॥

---

क्रमेण निश्चयाधिरोहणं सूच्यते । एवं बहुविकल्पपर्याकुलतया तिष्ठन्तं कुमारं दृष्ट्वा स्थिरीकर्तुमाह—**भूयसामिति** ॥ यः स्नेहरसः भूयसां यतः अतो जीवधर्म इति संबन्धः । **भूयसां** बहूनां, न त्वेकस्य द्वयोर्वेत्यर्थः । **जीवधर्मो** जीवस्वभावः । लवस्योपरि चन्द्रकेतोर्जायमानं पक्षपातातिशयमेव दृष्टान्तीकृत्य सर्वत्रापि तस्य जीवधर्मतां स्थिरीकर्तुमाह—**एवमिति** ॥ यथा तवास्मिन् कुमारे तथैवेत्यर्थः । अपिः संभावनायाम् । **इह** अस्मिञ्जीवलोके **कस्यचित्** यस्य कस्यापि **क्वचित्** यस्मिन् कस्मिंश्चित् **प्रीतिः** दृश्यत इति शेषः । **यत्र** यस्यां प्रीतौ । **लोकानामिति** प्रसिद्धिमासूत्रयति । शब्दस्य गौणीवृत्तिरुपचारः । तामेव परिगणयति—**तारामैत्रमिति, चक्षूराग इति च** ॥ एवं स्वरूपेण निर्देष्टुमशक्यतया यत्राभिधैव न स्पृशति तत्र सर्वत्रापि लक्षणावृत्तिरेष्टव्येत्यवगन्तव्यम् ॥ यथोक्तम्—'इक्षुक्षीरगुडादीनां माधुर्यस्यान्तरं महत् । तथापि न तदाख्यातुं सरस्वत्याऽपि शक्यते ॥' इति । **तत्** तस्मात् **अप्रसंख्येयम्** अपरिगणनीयम् अमीमांस्यमिति यावत् । **अनिबन्धनं** कारणान्तराजन्यं **प्रमाणं** कालान्तरे देशान्तरेऽवस्थान्तरे वा विसंवादरहितम् **आमनन्ति** आम्नायवन्निस्सन्देहं पठन्ति । प्रामाण्यं हि कारणान्तरं नापेक्षते, तस्य स्वतस्त्वात् । तथा चाहुः—'तस्माद्दृढं यदुत्पन्नं न विसंवादमृच्छति । ज्ञानान्तरेण विज्ञानं तत्प्रमाणं प्रमीयताम् ॥' इति । तर्हि मयेदानीमेतादृशपक्षपातानुगुणमस्मिन् किं करणीयमित्यत्राह—**अहेतुरिति** ॥ यः अहेतुः पक्षपातः तस्य प्रतिक्रिया नास्ति इति संबन्धः । अहेतुः पक्षपातः इत्यनेन भूयसामेव जीवधर्म इत्यादिना प्रतिपादितस्वाभाविकस्नेहरसोऽनूद्यते । **तस्य** तादृशस्य पक्षपातस्य । **नास्ति प्रतिक्रियेति** ॥ प्रतिक्रियानुरूपकरणम् निर्हेतुकमेव जायमान ईदृशः प्रीतिविशेषो यदि प्रतिक्रियाकांक्षी तर्हि स्नेहरसापरपर्यायः पक्षपात एव व्याकुलीभावमापद्येत । स्नेहरसप्रतिक्रिययोस्तमःप्रकाशन्यायेनैकत्रावस्थानासंभवादिति भावः । **सः** निरुपाधिकः पक्षपातः । हिशब्दः प्रसिद्धौ । **स्नेहात्मकः** स्नेहस्वरूपः । पृथगवस्थितान् पिण्डानितरेतरमुपश्लेषयतीत्येकात्मकतासंपादनसाधर्म्यात्तन्तुरित्यध्यवसायः । **अन्तरिति** ॥ कार्पासादिकृतस्तु तन्तुः पृथगवस्थितं पटादिकं प्रावरणादिरूपेण बहिरेवैकीकरोतीति

**कुमारौ**—(अन्योन्यमुद्दिश्य ।)

एतस्मिन्मसृणितराजपट्टकान्ते
मोक्तव्याः कथमिव सायकाः शरीरे ।
यद्दृष्टौ मम परिरम्भणाभिलाषा-
दुन्मीलत्पुलककदम्बमङ्गमास्ते ॥ १८ ॥

किं त्वाक्रान्तकठोरतेजसि गतिः का नाम शस्त्रं विना
शस्त्रेणापि हि तेन किं न विषयो जायेत यस्येदृशः ।
किं वक्ष्यत्ययमेव युद्धविमुखं मामुद्यतेऽप्यायुधे
वीराणां समयो हि दारुणरसः स्नेहक्रमं बाधते ॥ १९ ॥

---

व्यतिरेकः । **सीव्यति** ऐकात्म्यमापादयति । अयमत्राशयः—कारणं विना जायमानः प्रीतिविशेष एव पक्षपातशब्देनोच्यते । अन्यथा कारणनिवृत्तौ कार्यनिवृत्तिरिति न्यायेन धनदानप्रियवादाद्यभावे कार्यभूतस्य पक्षपातस्यापि निवृत्तौ कुत्रापि स्वाभाविकपक्षपातासंभवात् कस्यापि कस्मिंश्चित्साक्षादेव विस्रम्भस्यानुदयप्रसंगात् इति । उक्तं च श्रीमहाभारते—'प्रियो भवति दानेन प्रियवादेन चापरः । मन्त्रमूलफलैरन्यो यः प्रियः प्रिय एव सः ॥' इति । अत्र लवदर्शनजनितविस्मयातिरेकवशादेव चन्द्रकेतोः सुमन्त्रकथितेऽननुवाद इति द्रष्टव्यम् । **कुमारौ** लवचन्द्रकेतू । **अन्योन्यम्** इतरेतरम् । **उद्दिश्य** विषयीकृत्य, आहतुरिति शेषः । तत्प्रकारमेवाह—**एतस्मिन्निति** ॥ यद्दृष्टौ ममाङ्गं परिरम्भणाभिलाषात् उन्मीलत्पुलककदम्बमास्ते एतस्मिन् शरीरे सायकाः कथमिव मोक्तव्या इत्यन्वयः । **यद्दृष्टौ** यस्य दृष्टौ दर्शने **परिरम्भणाभिलाषात्** आलिङ्गनौत्सुक्येन **उन्मीलत्पुलककदम्बं** प्रसर्पद्रोमाञ्चनिकरम् **आस्ते** रोमाञ्चविच्छेदो न जायत इत्यर्थः । अत्र हेतुमाह—**मसृणितराजपट्टकान्त इति** ॥ मसृणितं संस्कारवशादातिमृदूकृतम् राजयोग्यं पट्टं राजपट्टं तद्वत् कान्ते कमनीये । अत्र चिन्तौत्सुक्ये व्यभिचारिणौ । पुनरङ्गिनो वीरस्यैवोन्मज्जनं प्रकाशयति—**किंत्विति** ॥ निपातसमुदायोऽयं पक्षव्यावृत्तौ । **आक्रान्तकठोरतेजसि** आक्रान्तम् अभिभूतं कठोरम् इतरतेजोऽभिभावि तेजो येन तस्मिन् । **गतिः** निर्वहणम् । युद्धाकरणे शस्त्रस्य नैष्फल्यापत्तिरित्याह—**शस्त्रेणापीति** ॥ यस्य ईदृशः विषयः न जायेत तेन शस्त्रेणापि किं हि इति योजना । **यस्य** शस्त्रस्य **ईदृशः** परिभवकारी **विषयः** प्रहरणकर्म । हिः प्रसिद्धौ । शस्त्रग्राहिताऽपि लोके विडम्बनाय भवेदिति भावः । न केवलं युद्धाकरणे शस्त्रनैष्फल्यमेव, अपितु अहमस्यावज्ञापात्रं भवेयमित्याह—**किमिति** ॥ किंशब्दो वितर्के ।

**सुमन्त्रः**—(लवं निर्वर्ण्य सास्रमात्मगतम्।) हृदय, किमन्यथा परिप्लवसे।

मनोरथस्य यद्बीजं तद्दैवेनादितो हृतम्।
लतायां पूर्वलूनायां प्रवालस्योद्गमः कुतः॥ २०॥

**चन्द्रकेतुः**—अवतारय मामार्य स्यन्दनात्।

**सुमन्त्रः**—तत्कस्य हेतोः।

---

**वक्ष्यति** इतः प्रतिनिवृत्त्येत्यर्थात्। **अयमेव** न केवलं श्रोतारः। **युद्धविमुखं** युद्धानभिलाषिणं **मां** निजसमीपाह्वायकम्। एवं वा—अयमेव, य एव पूर्वं मम युद्धोन्मुखतां दृष्ट्वा संभावितवान् स एवेत्यर्थः। युद्धविमुखं युद्धनिरुत्सुकम्। मां स्वसमीपमाहूतप्रबलरिपुम्। अयमेव मां प्रति किं वक्ष्यतीति वचनक्रियाकर्मतयैव वा योजनीयम्। पूर्वसंभावितस्य पश्चादकीर्तिप्रसूतिर्दुस्सहतरैवेति भावः। तदुक्तं भगवद्गीतायाम्—'संभावितस्य चाकीर्तिर्मरणादतिरिच्यते' इति॥ ननु भयाद्यदि निवर्तेत तर्ह्यकीर्तिर्जायेतैव न पुनः स्नेहरसादित्यत्राह—**उद्यतेऽप्यायुध इति**॥ आयुधोद्यमने खलु निवर्तनादयं मां भीरुरित्येव गणयेदित्यर्थः। ननु तवास्मिन् यदृच्छया जातः स्नेहरसो युद्धकरणात् भज्येतेत्यत्राह—**वीराणामिति**॥ हिर्यस्मादर्थे। वीराणां समयो दारुणरसो यस्मात् तस्मात् स्नेहक्रमं बाधते इति योजना। **समयः** आचारः **दारुणरसः** दारुणस्वभावः दयावार्ताऽनभिज्ञ इति यावत्। तदुक्तं श्रीमहाभारते—'घृणी कर्णः प्रमादी च तेन मेऽर्धरथो मतः' इति। दारुणं दारुणत्वं तदेव रसः सारो यस्येति वा। **स्नेहक्रमं** स्नेहानुरूपं क्रमं चेष्टितमित्यर्थः। प्रत्युद्गमपरिरम्भणादिकमिति यावत्। **बाधत इति**॥ वीराणां समयस्तावत् स्नेहानुगुणं चेष्टितं विस्मार्य स्वायत्तं युद्धादिकरणमेव कारयेदित्यर्थः। अत्र निर्वेदशङ्कामतयो वीरव्यभिचारिणः प्रतीयन्ते। सीतापुलतविरुद्धतत्परित्यजनवृत्तस्मरणादास्रम्। **हृदय** ऊहापोहकुशल **अन्यथा** ऋजुमुपहतमार्गमुज्झित्वा **परिप्लवसे** निरवलम्बे पथि धावसि। एतदेव प्रतिपादयति—**मनोरथस्येति**॥ **मनोरथस्य** रामभद्रपुत्रदर्शनरूपस्य **बीजं** निदानं सीतेति यावत्। **आदितः** कार्योत्पत्तिसंभावनासमय एव **दैवेन** न तु रामभद्रेण **हृतम्** उच्छिन्नम्। दृष्टान्तेन चैतद्धृदयंगमीकरोति—**लतायामिति**॥ पूर्वलूनायां दोहलार्पणसलिलसेचनादिना कन्दाङ्कुरप्ररोहक्रमेण मूलकाण्डशाखोपशाखाप्रतानोत्पत्तिसमय एव निकृत्तायां **प्रवालस्य** कर्णपूरादिरचनयोग्यस्य किसलयस्य, **उद्गमः** प्ररोहः। अत्र मनोरथप्रवालयोर्बीजलतयोर्लवनहरणयोश्च मिथो बिम्बप्रतिबिम्बभावकरणाद्दृष्टान्तालंकारः॥ **अवतारयेति**॥ रथस्थिरीकरणहस्तालम्बादिकान् कुर्वित्यर्थः। **माम्** अभिमुखीभूत-

चन्द्रकेतुः—यतस्तावदयं प्रवीरपुरुषः पूजितो भवति । अपि च खल्वाद्यः क्षत्रधर्मः परिपालितो भवति । न रथिनः पादचारमभियुञ्जत इति शास्त्रवेदिनः परिभाषन्ते ।

सुमन्त्रः—(स्वगतम्) आः कष्टां दशामनुप्रपन्नोऽस्मि ।

कथं न्याय्यमनुष्ठानं मादृशः प्रतिषेधतु ।
कथं वाभ्यनुजानातु साहसैकरसां क्रियाम् ॥ २१ ॥

चन्द्रकेतुः—यदा तातमिश्रा अपि पितुः प्रियसखं धर्मार्थसंशयेषु पृच्छन्ति तत्किमार्यो विमृशति ।

सुमन्त्रः—एवं वत्स, एवमायुष्मन्, यथाधर्ममभिमन्यसे ।

एष सांग्रामिको न्याय एष धर्मः सनातनः ।
इयं हि रघुसिंहानां वीर चारित्रपद्धतिः ॥ २२ ॥

---

प्रबलरिपुम् । तत् अवतारणम् । **कस्य हेतोरिति** ॥ इदानीं रथावतरणकारणं नोपलभामह इत्यर्थः । **यतस्तावदिति** ॥ तावच्छब्दोऽवधारणे । अवतरणेनैवेत्यर्थः । प्रवीरपुरुष इति पूजनीयत्वे हेतुः । कारणान्तरमप्याह—**अपि चेति**॥ खलुर्वाक्यालंकारे । **आद्यः** मनोरारभ्यैकरूपतया प्रवृत्तः **क्षत्रधर्मः** वीरपुरुषाणां साधारणो धर्मः । स तु कीदृश इत्यत्राह—**न रथिन इति** ॥ **अभियुञ्जते** संनह्यन्ते : शास्त्रवेदिन इत्यनेनास्यानतिलङ्घनीयता प्रकाश्यते । **परिभाषन्ते** कथयन्ति । **कष्टां** प्रतिपत्तिरहितां **दशाम्** अवस्थाम् **अनुप्रपन्नः** प्राप्तः । कष्टतामेवाह—**कथमिति** ॥ **न्याय्यं** न्यायादनपेतं **मादृशः** धर्मार्थशास्त्रज्ञः **साहसैकरसाम्** साहसात्मिकां **क्रियां** प्रवृत्तिम् । न्यायानुष्ठानप्रतिषेधो धर्मशास्त्रविरुद्धः । साहसाभ्यनुज्ञानं पुनरर्थशास्त्रविरुद्धमिति भावः । सुमन्त्रस्य निरुत्तरतया तूष्णीमवस्थानमवलोक्याह—**यदेति** ॥ यस्मादित्यर्थः । **तातमिश्रा अपि** निर्णीतनिखिलधर्मार्थसारा अपि रघुनाथपादाः **पितुः** दशरथमहाराजस्य **प्रियसखं** विश्वासपात्रं **धर्मार्थसंशयेषु** स्वेनापि निर्णेतुमशक्येषु धर्मार्थानुष्ठानेषु । अवधारणेनान्यः को वा तत्संशयच्छेत्ता भवेत्, न कोऽपीति द्योत्यते । **तत्** उक्तादेव हेतोः । किमिति प्रश्ने । **आर्यः** निरतिशयविज्ञानवान् **विमृशति** प्रतिपत्तिमूढो भवति । धर्मार्थशास्त्रयोर्धर्मशास्त्रस्यैव बलीयस्त्वमवधार्य पूर्वोक्तं स्यन्दनावतरणवचनमभिनन्दति—**एवमिति** ॥ एवं वत्सेत्यनेन वचनाभिनन्दनम् । एवमायुष्मन्नित्यनेन च कर्माभिनन्दनम् । यथाधर्मम् अभिमन्यस इत्यनेन मननाभिनन्दनं च कृतमित्यवसेयम् । **एष इति** ॥ पदाति-

**चन्द्रकेतुः**—अप्रतिरूपं वचनमार्यस्य ।

इतिहासं पुराणं च धर्मप्रवचनानि च ।
भवन्त एव जानन्ति रघूणां च कुलस्थितिम् ॥ २३ ॥

**सुमन्त्रः**—(सस्नेहास्रं परिष्वज्य ।)

जातस्य ते पितुरपीन्द्रजितो निहन्तु-
र्वत्सस्य वत्स कति नाम दिनान्यमूनि ।
तस्याप्यपत्यमनुतिष्ठति वीरधर्मं
दिष्ट्या गतं दशरथस्य कुलं प्रतिष्ठाम् ॥ २४ ॥

---

नैव पदातियोद्धव्यः इत्येवंरूपः **सांग्रामिकः** संग्रामोचितः । तस्मै प्रभवति सन्तापादिभ्य इति ठक् । **न्यायः** आगोपालं प्रसिद्धा मर्यादा । **धर्मः** धर्मशास्त्रेषु विधेयतया प्रतिपादितः । वीरोचितवचनाचरणयोर्दर्शनजनिताद्धर्षाद्वीरेति तात्कालिकौचित्येन संबोधनम् । **चारित्रपद्धतिरिति** ॥ चरित्रमेव चारित्रं संचरणमिति यावत् । पद्धतिर्मार्गः । युष्मद्वंशजातैः पूर्वराजर्षिभिः संचरणेन प्रहतो मार्गोऽप्ययमेवेत्यर्थः । अनुरूपवचनतां प्रसाधयति—इतिहासो भारतादिः । पुराणं श्रीमद्भागवतादि । धर्मप्रवचनानि धर्मशास्त्राणि । भवन्त एव जानन्त्येवेत्युभयत्राप्येवकारो योजनीयः । **रघूणाम्** अस्मद्वंशजातानां राज्ञाम् । तद्राजत्वात् बहुषु गोत्रप्रत्ययस्य लुक् । **कुलस्थितिं** कुलमर्यादाम् । इतिहासादिविरुद्धाचरणवर्जनमिति यावत् । स्नेहजनित आस्रः स्नेहास्रः । अथ दशरथकुलवृद्ध्यनुरूपं चन्द्रकेतुवचनमुपलभ्य सप्रमोदमाह—**जातस्येति** ॥ **वत्स** अत्यन्तशिशो **ते पितुरपि जातस्य दिनानि कति नाम** त्वत्पितृजननानन्तरजातानि दिनानि अतिस्वल्पानि । तव तु पुनः किमुत वक्तव्यानीति भावः । अमूनीत्यनेनानुभूतवृत्तानां मनसि सततसंनिधानाद्दिनानां तात्कालिकताप्रतीतिर्व्यज्यते । लक्ष्मणजननदिनस्यात्यन्तसंनिकर्षप्रतीतिरेव वत्सेत्यनेनापि प्रकाश्यते । कालवशादेव शैशवप्रतीतिः न तु पराक्रमेणेत्याह—**इन्द्रजितो निहन्तुरिति** ॥ चिरंतनराजर्षिवत्प्रतिभासमानस्येत्यर्थः । ततोऽपि प्रहर्षातिशयमाह—**तस्याप्यपत्यमिति** ॥ तव तु वीरधर्मानुष्ठानं प्रसूतिसमय एवाद्भुतापदानकरणमिवातिविस्मयकरमिति भावः । अत एवाह—**दिष्ट्येति** ॥ चिरकालं दशरथस्यानपत्यताजनितं दुःखमनुभूतवतो मम पश्चात्तत्पुत्रोत्पत्तेस्तत्पराक्रमादिकस्य ततस्तत्पुत्रस्य तवेदानीं वीरधर्मानुष्ठानस्य च स्वल्पकालेनानुभवावकाशो भाग्यवशादेवेति भावः । **गतं** प्राप्तं **दशरथस्य** सुचिरानुभूतानपत्यतादुःखस्य **कुलं** मनोरारभ्याविच्छिन्नतया प्रवृत्तं **प्रतिष्ठां** स्थितिम् । 'प्रतिष्ठास्थितिमाहात्म्य' इत्यमरः । पुत्रपौत्रादिजननमात्रेणैव कुलप्र-

चन्द्रकेतुः—(सकष्टम् ।)

अप्रतिष्ठे कुलज्येष्ठे का प्रतिष्ठा कुलस्य नः ।
इति दुःखेन तप्यन्ते त्रयो नः पितरोऽपरे ॥ २५ ॥

सुमन्त्रः—अहह हृदयमर्मदारणान्येव चन्द्रकेतोर्वचनानि ।

लवः—हन्त, मिश्रीकृतो रससंक्रमः ।

यथेन्दावानन्दं व्रजति समुपेते कुमुदिनी
तथैवास्मिन्दृष्टिर्मम कलहकामः पुनरयम् ।
झणत्कारक्रूरक्वणितगुणगुञ्जद्गुरुधनु-
र्धृतप्रेमा बाहुर्विकचविकरालव्रणमुखः ॥ २६ ॥

---

तिष्ठा जायेतैव, सत्पुत्रजनने किमु वक्तव्यमिति भावः । सीतापरित्यागस्मरणजनिते सुमन्त्रस्य शोके चन्द्रकेतुवचनजातेन विस्मयेन शनैरुपशान्ते सति पुनरपि दैवाच्चन्द्रकेतुस्तदुद्बोधकमेव वचनमाह—**अप्रतिष्ठ इति** ॥ प्रतिष्ठा स्थैर्यं तद्विरहितोऽप्रतिष्ठः । अदृष्टसंतानतया लोकप्राप्तिविरहिते सतीत्यर्थः । तदुक्तम्—'पुन्नाम्नो नरकात्त्रायत इति पुत्र' इति । **कुलज्येष्ठे** कुलमुख्ये रघुनाथे । अत्र कुलीनपुरुषव्यतिरेकेण कुलशब्दवाच्यस्य वस्तुनोऽभावेऽपि वनादिव्यवहारवत्कुलव्यवहार इति द्रष्टव्यम् । अतो व्यष्टिभूतस्य रघुनाथस्य धीरोदात्तशिरोमणित्वाच्छोकानभिव्यक्तेः प्रतीत्यनुसारेणैव वा निजावरजतनयमुखदर्शनसुखेन दुःखोपशमाद्वा त्रयो नः पितरोऽपर इत्युक्तमिति द्रष्टव्यम् । असह्यतमसीतापरित्यागवृत्तस्मारकत्वाच्चन्द्रकेतुवचनानां हृदयमर्मदारकत्वम् । हन्तेति विस्मये । परस्परविरुद्धयोरेव भावरसयोः समकालमेवाविर्भावाद्विस्मयः । **मिश्रीकृतो** मिलितः **रससंक्रमः** स्नेहकलहयोः संक्रमः प्रसरणमित्यर्थः । मिश्रीभावमेवाह—**यथेति** ॥ इन्दौ समुपेते यथा कुमुदिनी आनन्दं व्रजति तथैव अस्मिन् मम दृष्टिः इत्यन्वयः । **समुपेते** उद्गच्छति **कुमुदिनी** कुमुदम् **आनन्दं** विकासं **व्रजति** प्राप्नोति । तथाशब्देनौपम्यप्रतिपादनाद्धेतोर्दुर्निरूपता व्यज्यते । एवकारेण च कारणान्तरविरहः । **अस्मिन्** कुमारके समुपेत इत्यनुषज्यते । समीपस्थ इत्यर्थः । **मम** एतद्दमनोद्यतस्य । **कलहकामः** समरेप्सुः । पुनर्विशेषे । न तु दृष्टिवदित्यर्थः । विशेषमेवोपपादयति—**झणत्कारक्रूरक्वणितगुणगुञ्जद्गुरुधनुर्धृतप्रेमेति** ॥ झणत्कारे झणत्करणे क्रूरं यथा तथा क्वणितेन शब्दितेन गुणेन हेतुना गुञ्जति अनुस्वानवति गुरुणि स्थिरतरे धनुषि धृतः प्रेमा यस्य सः । कलहकामुकतामेवाह—**विकचविकरालव्रणमुख इति** ॥ विकचं विवृतम् अत एव विकरालं विशेषेण करालं व्रणमुखं यस्य सः । वीर्यातिशयाद्व्रणपीडा न

**चन्द्रकेतुः**—(अवतरणं रूपयन्।) आर्य, सावित्रश्चन्द्रकेतुरभिवादयते।

**सुमन्त्रः**—परपराजयाय महानादिवराहः कल्पताम्। अपि च—

देवस्त्वां सविता धिनोतु समरे गोत्रस्य यस्ते पति-
स्त्वां मैत्रावरुणोऽभिनन्दतु गुरुर्यस्ते गुरूणामपि।
ऐन्द्रावैष्णवमाग्निमारुतमथो सौपर्णमोजोऽस्तु ते
देयादेव च रामलक्ष्मणधनुर्ज्याघोषमन्त्रो जयम्॥२७॥

**लवः**—कुमार अति हि नाम शोभसे रथस्थ एव। कृतं कृतमत्यादरेण।

---

विद्यत इत्यर्थः। परमक्षत्त्रधर्मत्वाचात्र प्रीत्यतिशयमप्युन्मर्य वीर्यस्यैवोन्मज्जनमिति द्रष्टव्यम्। अत्रात्मनः कलहकामुकत्वस्य बाह्यावारोपात् कर्तृव्यत्ययो नाम गुणः। चन्द्रकेतोरपि कलहकामुकतामाह—**अवतरणं रूपयन्निति**॥ वीर्यातिशयादेव स्यन्दनावतरणम्। लवस्य रघुनाथपुत्रत्वशङ्कया परपराजयायेति सामान्येनोक्तिः। **महान्** क्षित्युद्धरणाय स्वेच्छोपबृंहितः **आदिवराहः** तृतीयः परमपुरुषावतारः **कल्पतां** समर्थो भूयात्। यो वा हिरण्याक्षं हत्वा तन्नीतां पृथिवीं स्वस्थाने स्थापितवान् स एव तव परिपन्थिहननेन पृथिवीवशीकरणेऽनुकूलो भूयादित्यर्थः। परमपुरुषावतारभूतस्यादिवराहस्यैव निखिलाभिलषितसंपादनसामर्थ्येऽपि पुनरपि वात्सल्यातिशयवशादितरदेवता अपि प्रार्थयते—**अपि चेति**॥ तत्र स्वगोत्रकूटस्थत्वात् प्रथमं तावत्सविता प्रार्थ्यते—**देव इति**॥ विजयप्रदानसमर्थः। **त्वां** युद्धोन्मुखं **सविता** रघुवंशप्रवर्तयिता **धिनोतु** शरीरबाधां परिहृत्य विजयप्रदानेन प्रीणयतु। ननु सर्वैरप्याचार्यकृपयैव निखिलाप्यभिलषितसंपत्तिरनुभूयत इत्यत्राह—**त्वामित्यादिना**॥ **त्वां** गुरुचरणपरायणमित्यर्थः। **मैत्रावरुणः** मित्रावरुणयोरपत्यम्। संबन्धसामान्येऽण्। अभिनन्दतात्वत्यस्य पूर्वोक्त एवार्थः। **गुरुः** कुलक्रमागत आचार्यः। **ते** कुलसंतानस्य **गुरूणां** दिलीपप्रभृतीनाम्। **ऐन्द्रावैष्णवम्** इन्द्राविष्णुसंबद्धम् **ओजः** प्रतापः। अन्यसंबद्धमोजः कथमन्यस्य संभवेदित्यौपम्यपर्यवसानात्तादृश इति वाऽर्थः। अथो इत्यस्यानन्तर्यार्थत्वेऽपि तस्य समुच्चयपर्यवसानम्। एवं विद्यादायिनमाशास्येदानीमुत्पादकं गुरुमप्याशास्ते—**देयादिति**॥ प्रतिपत्त्यतिरेकादेव हि ज्याशब्दस्य मन्त्रत्वेन रूपणम्। जयमिति पूर्ववदेव सामान्येन निर्देशः। रथस्थेन सह पादचारी भूत्वा युद्धकरणेन निजवीर्यातिशयं प्रकाशयामीति स्वमनोरथस्य चन्द्रकेतोः स्यन्दनावतरणेन भङ्गमाकलय्य पुनरपि तस्य रथाधिरोहणाय सौजन्यवचनव्याजेन प्रोत्साहयते—**कुमारेति**॥ संभ्रमाद्द्विर्वचनम्। **अति** नितराम्। हिर्हेतौ। नामेत्युपगमने। 'नाम प्रा-

चन्द्रकेतुः—तर्हि महाभागोऽप्यन्यं रथमलंकरोतु।

लवः—आर्य, प्रत्यारोपय रथोपरि राजपुत्रम्।

सुमन्त्रः—त्वमप्यनुरुध्यस्व वत्सस्य चन्द्रकेतोर्वचनम्।

लवः—को विचारः स्वेषूपकरणेषु। किं त्वरण्यसदो वयमनभ्यस्तरथचर्याः।

सुमन्त्रः—जानासि वत्स, दर्पसौजन्ययोर्यदाचरितम्। यदि पुनस्त्वामीदृशमैक्ष्वाको राजा रामभद्रः पश्येत्तदस्य हृदयमभिष्यन्देत।

---

काश्यसंभाव्यक्रोधोपगमकुत्सने' इत्यमरः। **कृतं कृतम्**, अलमलम् **अत्यादरेण** रथावतरणरूपेण। यतस्तव रथावस्थानशोभासवैरप्यनुमान्यते ततस्तदवतरणरूपोऽत्यादरो विरमत्वित्यर्थः। **तर्हीति**॥ यदि मम रथाधिरोहणमिच्छसीत्यर्थः। महाभाग इति युष्मदर्थे। **अन्यम्** अस्मदीयेष्वेकं **रथम्** आयोधनयोग्यम् **अलंकरोतु**। यद्यपि पादचरणेनैव तव शोभातिशयो व्यज्यते तथाप्याभरणस्याभरणमिति न्यायेन रथस्य शोभाविशेषो जायतामित्यर्थः। स्ववचनमननुतिष्ठन्तं चन्द्रकेतुमवलोक्य तत्सूतं प्रत्याह—**आर्येति**॥ **प्रत्यारोपय** पुनरपि रथाधिरोहणं कारय, प्रार्थनायां लोट्। **राजपुत्रम्** अनुचितपादचरणम्। युद्धे पुनः किमुत वक्तव्यमिति भावः। उभयगतवात्सल्येनाह—**त्वमपीति**॥ **अनुरुध्यस्व** अनुसर **वत्सस्य चन्द्रकेतोः**। राजकुमारवचनं हि सर्वैरप्यनुसर्तव्यमिति भावः। त्वद्वचनं चन्द्रकेतुरनुसरतु, त्वमपि चन्द्रकेतोरित्यपिशब्दस्यार्थः। **को विचार इति**॥ युक्तायुक्तचिन्तैव नास्तीत्यर्थः। कुत इत्यत्राह—**स्वेषूपकरणेष्विति**॥ चन्द्रकेतुसख्याद्धेतस्तदीयं सर्वमस्मदीयमेवेति भावः। कुतः पुनर्नानुष्ठीयत इत्यत्राह—**किंत्विति**॥ **अरण्यसदो**ऽरण्यजाताः। ततः किमित्यत्राह—**अनभ्यस्तरथचर्या इति**॥ जानपदानामेव हि वाहनप्रचारनैपुण्यमिति भावः। उभयोरप्येतानि वचनानि धीरोदात्तत्वान्निगूढाहंकारतथा सौजन्यख्यापकानीति द्रष्टव्यम्। एतदेव स्पष्टयति—**जानासीत्यादिना**॥ दर्पसौजन्ययोरिति निमित्ते सप्तमी। आचरितमाचरणम्। वत्सेत्यनेन बालकस्य सतः कथमेतादृशज्ञानं तदनुगुणं च वचनचातुर्यं जातमिति द्योत्यते। उत्तराङ्कभाविनो रघुनाथदर्शनस्य बिन्दुमुपक्षिपति—**यदि पुनरित्यादिना**॥ **ईदृशं** एतादृशसौजन्ययुक्तं निगूढाहंकारं च **त्वाम्** अपरिच्छेद्यमहिमानम्। ऐक्ष्वाक इत्यनेन गुणवत्पक्षपातिता कथिता। रामभद्र इत्यनेन निजशैशवोचितानुभावदर्शनकुतूहलसंभवः कथितः। पश्येदिति हेतौ लिङ्। हेत्वर्थतां स्पष्टयति—**तदिति**॥ **अस्य** रामभद्रस्य **हृदयं** विशेषज्ञाननिपुणम् **अभिष्यन्देत** द्रवीभवेत्। अतिस्निह्यतीति यावत्। हेतुमति लिङ्। सुमन्त्रवच-

लवः—मन्ये, सुजनः स राजर्षिः श्रूयते । (सलज्जमिव)

वयमपि न खल्वेवंप्रायाः क्रतुष्वविमत्सराः
क इव च गुणैस्तं राजानं न वा बहुमन्यते ।
तदपि खलु मे स व्याहारस्तुरङ्गमरक्षिणां
विकृतिमखिलक्षत्राक्षेपप्रचण्डतयाकरोत् ॥ २८ ॥

चन्द्रकेतुः—(सस्मितम् ।) किं नु भवतस्तातप्रतापोत्कर्षेऽप्यमर्षः ।

लवः—अस्त्वमर्षो मा वा । एतत्तु पृच्छामि । दान्तं हि राजानं

---

नानुस्मारितं रामायणप्रासिद्धं गुणगणमनुसंधायाह—**मन्य इति** ॥ **सः** त्वत्प्रतिपादितगुणविशिष्टः **राजर्षिः** धर्मसेतुप्रतिष्ठापकः । वाक्यार्थः कर्म । इतिशब्दोऽध्याहार्यः । किमु रघुनाथः त्वया दृष्टचर इत्यत्राह—**श्रूयत इति** ॥ वाल्मीकिनारदादिवचनेष्विति शेषः । तत्कथमेतदीयहयमेधतुरंगमग्रहणं तद्रक्षिपुरुषहननं चेत्यत्र समीचीनप्रतिवचनादर्शनाल्लज्जा । इवशब्द ईषदर्थे । **वयमपीति** ॥ इदानीं साहं(स)कारिणोऽपीत्यर्थः । **एवंप्रायाः** एवंविधक्रूरकर्मरुचयः । न खल्विति निषेधे निपातसमुदायः । खलु प्रसिद्धौ वा । सर्वेषु मुनिजनेषु प्रसिद्धमेवैतदित्यर्थः । किमु महायज्ञकरणमात्सर्यादिदं कृतमित्यत्राह—**क्रतुष्वविमत्सरा इति** ॥ विशिष्टमत्सराः विमत्सराः तदन्येऽविमत्सराः । किं वा रघुनाथस्पर्धयेत्यत्राह—**क इति** ॥ तादृशः पुरुषः जगति नास्त्येवेत्यर्थः । इवशब्दोऽवधारणे । चकारो वाक्यालंकारे । **तं** परमेष्ठिनारदादिस्तुतम् **गुणैः** शौर्यादिभिः । वैपरीत्ये नञ् । वाशब्दो विकल्पे । बहुमतिं करोत्येवेत्यर्थः । तर्हि कथमेवंभूते राज्ञि त्वयेदमसमञ्जसमनुष्ठितमित्यत्राह—**तदपीति** ॥ तथाऽपीत्यर्थः । खलु प्रसिद्धौ । **सः** तादृशः । गर्वोद्रिक्ततया दुस्सहतर इत्यर्थः । **व्याहारः** दृप्तवचनम् योऽयमश्व इत्यादिरूप इत्यर्थः । तुरंगमरक्षिणामिति परिहासगर्भं वचनम् । **विकृतिं** स्वभावान्यथाभावरूपाम् **अखिलक्षत्राक्षेपप्रचण्डतया** अखिलक्षत्राक्षेपेण प्रचण्डता श्रवणहृदयविदारकता यस्मात्तस्मादित्यर्थः । हेतौ तृतीया । व्याहारस्येत्यर्थात् । अनुचितपरिभवस्फुटीकरणात्स्मितम् । न केवलमस्मत्स्पर्धयैव त्वयैतत्कृतम् किमुतातिलोकमहिम्नस्तस्य वीर्यप्रकटनासहनतयापीत्याह—**किं चेति**॥भवत इति परिहासगर्भं वचनम् । **अमर्ष इति** ॥ सकलत्रिभुवनवासिसंमते तातप्रतापोत्कर्षप्रकटनेऽपि जायमानोऽयं कथमिदानीं कुशलपरिणामो भवेदिति भावः । परिहासवचनमसहमान आह—**अस्त्विति** ॥ कामचारे लोट् । अमर्षो मा वेति वीरपुरुषानभिज्ञानां बालिशानां चरितं किमर्थं विचार्यत इति शेषः । प्राज्ञानां तु न तथेति सोपालम्भं पृच्छति—**एतत्त्विति** ॥ तुर्विशेषे । **पृच्छामीति** ॥ अस्म-

राघवं शुश्रुम । स किल नाम न दृप्यति नाप्यस्य प्रजा दृप्ता जायन्ते । तत्किं मनुष्यास्तस्य राक्षसीं वाचं वदन्ति ।

ऋषयो राक्षसीमाहुर्वाचमुन्मत्तदृप्तयोः ।
सा योनिः सर्ववैराणां सा हि लोकस्य निष्कृतिः ॥ २९ ॥

इति ह स्म तां निन्दन्ति । अथेतरामभिष्टुवन्ति ।

कामं दुग्धे विप्रकर्षत्यलक्ष्मीं
कीर्तिं सूते दुष्कृतं या निहन्ति ।

---

त्प्रश्नसमुचितं युष्माभिरत्रोत्तरं वक्तव्यमिति भावः । किं पुनः प्रष्टव्यमित्यत्राह—**दान्तमिति** ॥ विनीतमित्यर्थः । हिरवधारणे । **राघवम्** अपरिमुक्तसन्मार्गं **राजानं** परेप्सितप्रवणं **शुश्रुम** ॥ वाल्मीकिवचनेष्विति शेषः । अत्र राघवगुणवर्णनश्रवणजनितेन भक्त्यतिशयेन चित्तविक्षेपात् स्वकृतस्यापि परोक्षत्वेन लिट् । तदुक्तम्—'परोक्षे लिडिति ह्युक्तं तत्रास्मद्युत्तमे सति । स्वकृतेऽपि परोक्षत्वं चित्तविक्षेपतो भवेत् ॥' इति । श्रुतमेवार्थं प्रकटयति—**स इति** ॥ किलेति प्रसिद्धौ । नामेत्युपगमे । **न दृप्यति** अहंयुर्न भवति । स यच्छीलस्तच्छीलाः प्रकृतय इति न्यायेन तत्प्रजा अपि तथैवेत्याह—**नेति** ॥ **अस्य** राघवस्य **प्रजाः** विषयवासिनः पुरुषाः । न केवलं तद्भृत्या एवेति भावः । **न दृप्ता जायन्ते** दुर्विनीता न भवन्ति । ततः किमित्यत्राह—**तदिति** ॥ किंशब्दः प्रश्ने । **मनुष्याः** वचनानुरूपपराक्रमाभावान्मनुष्यमात्रगणनार्हाः । **तस्य** प्रतिपादितगुणविशिष्टस्य । **राक्षसीं** रक्षस्संबन्धिनीम् । श्रोतृदुस्सहामित्यर्थः । **वाचं** योऽयमश्व इत्यादिरूपाम् । **वदन्ति** निस्संशयमुच्चरन्ति । अत्र वृद्धसंमतिमाह—**ऋषय इति** ॥ ऋषयः उन्मत्तदृप्तयोर्वाचं राक्षसीमाहुरित्यन्वयः । **राक्षसीम्** अप्रियाम् । उन्मत्तदृप्तयोरेव तादृशी वागिति भावः । तस्यां (वचने) दोषमुद्भावयति—**सेति** ॥ राक्षसी वागित्यर्थः । **योनिः** जनयित्री **सर्ववैराणां** सर्वेषां वैराणाम् । हि प्रसिद्धौ । **लोकस्य** श्रोतुरित्यर्थात् **निष्कृतिः** प्रायश्चित्तम् । निन्दावचनक्षान्त्यैव सकलदुरितानामनायासेन परिक्षयो भवेदित्यर्थः । तथाच श्रीमहाभारते—'वक्ता पापमुपादत्ते क्षममाणो विमुच्यते' इति । अथशब्दः पक्षान्तरे । **इतरां** श्रोतृप्रियाम् **अभिष्टुवन्ति** प्रशंसन्ति । कथमित्यत्राह—**काममिति** ॥ सकलाभीष्टमित्यर्थः । **दुग्धे** पूरयति । **विप्रकर्षति** दूरीकरोति **अलक्ष्मीं** शुभपरिपन्थिनीं देवताम् । **कीर्तिं** ख्यातिं **सूते** उत्पादयति । **दुष्कृतं** जननान्तरार्जितमपि पापम् । वक्तुरित्यर्थात् । यच्छब्द उद्देश्यवाक्यार्थसर्वस्वपरामर्शकः । **निहन्ति** विनाशयति । तच्छब्दः पुनः प्रतिपादितसकलगुणवैशि-

तां चाप्येतां मातरं मङ्गलानां
धेनुं धीराः सूनृतां वाचमाहुः ॥ ३० ॥

**सुमन्त्रः**—परिपूतस्वभावोऽयं बत कुमारः प्राचेतसान्तेवासी वदत्यभिसंपन्नमार्षेण संस्कारेण ।

**लवः**—यत्पुनश्चन्द्रकेतो वदसि किंनु भवतस्तातप्रतापोत्कर्षेऽप्यमर्ष इति, तत्र पृच्छामि किं व्यवस्थितविषयाः क्षत्रधर्माः ।

**सुमन्त्रः**—नैव खलु जानासि देवमैक्ष्वाकम् । तद्विरम्यतामतिप्रसङ्गात् ।

---

ष्टयपरामर्शकः । अपिः समुच्चये भिन्नक्रमः । **एतां** सकलाभीष्टसंपादकतया सर्वैरनुभूयमानाम् । **मातरं** जनयित्रीं **मङ्गलानां** कल्याणानाम् । **धेनुं** कामधेनुम् । **धीराः** विद्वांसः । **सूनृतां** प्रियाम् । **वाचं** मिथ्याभूतार्थामपीत्यर्थः । **आहुः** असन्दिग्धाविपर्यस्ततया वदन्ति । परमार्थवचनाददत्तोत्तरं प्ररूढकोपं चन्द्रकेतुमवलोक्य सुमन्त्र आह—**परिपूतस्वभाव इति** ॥ क्षत्रधर्मप्रवण इत्यर्थः । स्वकुलधर्मप्रवणतामन्तरेण सर्वेषामपि शुद्धेरभावात् । शुश्रूषादिगुणयुक्तबुद्धिमानिति वार्थः । अनेन स्वाभाविकं विनीतत्वमुक्तम् । **प्राचेतसान्तेवासी** वाल्मीकिशिष्यः । अनेन च कृतकविनयवत्त्वमप्युक्तम् । तथा च कौटिल्यः—'विनयो हि द्विविधः—कृतकः स्वाभाविकश्चेति । क्रिया हि द्रव्यं विनयति नाद्रव्यं शुश्रूषाश्रवणग्रहणधारणविज्ञानोहापोहतत्त्वाभिनिविष्टबुद्धिं विनयति विद्या नेतरम्' इति । द्विविधविनयफलमाह—**आर्षेणेति** ॥ उत्कृष्टेनेत्यर्थः । **संस्कारेण** गुणाधानेन । **अभिसंपन्नं** उपस्कृतमित्यर्थः । एतादृशस्यास्य एवंविधेन वचनेन न कोपः कार्य इति भावः । एवंविधेन सुमन्त्रवचनेन चन्द्रकेतोः कोपे किंचिच्छान्ते लवः पुनरपि सरोषमाह—**यदिति** ॥ पुनश्शब्दो विशेषे । **चन्द्रकेतो** औचित्यशालिन् । **वदसि** ब्रवीषि । इदानीमेवेति शेषः । तत्किमित्यत्राह—**किं भवत इत्यादि** ॥ इतिशब्दस्य यत्पुनरित्यनेन संबन्धः । **तत्रेति** ॥ त्वदुक्तविषयीकृतेऽर्थ इत्यर्थः । **पृच्छामि** त्वामिति शेषः । किं पुनस्तत्प्रष्टव्यमित्यत्राह—**किमिति** ॥ **व्यवस्थितविषयाः** नियतविषयाः **क्षत्रधर्माः** परतेजोऽसहनतादयः । रघुनाथव्यतिरिक्तेष्वेव मया क्षात्रं दर्शयितव्यमिति नियमः किमिष्यत इत्यर्थः । उत्तरोत्तरकथने कलहस्य नैयत्यात्तत्परिहारार्थं मध्ये सुमन्त्र आह—**नैवेति** ॥ खल्विर्वाक्यालंकारे । **वत्स** बालक **नैव जानासि** परमार्थतो न वेत्सि **देवं** दुर्दान्तारातिविजयिनम् **ऐक्ष्वाकं** वीरवंशप्रसूतम् । **तत्** तस्मात् । विरम्यतामिति प्राप्तकाले लोट् । दीयतामिदानीं रामभद्रस्याश्वमेधिकोऽश्वः उपशा-

चन्द्र०—सैनिकानां प्रमाथेन सत्यमोजायितं त्वया ।
जामदग्न्यस्य दमने न हि निर्बन्धमर्हसि ॥ ३१ ॥

लवः—(सहासम् ।) आर्य, जामदग्न्यस्य दमनः स राजेति कोऽयमुच्चैर्वादः ।

सिद्धं ह्येतद्वाचि वीर्यं द्विजानां
बाह्वोर्वीर्यं यत्तु तत्क्षत्रियाणाम् ।

---

म्यतु च युवयोरयमीदृशः समरसंरम्भः, इति लोटा प्रकाश्यते । **अतिप्रसंगात्** असाध्यनिर्बन्धात् । ऊष्मलस्य लववचनस्यापर्याप्तं सुमन्त्रवचनमुपश्रुत्य तदनुरूपमुत्तरमाह—**सैनिकानामिति** ॥ त्वया सैनिकानां प्रमाथेन ओजायितं सत्यमित्यन्वयः । सेनासंगताः सैनिकाः तेषां प्रमाथेन निग्रहणेन ओजायितं ओजस्वीवाचरितम् । ओजश्शब्दो वृत्तिविषये तद्वति वर्तते । कर्तुः क्यङ् सलोपश्चेति क्यङ् । तस्य च सनाद्यन्तत्वात् भावे निष्ठा । अर्धानुवादे सत्यशब्दः । सैनिकोन्मर्दनेनैव केवलमोजस्वी भवसि न पुनरस्मद्विजयेनापि । अतस्त्वमदग्धदहनन्यायेनाविजितविजयाय यतस्व इत्यर्थः । अर्धाङ्गीकारे तु भर्तृहरिणाऽपि सत्यशब्दः प्रयुक्तः । यथा—'सत्यं मनोरमाः कामाः सत्यं रम्या विभूतयः । किं तु मत्ताङ्गनाऽपाङ्गभङ्गलोलं हि जीवितम् ॥' इति । अत्र ह्यैहिकसुखाभिलाषे तद्भोक्तुर्जीवितस्यात्यन्तनश्वरत्वप्रतीतेः स्रक्चन्दनादीनां विषयाणां भाण्डोपस्करादीनां विभवानां च रम्यत्वस्यार्धानुवादे सत्यशब्दः प्रयुक्तः । ननु प्रेष्यतया समागतं त्वां विहाय दशकण्ठकुलद्वेषिणि पताकाधिष्ठातरि त्वत्प्रेषके राज्ञि मम वीर्यप्रकटनेच्छा जायत इत्यत आह—**जामदग्न्यस्य दमन इति** ॥ शूरजनविदितापदाने तत्रभवत्यस्मत्पितरि पुनः पुनरतिनिर्बन्धेन मा खलु शमनप्रियातिथिर्भूया इति भावः । रघुनाथप्रभावस्यापर्याप्तचरितप्रशंसनाच्चन्द्रकेतुमवजानानः सुमन्त्रमेवाभिमुखीकुर्वन्नुत्तरमाह—**आर्येति** ॥ जामदग्न्यस्य दमन इति अयमुच्चैर्वादः क इति संबन्धः । किंशब्दः क्षेपे । **उच्चैर्वाद इति** ॥ यदीदानीमस्य रघुपतिर्वीर्यप्रशंसने तात्पर्यं तर्हि वीरजनश्रवणं परिहरन्नीदृशमतिनीचैरेव वक्तव्यमित्यर्थः । कुत इत्यत आह—**सिद्धमिति** ॥ प्रसिद्धमित्यर्थः । हिरवधारणे । **एतत्** वक्ष्यमाणं वाचि वीर्यं यत् तत् द्विजानां, बाह्वोस्तु यत् तत् क्षत्रियाणामिति संबन्धः । वीर्यमित्यनुषज्यते । शापवचनेनैव केवलं द्विजानामपकारिनिरसनसामर्थ्यं न तु बाहुवीर्येणेत्यर्थः । यथोक्तं श्रीमहाभारते—'बाहुभिः क्षत्रियाः शूरा वाग्भिः शूरा द्विजातयः । धनुषा फल्गुनः शूरः कर्णः शूरो मनोरथैः ॥' इति । ब्राह्मणानां तु तादृशं वीर्यं शस्त्रग्रहणेन विनश्येदपीत्याह—**शस्त्रग्राही-**

शस्त्रग्राही ब्राह्मणो जामदग्न्य-
स्तस्मिन्दान्ते का स्तुतिस्तस्य राज्ञः ॥ ३२ ॥

**चन्द्रकेतुः**—(सोन्माथमिव ।) आर्य सुमन्त्र, कृतं कृतमुत्तरोत्तरेण ।

कोऽप्येष संप्रति नवः पुरुषावतारो
वीरो न यस्य भगवान्भृगुनन्दनोऽपि ।
पर्याप्तसप्तभुवनाभयदक्षिणानि
तातस्य बालचरितान्यपि यो न वेद ॥ ३३ ॥

**लवः**—को हि रघुपतेश्चरितं महिमानं च न जानाति । यदि वा

---

ति ॥ **जामदग्न्यः** अशान्ततनयः । अनेन मातृवधभ्रूणहत्यादिपातकसंबन्धिता प्रकाश्यते । **तस्मिन्** एवंभूते **दान्ते** स्वयमेवोपशान्ते । **का स्तुतिरिति** ॥ किंशब्दः क्षेपे । ईदृशापदानकथनं महात्मनस्तस्य निकर्षायैव केवलं जायेतेति भावः । **तस्य** अतिलोकमहिम्नः **राज्ञः** निजगुणवशीकृतत्रैलोक्यस्य । स्वयंप्रकाशब्रह्मणस्तस्य स्तुतये परशुरामविजयादिकं न पर्याप्तमिति निगूढोऽर्थः । पितृनिन्दाश्रवणजनितरोषः सापहासमाह—**आर्येति** ॥ **कृतं कृतमिति** ॥ अलमलमित्यर्थः । **उत्तरोत्तरेण** उपर्युपरि प्रतिवचनदानेन । असंबद्धप्रलापिनमेनं प्रति निरुत्तरतैव शोभते न तु तदुक्तिनिरसनेन विजय इति भावः । तदेवाह—**कोऽपीति** ॥ एषः संप्रति नवः कोऽपि पुरुषावतारः इति संबन्धः । **एषः** शूरंमन्यः **संप्रति** अस्मिन् काले **नवः** अभूतपूर्वः । कोऽपीति गम्भीराक्षेपे । **पुरुषावतारः** शूरावतारः । अयमेवेदानीं पुरुषः अन्ये तु पुरुषोचितपराक्रमाभावात् स्त्रिय एवेत्यर्थः । एवं वा—पुरुषः, परमपुरुषः विष्णुरित्यर्थः पुरुषोत्तम इति यावत् । नृसिंहाद्यवतारा अपि एतद्दर्शने अतितुच्छा एवेति भावः । कुत इत्यत्राह—**वीर इति** ॥ यस्य भृगुनन्दनः भगवानपि न वीर इति संबन्धः । भृगुनन्दन इत्यनेन पातकसंस्पर्शाभावो व्यज्यते । भगवच्छब्देन च वीर्यातिशयः । सर्वथाप्येनं प्रत्युत्तरं न वाच्यमित्याह—**पर्याप्तेति** ॥ पर्याप्ता संपूर्णा सप्तभुवनाभयदक्षिणा येषु तानि । भुवनसप्तककण्टकभूतरावणविजयिकार्तवीर्यान्तकपरशुरामविजयित्वात् बालचरितैरेव भुवनानामभयदक्षिणा कृतेत्यर्थः । तथा चानर्घराघवे—'जेतारं दशकंधरस्य जितवानेवार्जुनं भार्गवस्तं रामो यदि काकपक्षकधरस्तत्पूरितेयं कथा ॥' इति । य एवंविधानि तातस्य बालचरितान्यपि न वेद अत उत्तरोत्तरेण कृतमिति पूर्वग्रन्थेन संबन्धः । अथ वाल्मीकिवचनानुसारेण रघुपतिगुणाननुसंधाय सबहुमानमन्तः श्लाघते—**को हीति** ॥ हिरवधारणे । **रघुपतेः** लोकोत्तरसुचरितातिशयस्य **चरितं** यागरक्षणधनुर्भङ्गपरशुरामविजयादिकं **महिमानं** वरुणत्रास-

किंचिदस्ति वक्तव्यम् । अथवा शान्तम् ।

वृद्धास्ते न विचारणीयचरितास्तिष्ठन्तु हुं वर्तते
सुन्दस्त्रीदमनेऽप्यकुण्ठयशसो लोके महान्तो हि ते ।
यानि त्रीण्यकुतोमुखान्यपि पदान्यासन्खरायोधने
यद्वा कौशलमिन्द्रसूनुनिधने तत्राप्यभिज्ञो जनः ॥३४॥

---

जनकत्वादिकं न जानाति सर्वे जानीयुरेवेत्यर्थः । तव तु पितृपराक्रममहिम्ना गर्वगरिमा माभूदिति सजुगुप्समाह—यदि वेति ॥ प्रकृतान्यथात्वे निपातसमुदायः । किं पुनः प्रकृतादन्यथाभूतं विद्यत इत्यत्राह—किंचिदिति ॥ वक्तव्यं दोषः । एतत्कथनं च युद्धौत्सुक्येन चन्द्रकेतुकोपजननार्थमिति द्रष्टव्यम् । वृथैव मया दोषोद्घाटनं क्रियते । लोकस्तु तथाऽपि नानुवदिष्यतीत्याह—अथवेति ॥ शान्तं शममेतु । आशंसायां भूतवच्चेति क्तः । महतामीदृशमपवादवचनं मम वदनाद्बहिर्न निस्सरतु इत्यर्थः । कुत इत्यत्राह—वृद्धा इति ॥ विद्यातपःप्रभृतिभिः लोकसंभावनीया इत्यर्थः । ते तादृग्भाग्यवन्तः न विचारणीयचरिताः परिप्राप्तनिखिलकर्माण एवेत्यर्थः । तिष्ठन्तु तथैव वर्तन्ताम् । का वा पुनरस्माकं हानिरिति भावः । हुमिति भर्त्सनानुभावः । वर्तते महतां चरिते दोषोऽस्ति चेदस्माभिः संव्रियत एवेत्यर्थः । तिङन्तप्रतिरूपकं चैतदव्ययम् । 'वर्तते दोषसंवरणे' इत्यव्ययसूत्रम् । दोषसद्भावेऽपि लोको न कथयेदित्याह—सुन्दस्त्रीदमनेऽपीति ॥ सुन्दस्त्री ताटका दमनं निग्रहणम् । अकुण्ठयशसः परिपूर्णयशसः अतस्ते हि लोके महान्तः । हिरवधारणे । भाग्यवन्त एवेत्यर्थः । ननु ताटका नाम नागसहस्रबलधारिणी सज्जनविरोधिनी च तत्कथं तस्या हननेन यशोहानिरित्यत्राह—यानीति ॥ खरायोधने यानि त्रीणि पदानि अकुतोमुखानि आसन् इन्द्रसूनुविजये वा यत् कौशलं तत्रापि जनः अभिज्ञः इति संबन्धः । अकुतोमुखानि अनियतमुखानि । निश्चलतया स्थातुमशक्यत्वात्पदान्यतिव्याकुलान्यासन्नित्यर्थः । युद्धभूमौ हि वीराणां पुरोमुखतयैव पादन्यासो न्याय्यः, तस्य तु तदभावेऽपि यशोहानिर्नास्तीति भावः । कुतोमुखानीति वा पाठः । पश्चान्मुखान्येवेति काक्वा प्रकाश्यते । वाशब्दः समुच्चये । कौशलं छद्मप्रहरणादिकम् । तत्रापि एतादृशकौशलेऽपि । जनो लोकः । अभिज्ञो विद्वान् । स्वयं निगूढो भूत्वाऽन्याभिमुखं बालिनं हतवानिति सर्वोऽप्यभिजानाति । अतोऽस्माभिर्मिथ्यैव दोष उद्घुष्यते इति विरम्यते इति भावः । अत्रापि 'ईश्वराणां वचः सत्यं तथैवाचरितं क्वचित्' इत्याद्युक्तन्यायेन निरवद्यं तस्य चरितं महिमानं च को न बहुमनुत इत्येव निगूढोऽर्थः । केवल चन्द्रकेतुकोपजननायैव निन्दासूचनं कृतमित्यवसेयम् । आ इति कोपे पीडायां

**चन्द्रकेतुः**—आः तातापवादभिन्नमर्याद, अति हि नाम प्रगल्भसे।

**लवः**—अये, मय्येव भ्रुकुटीमुखः संवृत्तः।

**सुमन्त्रः**—स्फुरितमनयोः क्रोधेन। तथा हि—

चूडाकुन्तलबन्धनं तरलयत्याकूतजो वेपथुः
किंचित्कोकनदच्छदस्य सदृशे नेत्रे स्वयं रज्यतः।
धत्ते कान्तिमकाण्डताण्डवितयोर्भङ्गेन वक्त्रं भ्रुवो-
श्चन्द्रस्योत्कटलाञ्छनस्य कमलस्योद्भ्रान्तभृङ्गस्य च॥

**लवः**—कुमार कुमार एह्येहि। विमर्दक्षमां भूमिमवतरावः।

(इति निष्क्रान्ताः सर्वे।)

इति पञ्चमोऽङ्कः।

---

वा **तातापवादभिन्नमर्याद** तातापवादेन भिन्ना त्यक्ता मर्यादा, परिभवजननेऽपि न गुर्वधिक्षेपः कार्यः इत्येवंरूपा, येन सः। **अति हीति**॥ क्षन्तव्यताकोटिमतिक्रम्येत्यर्थः। **प्रगल्भसे** विशृङ्खलचरितोऽसि। **मय्येवेति**॥ पूर्वमत्यादरपात्रीभूत एवेत्यर्थः। **भ्रुकुटीमुख इति**॥ भ्रुकुटीयुक्तं मुखं यस्य सः। स्फुरितमिति भावे निष्ठा। कोपस्फुरणमेवोपपादयति—**तथाहीत्यादिना**। तथाहि आकूतजः वेपथुः चूडाकुन्तलबन्धनं तरलयति इत्यन्वयः। **तथा** उक्तेन प्रकारेण। हिर्हेतौ। **आकूतजः** आकूतेरुद्भवः। उक्त्यभिप्रायज्ञानजनित इत्यर्थः। **वेपथुः** शरीरकम्पः। **चूडाकुन्तलबन्धनं** चूडायाः शिखाया एव कुन्तलस्य बन्धनं ग्रथनमित्यर्थः। **तरलयति** शिथिलयति। किमेतदेव कोपलाञ्छनमस्तीत्यत्राह—**नेत्रे इति**॥ कीदृशे नेत्रे इत्यत्राह--**किंचित्कोकनदच्छदस्य सदृशे इति**॥ किंचित् ईषत् कोकनदच्छदस्य शोणाब्जदलस्य सदृशे समाने। रक्तोत्पलं कोकनदमित्यमरः। नेत्रयोः शोणाब्जदलसादृश्यं पुंस्त्वात्। तथाच वक्ष्यति—'नेत्रे पुनर्यद्यपि रक्तनीले तथापि सौभाग्यगुणः स एव' इति। ईषत्सादृश्यं तु बाल्यात्। स्वयमित्यव्ययम् अन्यानिरपेक्षत्वमाह। तेन च रागस्य बलवत्तरत्वं लक्ष्यते। बलवन्तो हि स्वप्रवर्तने न सहायान्तरमपेक्षन्ते। रागस्यात्रान्यायत्तत्वान्मुख्यार्थभङ्गः। **रज्यतः** रक्ते भवतः। ततोऽपि विस्पष्टं लक्षणमाह—**धत्त इति**॥ वक्त्रम् अकाण्डताण्डवितयोः भ्रुवोः भङ्गेन उत्कटलाञ्छनस्य चन्द्रस्य उद्भ्रान्तभृङ्गस्य च कमलस्य कान्तिं धत्ते इत्यन्वयः। **अकाण्डताण्डवितयोः** कुमारयोः निजसंबन्धानवगमादकाण्ड एव ताण्डवितयोः संजातताण्डवयोः क्रोधावेशेन तरलितयोः **भ्रुवोः** चिल्लीलतिकयोः **भङ्गेन** कुटिलिम्ना। हेतौ तृतीया। **उत्कटलाञ्छनस्य** अभिव्यक्तकलङ्कस्य परिपूर्णमण्डलस्येत्यर्थः। मण्डलपरिपूर्तावेव हि कलङ्कस्याभिव्यक्तिः

# षष्ठोऽङ्कः।

(ततः प्रविशति विमानेनोज्ज्वलं विद्याधरमिथुनम्।)

**विद्याधरः**—अहो नु खल्वनयोर्विकर्तनकुलकुमारयोरकाण्डकलह-

---

भविष्यति। **उद्भ्रान्तभृङ्गस्य** उद्गच्छदलिपटलस्य नूतनविकसितस्येत्यर्थः। अन्यस्य तु हीनमकरन्दतयोपरितनभागे भृङ्गपरिभ्रमणासंभवात्। तथाचानर्घराघवे—'विकसितसंकुचितपुनर्विकस्वरेष्वम्बुजेषु दुर्लक्षाः। कलिकाः कथयति नूतनविकासिनीर्मधुलिहामर्घः॥' इति। **कान्तिं** नयनाह्लादकारिणीं शोभां **धत्ते** बिभर्ति। अत्रान्यस्यान्यशोभाभरणासंभवेनौपम्ये पर्यवसानान्निदर्शनालंकारः। मिथो विरुद्धोभयौपम्येन च वक्त्रस्य सर्वदैवाम्लानशोभत्वनित्यप्रसन्नतादयो गुणाः प्रतीयन्ते। तत्रश्चात्र—'चन्द्रं गता पद्मगुणान्न भुङ्क्ते पद्माश्रिता चान्द्रमसीमभिख्याम्' इत्याद्युक्तोऽर्थोऽनुसंधेयः॥ इति॥

अङ्के यत्र गभीरभावगहने वीराद्भुताद्या रसा
वाच्यं वस्तु निगूहतीव वचनप्रौढिः कवेर्यत्र च।
शब्दार्थोभयशक्तिजानपि पुनर्व्यङ्ग्यप्रभेदान्विद-
न्यत्नाद्व्याकरवं यथामति चिरं संचिन्त्य तं पञ्चमम्॥

॥ इति भावार्थदीपिकाख्यायामुत्तररामचरितव्याख्यायां पञ्चमोऽङ्कः समाप्तः॥

॥ षष्ठोऽङ्कः॥

अथाधिक्षेपवचनपरिकुपितयोः कुमारयोर्वृत्तस्य रसवत्त्वेनाङ्कनिवेशनौचित्येऽपि 'दूराध्वानं वधं युद्धम्' इत्यादिना रङ्गे साक्षाद्युद्धविधानस्य निषिद्धत्वान्मध्यपात्रमुखेन तत्प्रतिपादयितुं विष्कम्भकमुपनिबध्नन्नतीताङ्कावसाने 'तदितो विमर्दक्षमां भूमिमवतराव' इत्यत्र युद्धोचितप्रदेशगमनस्योपरितनभागाद्दिव्यजनोचितभूलोकपरापतनवाचिनाऽवतरणशब्देन प्रतिपादनादेव सूचितं विद्याधरमिथुनप्रवेशं कथयति—**ततः प्रविशतीति**॥ **विमानेन** दिव्यजनोचितयानेन। दिव्यजनदेहस्य तैजसत्वादुज्ज्वलमित्युक्तम्। **विद्याधरमिथुनमिति**॥ विद्याधरो विद्याधरी चेत्यर्थः। 'स्त्रीपुंसौ मिथुनं द्वन्द्वम्' इत्यमरः। अहो नु खल्विति निपातसमुदायो विस्मये। अनयोरित्यभिनीयोक्तिः। विकर्तनकुलकुमारयोरित्यनेनेतरेतरमनयोः कलहानौचित्यं व्यज्यते। तदेवाह—**अकाण्डकलहप्रचण्डयोरिति**॥ अकाण्डेऽनवसर एव कलहेन प्रचण्डयोर्दुरभिभवनीययोरित्यर्थः। अनेनास्मिन् कलह एक-

प्रचण्डयोरुद्द्योतितक्षात्रलक्ष्मीकयोरत्यद्भुतोद्भ्रान्तदेवासुराणि विक्रान्तविलसितानि । तथाहि । प्रिये, पश्य पश्य ।

रणत्करणझंझणत्कनककिङ्किणीकं धनु-
र्ध्वनद्गुरुगुणाटनीकृतकरालकोलाहलम् ।
वितत्य किरतोः शरानविरतस्फुरच्चूडयो-
र्विचित्रमभिवर्तते भुवनभीममायोधनम् ॥ १ ॥
विजृम्भितं च दिव्यस्य मङ्गलाय द्वयोरपि ।
स्तनयित्नोरिवानन्ददुन्दुभेर्धुन्धुमायितम् ॥ २ ॥

तरस्य जयः पराजयो वा नास्तीति व्यज्यते । **उद्द्योतितक्षात्रलक्ष्मीकयोः** उद्द्योतिता सम्यक् प्रकटीकृता क्षात्रलक्ष्मीर्वीर्यातिशयो याभ्यां तयोः । **अद्भुतोद्भ्रान्तदेवासुराणि** अद्भुतेन उद्भ्रान्ता गतागतविधायिनो देवा असुराश्च येषु तानि **विक्रान्तविलसितानि** पराक्रमविशेषाः । उक्तमेवार्थं विवृणोति—**तथाहीति** ॥ पश्य पश्येत्यद्भुतातिशयात् । **रणत्करणेति** ॥ अनयोः आयोधनं विचित्रमभिवर्तते इत्यन्वयः । **आयोधनं** युद्धम् । विचित्रमिति क्रियाविशेषणम् । द्रष्टृणामद्भुतरसो यथा तथेत्यर्थः । **अभिवर्तते** द्यावापृथिव्योरन्तरालदेशमभिव्याप्य वर्तत इत्यर्थः । कथमायोधनस्य सर्वत्र व्यापनमित्यत्राह—**शरान् किरतोरिति** ॥ संख्याविहीनान् शरानभिवर्षतोरित्यर्थः । अत एवाह—**भुवनभीममिति** ॥ सकलजनभीतिजनकमित्यर्थः । वैचित्र्यमुपपादयति—**धनुः वितत्येति** ॥ शरासनं विततं कृत्वेत्यर्थः । मण्डलीकृत्येति यावत् । धनुः कीदृशमित्यत्राह—**रणत्करणझञ्झणत्कनककिङ्किणीकमिति** ॥ रणत्करणेन ज्यानिनदेन झञ्झणन्त्यः शाशब्द्यमानाः कनककिङ्किण्यः कनकमय्यः किङ्किण्यः शोभार्थं निबद्धाः क्षुद्रघण्टिका यस्मिन् तत् । पुनः कीदृशमित्यत्राह—**ध्वनद्गुरुगुणाटनीकृतकरालकोलाहलमिति** ॥ ध्वनता गुरुणा च गुणेनाटन्यां ज्यानिबन्धनग्रन्थौ कृतः करालः श्रवणकटुः कोलाहलो यस्मिन् । एवंविधे पुनरायोधन उभयोरपि शरादानसंधानादिकं तु हस्तलाघवातिशयान्न लक्ष्यत इत्याह—**अविरतस्फुरच्चूडयोरिति** ॥ अविरतम् अविश्रान्तं स्फुरन्ती उल्लवमाना चूडा शिखा ययोः । अनयोरीदृशमायोधनं व्योमचारिभिरपि बहुमतमित्याह—**विजृम्भितमिति** ॥ द्वयोरपि मङ्गलाय दिव्यस्य आनन्ददुन्दुभेः धुंधुमायितं विजृम्भितं च इत्यन्वयः । द्वयोरपीत्यनेन पराक्रमसाम्यादायोधनस्य दर्शनीयतमत्वं व्यज्यते । **मङ्गलाय** मङ्गलं विधातुं **दिव्यस्य** व्योमचारिभिराहन्यमानस्य **आनन्ददुन्दुभेः** आनन्दकारिणो दुन्दुभेः

तत्प्रवर्त्यतामनयोः प्रवीरयोरविरतमविरलमिलितविकचकनककमल-कमनीयसंहतिः अमरतरुतरुणमणिमुकुलनिकरमकरन्दसुन्दरः पुष्प-निपातः ।

**विद्याधरी**—ता किं ति उण अअण्डतण्डविदुद्दंडतरलतडिच्छडा-कडारं विअ अंबरं झत्ति संवुत्तं ।

तत्किमिति पुनरकाण्डताण्डवितोद्दण्डतरलतटिच्छटाक-डारमिव अम्बरं झटिति संवृत्तम् ।

**विद्याधरः**—तत्किं नु खल्वद्य

त्वष्टृयन्त्रभ्रमिभ्रान्तमार्तण्डज्योतिरुज्ज्वलः ।
पुटभेदो ललाटस्थनीललोहितचक्षुषः ॥ ३ ॥

---

सुभटोत्साहकरस्येत्यर्थः । **धुंधुमायितं** धुंधुमित्येवंरूपो ध्वनिः । स्वार्थे क्यष् । विजृम्भितमिति कर्तरि क्तः । स्तनयित्नोरिवेत्यनेन व्योमवर्तित्वगम्भीरिमादयः साधारणधर्माः प्रतीयन्ते । **तत्** यतो व्योमचारिभिरनुगृहीतं तस्मादित्यर्थः । **प्रवर्त्यतां** विक्षिप्यताम् । **अनयोः** अविश्रममेवाभियुध्यतोः । **प्रवीरयोः** अतिरिक्तबाहुवीर्ययोः । अधिकतरपराक्रमयोरित्यर्थः । उपरीति शेषः । **अविरतमिति** ॥ विच्छेदं विना प्रवर्त्यतामित्यर्थः । **अविरलमिलितविकचकनककमलकमनीयसंहतिरिति** ॥ अविरलमिलिता बहुतरं संपृक्ता, विकचकनकमयकमलकमनीया विकचैः कनकमयैः कमलैः कमनीया, संहतिः यस्य सः । **अमरतरुतरुणमणिमुकुलनिकरमकरन्दसुन्दरः** अमरतरूद्भवानां तरुणानामीषद्विकसितानां मणिमुकुलनिकराणां मणिमयकोरकसमूहानां मकरन्दैः पुष्परसैः सुन्दरः अत्र कमलानामाकाशगङ्गासमुद्भूतत्वात् कनकमयत्वं, मुकुलानामप्यमरतरुसमुद्भूतत्वान्मणिमयत्वमित्यवगन्तव्यम् । तत् किमिति पुनरकाण्डताण्डवितोद्दण्डतरलतटिच्छटाकडारमिव अम्बरं झटिति संवृत्तम् । **तत्** तस्मात् **किमिति** केन हेतुना । इतिर्हेतौ । पुनःशब्दो विशेषे । **अकाण्डताण्डवितोद्दण्डतरलतटिच्छटाकडारम्** अकाण्डेऽनवसरे ताण्डविताभिः संजातताण्डवाभिरुद्दण्डतरलाभिरुद्दण्डतया उन्नतीभूय तरलाभिः चञ्चलाभिः तटिच्छटाभिः विद्युन्निकरैः कडारं कपिशम् । 'कडारः कपिलः पिङ्गपिशङ्गौ कद्रुपिङ्गले' इत्यमरः । इवशब्द एवार्थे । **अम्बरं** नभः । **झटिति** सहसैव **संवृत्तं** जातम् । विद्याधरस्तु कपिलीभूतमम्बरं दृष्ट्वा किमप्याशङ्कते—**तदिति** ॥ अद्य ललाटस्थनीललोहितचक्षुषः पुटभेदः किंनु खलु इति संबन्धः । **तत्** तर्हि **अद्य** इदानीं **ललाटस्थनीललोहितचक्षुषः** ललाटस्थस्य नीललोहितचक्षुषः संहाररुद्रतृतीयनयनस्येत्यर्थः । **पुटभेद** उन्मी-

(विचिन्त्य) आः ज्ञातम् । वत्सेन चन्द्रकेतुना प्रयुक्तमप्रतिरूपमाग्नेयास्त्रम् , यस्यायमग्निच्छटासंपातः । संप्रति च

अवदग्धजर्जरितकेतुचामरै-
रपयातमेव हि विमानमण्डलैः ।
दधति ध्वजांशुकपटाञ्चलेष्विमाः
क्षणकुङ्कुमच्छुरणविभ्रमं शिखाः ॥ ४ ॥

आश्चर्यम् । प्रवृत्त एवायमुच्चण्डवज्रखण्डावस्फोटपटुरटच्चटुलस्फुलिङ्गोद्गिरणगुरुरुत्तालतुमुललेलिहानोज्ज्वलज्वालासंभारभैरवः भगवा-

---

लनम् । किंनु खल्विति जिज्ञासायां निपातसमुदायः । कीदृश इत्यत्राह—**त्वष्टृयन्त्रेति** ॥ त्वष्टृयन्त्रभ्रमौ त्वष्टुर्विश्वकर्मणो यन्त्रभ्रमौ मण्यादिनिर्मलीकरणयन्त्रपरिवर्तने भ्रान्तस्य उत्तेजितमण्डलस्य मार्तण्डस्य भास्करस्य ज्योतिरिवोज्ज्वलः प्रदीप्तः । **विचिन्त्येति** ॥ सप्रणिधानं विचार्येत्यर्थः । आ इति स्मरणे । **वत्सेन** कुमारेण **चन्द्रकेतुना** सुविदितास्त्रोपनिषत्संप्रदायेन । **प्रयुक्तं** यथोपदेशमभिमन्त्रितम् । **आग्नेयास्त्रम्** अग्निना दृष्टमस्त्रम् । **यस्य** अस्त्रस्य **अयम्** अन्तरिक्षव्यापी **अग्निच्छटासंपातः** अग्निज्वालापरिगमः । कार्यमुखेन कारणमवधारयति—**संप्रति चेति** ॥ संप्रति च विमानमण्डलैः अपयातमेव हि इत्यन्वयः । चकारो वाक्यालंकारे । **विमानमण्डलैः** विमानानां मण्डलैः समूहैः । युद्धदर्शनौत्सुक्येन समागतानां व्योमचारिणां वाहनैरित्यर्थः । **अपयातम्** अपक्रान्तम् । दूरतो गत्वा परिवृत्य वीक्षणमपि न कृतमित्यवधारणेन द्योत्यते । हिर्हेतौ । कुतः पुनरीदृशं विनोदं विहाय तैरपयातमित्यत्राह—**अवदग्धेति** ॥ अवदग्धानि परिप्लुष्टानि अत एव जर्जरितानि विशीर्णाग्राणि केतुचामराणि ध्वजालंकरणानि चामराणि येषु तैः । एवमन्येषु विमानमण्डलेषु प्रसृतमस्त्रवीर्यमवधार्य निजविमानेऽपि तदेवावधारयति—**दधतीति** ॥ ध्वजांशुकपटाञ्चलेषु इमाः शिखाः क्षणकुङ्कुमच्छुरणविभ्रमं दधति इति संबन्धः । **ध्वजांशुकपटाञ्चलेषु** ध्वजांशुकभूतानां पटानामञ्चलेषु अग्रेषु, अधिकरणे सप्तमी । **इमाः** अस्त्रवीर्यादुज्ज्वलिताः **शिखा** ज्वालाः **क्षणकुङ्कुमच्छुरणविभ्रमं** क्षणकालं कुङ्कुमच्छुरणविभ्रमं कुङ्कुमरञ्जनस्य विलासं **दधति** आपादयन्ति बिभ्रतीति वा । न केवलमत्यन्तलघुभूतेषु द्रव्येषु ज्वलनमात्रम् , अपितु साक्षादग्निरेवोत्थित इत्याह—**आश्चर्यमिति** ॥ अयं भगवान् उषर्बुधः प्रवृत्त एवेति संबन्धः । अयमित्यभिनीयोक्तिः । अप्रतिहतवी-

उषर्बुधः प्रचण्डः । सर्वतोऽस्य संपातः । तत्प्रियामङ्गेनाच्छाद्य दूरमपसरामि । (तथा करोति ।)

विद्याधरी—दिट्ठिआ एदेण विमलमुत्तासेलसीअलसिणिद्धमसिण-सुउमारमंसलेण णाहदेहप्फंसेण आणन्दसंदलिदघुण्णमाणवेअणाए अद्धोदिदो एव्व अन्तरिदो मे संदावो ।

दिष्ट्या एतेन विमलमुक्ताशैलशीतलस्निग्धमसृणसुकुमार-मांसलेन नाथदेहस्पर्शेनानन्दसंदलितघूर्णमानवेदनाया अर्धो-दित एवान्तरितो मे संतापः ।

विद्याधरः—अयि, किमत्र मया कृतम् । अथवा ।

अ किंचिदपि कुर्वाणः सौख्यैर्दुःखान्यपोहति ।
तत्तस्य किमपि द्रव्यं यो हि यस्य प्रियो जनः ॥ ५ ॥

---

र्यत्वाद्भगवच्छब्दानिर्देशः । **उषर्बुधः** अग्निः **प्रवृत्त एव** उत्थित एव । कीदृश इत्यत्राह--**प्रचण्ड इति** ॥ **प्रचण्डः** क्रूरतरः । प्रचण्डतामुपपादयति—**उच्चण्डेत्यादिना** ॥ उच्चण्डानां वज्रखण्डानामवस्फोटः स्फुटनम् तद्वत्पटु रटताम् चटुलानाम् उत्तरलानां स्फुलिङ्गानाम् उद्गिरणेन गुरुः परिपोषवानित्यर्थः । **उत्तालेति** ॥ उत्तालानाम् उन्नतानां तुमुलकोलाहलानामुज्ज्वलानां च ज्वालानां संभारैः निकरैः भैरवो भयंकर इत्यर्थः । 'उत्तालं विदुरुन्नतम्' इति हलधरः । **सर्वतः** सर्वत्रापि । **अस्य** उषर्बुधस्य **संपातः** प्रसरणम् । **तत्** तस्मात् । **प्रियां** सकलपीडाभ्यो रक्षणीयाम् **अङ्गेनाच्छाद्य** निजशरीरावरणेन विगतक्लमां कृत्वा **दूरमपसरामि** विप्रकृष्टदेशमाश्रयामि । दिष्ट्या एतेन विमलमुक्ताशैल-शीतलस्निग्धमसृणसुकुमारमांसलेन नाथदेहस्पर्शेन आनन्दसंदलितघूर्णमानवेदना-याः अर्धोदित एव अन्तरितो मे संताप इत्यन्वयः । **दिष्ट्या** दैववशात् **एतेन** इदानींतनेन । **विमलेति** ॥ विमलानां शाणोल्लीढानां मुक्ताफलानां दिव्यमौ-क्तिकानां शैल उच्चयः, तद्वच्छीतलेन स्निग्धेन मिलितविषयेण मसृणेन आपातम-धुरेण सुकुमारेण विमर्दनेऽप्यनाकलितपारुष्येण मांसलेन परिपुष्टेन **नाथदेहस्प-र्शेन** संतापहरणप्रवीणेन स्पार्शनेन्द्रियेण **आनन्दसंदलितघूर्णमानवेदना-याः** आनन्दसंदलनेन घूर्णमाना, स्थातुमसमर्थतया परिभ्रान्ता, वेदना यस्याः । **अर्धोदित एव** उद्गमनावस्थायामेव **अन्तरितः** दूरीकृतः **मे** सततायत्तप्रियव-ल्लभायाः **संतापः** शरीरदाहः । अयीत्यनुनये । **किं** कीदृग्भूतमुपचरणं **मया** त्व-दीप्सितविधायिना **कृतम्** उपपादितम् । न किंचिदपीत्यर्थः । उक्तमेवार्थमाक्षिपति-**अथवेत्यादिना** ॥ **अकिंचिदपीति** ॥ व्याख्यातमेतत्पुरस्तात् । कथमवि-

**विद्याधरी**—कहं अविरलविलोललंबमाणविमलुज्जलविज्जुलदाविलासमंडिदेहिं मत्तमयूरकण्ठकाण्डसामलेहिं ओत्थरिदं जलहरेहिं णभोङ्गणं ।

कथमविरलविलोललम्बमानविमलोज्ज्वलविद्युल्लताविलासमण्डितैर्मत्तमयूरकण्ठकाण्डश्यामलैरवस्तृतं जलधरैः नभोऽङ्गणम् ।

**विद्याधरः**—कुमारलवप्रयुक्तवारुणास्त्रप्रभावः खल्वेषः । कथमविरलप्रवृत्तवारिधारासहस्रसंपातैः प्रशान्तमेव पावकास्त्रम् ।

**विद्याधरी**—पिअं मे पिअं मे । प्रियं मे प्रियं मे ।

**विद्याधरः**—हन्त भोः, सर्वमतिमात्रं दोषाय । यतः प्रलयवातालीक्षोभगम्भीरगुलुगुलायमानमेघमेदुरान्धकारनीरन्ध्ररुद्धमिव एकवारविश्वग्रसनविकटविकरालकालमुखकन्दरविवरविवर्तमानमिव युगा-

---

रलविलोललम्बमानविमलोज्ज्वलविद्युल्लताविलासमण्डितैः मत्तमयूरकण्ठकाण्डश्यामलैरवस्तृतं जलधरैर्नभोऽङ्गणम् । कथमिति वितर्के । **अविरलेति** ॥ अविरलानामस्वल्पानाम् विलोलानां तरलानां लम्बमानानां नीचैः प्रसरन्तीनां विमलानामतिस्वच्छानाम् उज्ज्वलानां दीप्तिमतीनाम् विद्युल्लतानां विलासैः मज्जनोन्मज्जनैः मण्डितैरलंकृतैरित्यर्थः । **मत्तेति** ॥ मत्तानां तरुणानां मयूराणां गलवत्स्निग्धनीलैरित्यर्थः । **अवस्तृतम्** अभिव्याप्तम् । **जलधरैः** सलिलपानपीवरमूर्तिभिः । **कुमारलवेति** ॥ कुमारलवेन प्रयुक्तस्याभिमन्त्रितस्य वारुणास्त्रस्य प्रभावः सामर्थ्यं कार्यक्षमतेति यावत् । खल्विजिज्ञासायाम् । कथमिति विस्मयानुभावो वितर्कद्योतकः । **अविरलप्रवृत्तवारिधारासहस्रसंपातैः** अविरलप्रवृत्तानाम् अविच्छेदेन निपतन्तीनां वारिधाराणां सहस्रसंपातैः असंख्याताभिरभिहतिभिः **प्रशान्तमेव** विनष्टमेव **पावकास्त्रं** भूतसंतापकमस्त्रम् । प्रियं मे प्रियं मे । हन्त भो इति खेदद्योतको निपातसमुदायः । **सर्वमिति** ॥ न केवलं संतापकरमेव, शीतलवीर्यमपीत्यर्थः । **अतिमात्रं** मात्रामतिक्रान्तम् **दोषाय** पीडां कर्तुमित्यर्थः । क्रियार्थेत्यादिना चतुर्थी । एतदेवोपपादयति—**यत इत्यादिना** ॥ **प्रलयवातालीक्षोभगम्भीरगुलुगुलायमानमेघमेदुरान्धकारनीरन्ध्ररुद्धमिति** ॥ प्रलयवातालीक्षोभेण कल्पान्तवातघोषसमुन्मेषेण गम्भीरगुलुगुलायमानैर्निष्ठुरतरनिर्ह्रादिभिर्मेघैर्मेदुरे प्रवृद्धेऽन्धकारे नीरन्ध्ररुद्धं निर्विवरनिबद्धमित्यर्थः । निश्चेष्टितमिति यावत् । तादात्विकीं च जगतोऽवस्थामुत्प्रेक्षते—**एकवारविश्वग्रसनविकटविकरालकालमुखकन्दरविवरविवर्तमा-**

न्तयोगनिद्रानिरुद्धसर्वद्वारनारायणोदरनिविष्टमिव भूतजातं प्रपद्यते । साधु चन्द्रकेतो, साधु । स्थाने वायव्यमस्त्रमीरितम् । यतः—

विद्याकल्पेन मरुता मेघानां भूयसामपि ।
ब्रह्मणीव विवर्तानां क्वापि प्रविलयः कृतः ॥ ६ ॥

**विद्याधरी**—णाध, को दाणिं एसो ससंभमोक्खित्तकरब्भमिदकोदंडो दूरादो एव्व महुरवअणपडिसिद्धजुद्धव्वावारो एदाणं कुमाराणं अन्दरे विमाणवरादो ओदरदि ।

नाथ, क इदानीमेष ससंभ्रमोत्क्षिप्तकरभ्रमितकोदण्डो दूरादेव मधुरवचनप्रतिषिद्धयुद्धव्यापार एतयोः कुमारयोरन्तरे विमानवरादवतरति ।

---

**नमिवेति** ॥ एकवारमेव विश्वग्रसनाय विकटे अतिविस्तृते, अत एव विकराले विशेषेण कराले क्रूरे, कालमुखकन्दरविवरे अन्तकमुखकन्दरोदर एव विवर्तमानं विलुठमानमित्यर्थः । **युगान्तयोगनिद्रानिरुद्धसर्वद्वारनारायणोदरनिविष्टमिव** युगान्तयोगनिद्रया कालरात्रीसंज्ञया संहारयोगिन्या निरुद्धसर्वद्वारे पिहितनिखिलविवरे नारायणोदरे सकलप्रपञ्चविलायकमहापुरुषजठरे निविष्टं विलयितुं प्रवृत्तमिवेत्यर्थः । **भूतजातं** जरायुजादिभेदभिन्नं प्राणिजातं **प्रपद्यते** जायते । अथ वारुणास्त्रवीर्यशमकरं वायव्यास्त्रप्रसरणमभिवीक्ष्याह—**साध्विति** ॥ समीचीनतरमित्यर्थः । **स्थाने** उचितावसरे **वायव्यमस्त्रं** महामेघापनोदकमस्त्रं **ईरितं** प्रयुक्तम् । उचितज्ञतामेव प्रकटयति—**विद्याकल्पेनेति** ॥ मरुता क्वापि मेघानां प्रविलयः कृत इत्यन्वयः । **मरुता** अस्त्रप्रभावजनितेन वायुना **क्वापि** अनालोचनीये भागे **मेघानाम्** अभिवर्षतां घनानां **प्रविलयः** आत्यन्तिको लयः विनाश इत्यर्थः । **कृतः** आपादितः । ननु मरुता निरस्ता मेघाः पुनरप्यागच्छेयुरित्यत्राह—**ब्रह्मणीव विवर्तानामिति** ॥ ननु घोरतरवातवेगाकुलिता मेघा विनष्टाः तथाच सति प्रपञ्चबाधा वातप्रक्षोभैः तदवस्थैवेत्यत्राह—**विद्याकल्पेनेति** ॥ यथा किलोपनिषत्संभूता विद्या मायाविलासजनितान् सुरनरतिर्यगादिभेदाभिन्नान् भूतनिवहानुपमर्द्य स्वयमेवोपशमेत् तथैव वायव्यास्त्रजनितो वायुः वारुणास्त्रप्रभावजनितान् मेघान् विधूय स्वयं चोपशाम्यतीत्यर्थः । अत्र भूयसामिति काकाक्षिन्यायेनोभयत्राप्यनुषञ्जनीयम् । नाथ क इदानीमेष ससंभ्रमोत्क्षिप्तकरभ्रमितकोदण्डो दूरादेव मधुरवचनप्रतिषिद्धयुद्धव्यापार एतयोः कुमारयोरन्तरे विमानवरादवतरति । प्रभावातिशयावगमनादेव क इति प्रश्नः । **इदानीम्** अतिगाढे समरसं-

विद्याधरः—(दृष्ट्वा) एष शम्बूकवधात्प्रतिनिवृत्तो रघुपतिः।

सान्त्वं महापुरुषसंगदितं निशम्य
तद्गौरवात्समुपसंहृतसंप्रहारः।
शान्तो लवः प्रणत एव च चन्द्रकेतुः
कल्याणमस्तु सुतसंगमनेन राज्ञः॥ ७॥

तदितस्तावत्। (इति निष्क्रान्तौ।)

मिश्रविष्कम्भः।

(ततः प्रविशति रामो लवः प्रणतश्चन्द्रकेतुश्च।)

रामः—(पुष्पकादवतरन्।)

---

मर्दे। एष इत्यभिनीयोक्तिः। **ससंभ्रमेति**॥ ससंभ्रममेवोत्क्षिप्तेन करेण भ्रमितः कोदण्डो येन सः। उभाभ्यामपि प्रहृताञ्छरान् कोदण्डपरिभ्रमणेन विधूयेत्यर्थः। **दूरादेव मधुरवचनप्रतिषिद्धयुद्धव्यापारः** अवतरणमार्गादेवारभ्य मधुरवचनेन प्रतिषिद्धो युद्धव्यापारो येन सः। **एतयोः** अविश्रममितरेतरं प्रहरतोः **कुमारयोः** अविदितनिजसंबन्धनिष्ठुरयोः **अन्तरे** मध्ये निरन्तरशरपरिपतनदुर्विगाह इत्यर्थः। **विमानवरात्** अलक्ष्यवेगपरिपतनाद्दिव्ययानात्। **अवतरति** निश्शङ्कमवरोहति। एष इत्यभिनीयोक्तिः। **शम्बूकवधात्** शम्बूकं हत्वा, ल्यब्लोपे पञ्चमी। **प्रतिनिवृत्तः** प्रत्यागतः। जनस्थानादित्यर्थात्। **रघुपतिः** अनयोः कुमारयोः पिता। अथ तद्दर्शनजामुभयोरपि प्रतिपत्तिमाह—**सान्त्वमिति**॥ लवः महापुरुषसंगदितं सान्त्वं निशम्य तद्गौरवात् समुपसंहृतसंप्रहारः शान्तः, चन्द्रकेतुः प्रणत एव च इत्यन्वयः। **लवः** उभयविधविनयवान् **महापुरुषसंगदितं** महापुरुषेण संभावनीय (वाचिना) पुरुषेण संगदितं सादरमुक्तं **सान्त्वम्** अनुसरणवचनं **निशम्य** श्रुत्वा **तद्गौरवात्** सान्त्ववचनगौरवात् **समुपसंहृतसंप्रहारः** समुपसंहृतः सम्यगेवावसितीकृतः संप्रहारो येन सः **शान्तः** तूष्णींभूतः, विरत इति वा। **चन्द्रकेतुः** रघुनाथावरजसूनुः **प्रणत एव** सान्त्ववचनं विनैव निजगुरुदर्शनात्सहसैव पादाभिवन्दनं कृत्वा स्थितवानित्यवधारणेन प्रकाश्यते। एवं रघुनाथस्य निजसुतसंगमाभिवृद्धिं दृष्ट्वा पुनः सानुषङ्गाणि कल्याणानीति न्यायेन सप्रमोदं स्वयमेवाशास्ते—**कल्याणमस्त्विति**॥ राज्ञः सुतसंगमानुषङ्गतया सीतासंगमात्मकं कल्याणमपि भूयादित्यर्थः। **तत्** तस्मात्। **इतस्तावदिति**॥ गच्छाव इति शेषः। मिश्रविष्कम्भकः॥ अथ विद्याधरपरिसूचितं रघुनाथप्रवेशं कथयति—**ततः प्रविशतीति**॥ **पुष्पकादवतरन्निति**॥ आहेति शेषः। अवतरणात्पूर्वमेव कथनं चन्द्रकेतुपरिरम्भणत्वरया। **दिनकरकुलच-**

दिनकरकुलचन्द्र चन्द्रकेतो
सरभसमेहि दृढं परिष्वजस्व।
तुहिनशकलशीतलैस्तवाङ्गैः
शममुपयातु ममापि चित्तदाहः॥ ८॥

(उत्थाप्य सस्नेहास्रं परिष्वज्य।) अपि नाम कुशलं तव दिव्यास्त्रदेहस्य।

चन्द्रकेतुः—कुशलमत्यद्भुतप्रियवयस्यलाभाभ्युदयेन। तद्विज्ञापयामि मामिव विशेषेण वा मत्तः शिवेन चक्षुषा पश्यत्वमुं वीरप्रवालं तातः।

रामः—(लवं निरूप्य।) दिष्ट्या अतिगम्भीरकल्याणाकृतिरयं प्रियवयस्यो वत्सस्य।

---

न्द्रेति॥ चन्द्रकेतो सरभसमेहि इति संबन्धः। चन्द्रकेतो मदङ्कपरिवर्धित। सरभसं रभसेन सहितं यथा तथेत्यर्थः। रभसो वेगः। रभसः क्रोधवेगयोरित्यमरः। एहि इत आगच्छ। ततः किं कर्तव्यमित्यत्राह—दृढं परिष्वजस्वेति॥ कुतः पुनस्त्वरेत्यत्राह—शममिति॥ विनाशमित्यर्थः। उपयातु प्राप्नोतु। ममापि अनालोचितशोकपरिणतेरपि चित्तदाहः हृदयतापः। कथमिवानेन चित्तदाहः शममुपयायादित्यत्राह—तुहिनशकलशीतलैरिति॥ घनीभूतहिमखण्डवदतिशिशिरैरित्यर्थः। तव रघुकुलसंतानस्य अङ्गैः अवयवैः। अङ्गानां किं हृदयतापप्रशमकं शैत्यमस्तीत्यत्राह—दिनकरकुलचन्द्रेति॥ धर्मदारपरित्यजनादनिस्तीर्णपित्रृणस्यापि मम चित्तदाहो दिनकरकुलवृद्धिकारिणस्तव परिष्वङ्गादेवोपशमं व्रजेदिति भावः। अभिवादयते अभिवादनं करोति। उत्थाप्य उत्थापनं कृत्वा। तनयदर्शनात्स्नेहः। चिरविरहादास्रम्। अपिनामेति दैवप्रार्थनायाम्। कुशलम् अनामयं, भवतीति शेषः। दिव्यास्त्रदेहस्य दिव्यास्त्रमयशरीरस्य। दिव्यान्यस्त्राणि द्यति खण्डयति इति दिव्यास्त्रदा ईहा यस्येति वा। आशंसितमेवानुमोदते—कुशलमिति॥ कथमित्यत्राह—अत्यद्भुतेति॥ नतु परिवारजनक्षेमेणेति भावः। तत् दुर्लभलाभाभ्युदयवशात् विज्ञापयामि अनुमोदनं करोमि। मामिवेति॥ पुत्रमिवेत्यर्थः। तावतापि न पर्याप्तमित्याह—विशेषेणेति॥ औरसमिवेत्यर्थः। शिवेनेति॥ परिपन्थिबुद्धिमपहायेत्यर्थः। चक्षुषा दृष्ट्या पश्यतु प्रार्थनायां लोट्। अमुं संभावनीयाकृतिं वीरप्रवालं वीराङ्कुरम्। दिष्ट्येति॥ दैवादेवेत्यर्थः। अतिगम्भीरेति॥ अतिगम्भीरा नितरामनभिभवनीया कल्याणी विश्वसनीया चाकृतिर्यस्य सः। अयम् आकारानुमेयनिरतिशयप्रभावः प्रियवयस्यः निजाकृतिशीलरुचिचेष्टितैरनुरूपः सुहृत् वत्सस्य चन्द्रकेतोः। लब्ध इति शेषः। उक्तरूपतामुपपादयति—त्रा-

त्रातुं लोकानिव परिणतः कायवानस्त्रवेदः
क्षात्रो धर्मः श्रित इव तनुं ब्रह्मकोशस्य गुप्त्यै ।
सामर्थ्यानामिव समुदयः संचयो वा गुणानां
प्रादुर्भूय स्थित इव जगत्पुण्यनिर्माणराशिः ॥ ९ ॥

लवः—(स्वगतम् ।) अहो पुण्यानुभावदर्शनोऽयं महापुरुषः ।

आश्वासस्नेहभक्तीनामेकमायतनं महत् ।
प्रकृष्टस्येव धर्मस्य प्रसादो मूर्तिसंचरः ॥ १० ॥

आश्चर्यम् आश्चर्यम् ।

---

**तुमित्यादिना** ॥ अस्त्रवेदः लोकान् त्रातुं कायवान् परिणत इवेति संबन्धः । **अस्त्रवेदः** अस्त्रमन्त्रः **लोकान्** सर्वलोकान् पातालादिचतुर्दशलोकवासिनो जनान् **त्रातुं** रक्षितुं, सर्वविधापद्भ्य इति शेषः । **कायवान्** मूर्तिमान् । **परिणतः** समुत्पन्नः **क्षात्रः** क्षत्रियसंबन्धी **धर्मः** परिपालनरूपः **ब्रह्मकोशस्य** ब्रह्माण्डस्य **गुप्त्यै** रक्षार्थं । **सामर्थ्यानां** तत्तत्कर्मकरणप्रवर्तकानां संस्कारविशेषाणामित्यर्थः । **समुदयः** समूहः । 'समुदायः समुदयः समवायश्च यो गणः' इत्यमरः । **संचयो** निधिः **गुणानां** धीरोदात्तलक्षणभूतानाम् । तदुक्तम्—'महासत्त्वोऽतिगम्भीरः क्षमावानविकत्थनः । स्थिरो निगूढाहंकारो धीरोदात्तो दृढव्रतः ॥' इति । **प्रादुर्भूय** प्रत्यक्षीभूय **स्थितः** पुरत इति शेषः । **जगत्पुण्यनिर्माणराशिः** जगतां जनानां पुण्यनिर्माणराशिः पुण्यनिर्माणानां राशिः । निर्मीयत इति निर्माणं फलं राशिः समूहः । पुण्यफलपरिपाकविशेष इति यावत् । अत्र पूर्ववाक्येन दुरभिभवनीयता कथिता, द्वितीयेन स्वधर्मप्रवणता, तृतीयेन साहाय्यानपेक्षिता, चतुर्थेनाभिगम्यता, पञ्चमेन परोपकारपरता । अहो इति विस्मये । **पुण्यानुभावदर्शन इति** ॥ पुण्यानुभावेन पुण्यप्रभावेन दर्शनं यस्य सः असुलभदर्शन इति यावत् । अयमित्यभिनीयोक्तिः । **महापुरुषः** उत्कृष्टपुरुषः । उक्तमर्थमुपपादयति—**आश्वासेति** ॥ आश्वासो विश्वासः । स्नेहः चित्तद्रवीभावहेतुः विस्रम्भैकार्थसमवायिभावविशेषः । तदुक्तम्—'विस्रम्भे परमां काष्ठामारूढे दर्शनादिभिः । यत्र द्रवत्यन्तरङ्गं स स्नेह इति कथ्यते ॥' इति । भक्तिः पक्षपातातिशयः प्रजानां नृपविषयक इति भावः । **एकम्** अभिन्नम् **आयतनं** निवासस्थानम् **महत्** इतरविषयव्यतिरिक्तम् । **प्रकृष्टस्य** उत्तमस्य **धर्मस्य** सर्वभूतदयासंज्ञितस्य **प्रसादः** अनुग्रहः **मूर्तिसंचरः** मूर्त्या संचरतीति मूर्तिसंचरः । चरेष्ट इति टः । मनसः स्वायत्ततापरित्यजनमालोच्याह—**आश्चर्य-**

विरोधो विश्रान्तः प्रसरति रसो निर्वृतिघन-
स्तदौद्धत्यं क्वापि व्रजति विनयः प्रह्वयति माम् ।
झटित्यस्मिन्दृष्टे किमिति परवानस्मि यदि वा
महार्घस्तीर्थानामिव हि महतां कोऽप्यतिशयः॥११॥

**रामः**—तत्किमयमेकपद एव मे दुःखविश्रामं ददात्युपस्नेहयति च कुतोऽपि निमित्तादन्तरात्मानम् । अथवा स्नेहश्च निमित्तसव्यपेक्षश्चेति विप्रतिषिद्धमेतत् ।

व्यतिषजति पदार्थानान्तरः कोऽपि हेतु-
र्न खलु बहिरुपाधीन् प्रीतयः संश्रयन्ते ।

---

**मिति** ॥ भृशार्थे द्विर्वचनम् । **विरोध इति** ॥ परिपन्थिविषयतया मनसः प्रतिकूलं परिस्पन्दभेद इत्यर्थः । **विश्रान्तः** उपरतः । **प्रसरति** उद्गच्छति **रसः** विगलितवेद्यान्तरात्मा **निर्वृतिघनः** परमानन्दनिबिडः । **तत्** प्रक्रान्तम् **औद्धत्यं** गर्वगरिमा **क्वापि** प्रतिनिवर्तनानर्हे भागे **व्रजति** गच्छति । **विनयः** उपगमः **प्रह्वयति** नमयति **माम्** आचार्यपादेभ्योऽन्यत्राविदितप्रणामम् । **झटिति** सहसैव **अस्मिन्** पुरोवर्तिनि **दृष्टे** नयनविषयीभूते **किमिति** कस्माद्धेतोः । इतिर्हेतौ । **परवानस्मि** अस्वतन्त्रो भवामि । 'परतन्त्रः पराधीनः परवान्नाथवानपि' इत्यमरः । यदिवेति प्रकृतान्यथात्वे निपातसमुदायः । **महार्घः** निरतिशयः दुरधिगमन इति यावत् । अर्हेर्न्यङ्क्वादित्वात् कुत्वम् । **तीर्थानामिव** क्षेत्राणामिव । हिः प्रसिद्धौ । **महतां** सज्जनानां **कोऽपि** अनिर्देश्यः **अतिशय** उत्कर्षः । **तत्** तस्मात् । किंशब्दो जिज्ञासायाम् । **अयं** चन्द्रकेतुप्रियवयस्यः **एकपद एव** युगपदेव **दुःखविश्रामं** संतापविरामं **करोति** संपादयति । **उपस्नेहयति** अनुरञ्जयति **कुतोऽपि निमित्तात्** अविज्ञेयात्कारणात् **अन्तरात्मानं** मनः । अथवेति पक्षव्यावृत्तौ । निमित्तान्तरगवेषणा न कर्तव्येत्यर्थः । असत्त्वादेवेत्याह—**स्नेह इति** ॥ चकारौ विरोधद्योतकौ । **निमित्तसव्यपेक्ष इति** ॥ कारणानुविधानवानित्यर्थः । **विप्रतिषिद्धमिति** ॥ अत्यन्तविरुद्धमित्यर्थः । कारणान्तरजन्यत्वे स्नेहस्य स्वरूपहानिरेव स्यादिति भावः । सनिदर्शनमेवैतत्प्रतिपादयति—**व्यतिषजतीति** ॥ आन्तरः कोऽपि हेतुः पदार्थान् व्यतिषजति इति संबन्धः । आन्तर इत्यनेन अदृश्यतां प्रतिपादयति । **कोऽपि** वचनानर्हः **हेतुः** निमित्तम् **पदार्थान्** चेतनानचेतनानपि **व्यतिषजति** व्यतिषञ्जयति विविधमातिशयेन सञ्जयतीत्यर्थः । इतरेतरसक्तान् करोतीति यावत् । सजतेरकर्मकत्वाण्णिचमन्तर्भाव्यैव व्याख्येयम् । अथवा

विकसति हि पतङ्गस्योदये पुण्डरीकं
द्रवति च हिमरश्मावुद्गते चन्द्रकान्तः ॥१२॥

लवः—चन्द्रकेतो, क एते ।

चन्द्रकेतुः—प्रियवयस्य, ननु तातपादाः ।

लवः—ममापि धर्मतस्तथैव यतः प्रियवयस्येति भवतोक्तम् । किंतु चत्वारः किल भवन्त्येवंव्यपदेशभागिनस्तत्रभवन्तो रामायणकथापुरुषाः । तद्विशेषं ब्रूहि ।

चन्द्रकेतुः—ज्येष्ठतातपादा इत्यवेहि ।

लवः—(सोल्लासम् ।) कथं रघुनाथ एव । दिष्ट्या सुप्रभातमद्य यदयं

---

चापमासज्येत्यादौ कर्मण्यपीति प्रक्रियासर्वस्वकथनादिह सजतिः सकर्मकः । प्रयुक्तं चैतदुद्दण्डकविना—'परिशिथिलमासज्य वसनं नितम्बे बिम्बोष्ठी' इति । न खल्विति निषेधे । **बहिरुपाधीन्** बाह्यानुपाधीन् दृश्यान् हेतूनित्यर्थः । **प्रीतयः** चित्तसमुल्लसनानि **संश्रयन्ते** आकाङ्क्षन्ति । उक्तमर्थमुदाहरणेन हृदयंगमीकरोति—**विकसतीति** ॥ हिः प्रसिद्धौ । **पतङ्गस्य** सूर्यस्य **उदये** नतु किरणसंपर्के । **द्रवति** प्रक्षरति **हिमरश्मौ** शीतकिरणे **उद्गते** गगनतलमधिरूढे किरणसंपर्कं प्रतिपालयत्येवेत्यर्थः । यथोक्तमिहैव—बाहुरैन्दवमयूखचुम्बितस्यन्दिचन्द्रमणिहारविभ्रम' इति । अत्रायमाशयः—यथा किल पुण्डरीकविकासचन्द्रकान्तद्रवीभावयोः किरणसंपर्कनिरपेक्षत्वसापेक्षत्वयोर्निमित्तस्य दुर्निरूपत्वात् अग्निपवनादीनामूर्ध्वज्वलनतिर्यक्पवनादाविव चेतनादृष्टमेव निमित्तमवधार्यते तथैव कस्यचित्क्वचित्प्रीतिविशेषजननेऽपि दृश्यहेतोरनुपलम्भाददृष्टमेव निमित्तमवसेयमिति । **चन्द्रकेतो** राजसूनो **क एते** किंनामधेयाः कतमगोत्रजाताश्च । राजकुमारतया निखिलजनवन्दनीयस्य तवाभिवादनीया विरलाः, तत् कीदृशस्तवास्य च संबन्ध इति भावः । **प्रियवयस्येति** ॥ अनेन धर्मतस्तवाप्यभिवादनीया इति द्योत्यते । ननुरनुमनने । **तातपादा इति** ॥ अस्मदभिवादनदर्शनेऽपि कथं नावधार्यत इति भावः । **ममापीति** ॥ यथा तवेत्यर्थः । **तथैव** तातपादा एव । कुतः पुनः प्रणमनं न करोषीत्यत्राह—**किंत्विति** ॥ **एवं व्यपदेशभागिनः** तातव्यवहारयोग्याः । **तत्** तस्मात् । **विशेषमिति** ॥ सर्वमवधार्यापि प्रणामाकरण एव हि प्रत्यवाय इति भावः । तर्हि तमपि शृण्वित्याह—**ज्येष्ठतातपादा इति** ॥ श्रुतानां गुणानां प्रत्यभिज्ञानादुल्लासः । कथमिति विस्मयानुभावः । रघुनाथ एवेत्यवधारणेन दर्शनदौर्लभ्यं कथितम् । **दिष्ट्या** दैवानुग्रहेण **सुप्रभातं** शोभनं प्रभातं सुप्रभातं जातमिति शेषः । स्वती पूजायामिति समासः ।

देवो दृष्टः। (सविनयकौतुकं निर्वर्ण्य।) तात, प्राचेतसान्तेवासी लवोऽभिवादयते।

रामः—आयुष्मन्, एह्येहि। (इति सस्नेहमालिङ्ग्य।) अयि वत्स, कृतमत्यन्तविनयेन। अङ्गेन मामपरिश्लथं परिरम्भस्व।

परिणतकठोरपुष्करगर्भच्छदपीनमसृणसुकुमारः।
आनन्दयति हि चन्दननिष्यन्दजडस्तव स्पर्शः॥ १३ ॥

लवः—(स्वगतम्।) ईदृशो मां प्रत्यमीषामकारणस्नेहः। मया पुनरेभ्य एवाभिद्रुग्धमज्ञेन यदायुधपरिग्रहपर्यन्तं यावदत्यारूढो दुर्योगः। (प्रकाशम्।) मृष्यन्त्विदानीं लवस्य बालिशत्वं तातपादाः।

---

धर्मतः पितृत्वावगमनाद्विनयः। महापुरुषदर्शनलाभात्कौतुकम्। **कृतमत्यन्तविनयेन** ईप्सितपरिपन्थिना विनयेन प्रश्रयेण इदानीं न भाव्यमिति तात्पर्यार्थः। **अङ्गेन** शरीरेण **माम्** अतिवत्सलम्। अपरिश्लथमिति क्रियाविशेषणम्। परिश्लथीभावं विनैवेत्यर्थः। परिरम्भस्वेति प्रार्थनायां लोट्। अत्र हेतुं कथयति—**परिणतेति**॥ तव स्पर्शः आनन्दयति हि इत्यन्वयः। **तव** मया समाश्लिष्टस्य। **आनन्दयति** समृद्धहर्षं करोति। हिर्हेतौ। आनन्दसामर्थ्यं प्रतिपादयति—**चन्दननिष्यन्दजड इति**॥ चन्दननिष्यन्दवदत्यन्तशीतल इत्यर्थः। पुनः कीदृश इत्यत्राह—**परिणतेति**॥ परिणतस्य पार्यासवृद्धेः कठोरस्य अपरिश्लथदलसंधानस्य पुष्करस्य कमलमुकुलस्य गर्भच्छदवत् अबाह्यदलवत् पीनः परिपुष्टः मसृणः आपातकोमलः सुकुमारो विमर्दनेऽप्यनाकलितपारुष्यश्चेत्यर्थः। मुकुलावस्थस्यैव हि कमलस्यातिशयितं सौकुमार्यम्। तदुक्तं रतिरहस्ये—'कमलमुकुलमृद्वी फुल्लराजीवगन्धः सुरतपयसि यस्याः सौरभं दिव्यमङ्गे' इति। परिणतानां कर्णिकामभित उन्नतानां कठोराणां पुष्करगर्भच्छदानामिव पीनो मसृणः सुकुमारश्चेति वा। अत्र स्पर्शशब्देन शरीरत्वगेव कथ्यते न तु स्पर्शनक्रिया। **ईदृशः** अनालोचितवैरभावः **मां प्रति** निजभृत्यजनप्रमाथिनं प्रति **अकारणस्नेहः** कारणं विनैव वत्सलता **अमीषाम्** उत्कृष्टतरचेतसाम्। **मया** पापिष्ठतमेन। पुनश्शब्दो विशेषे। **एभ्यः** अपकारकरणेऽप्यमर्षरहितेभ्यः। एवशब्देन कृतकार्यविषयोऽनुशयातिशयो व्यज्यते। **अभिद्रुग्धम्** अपकृतम् **अज्ञेन** मूढेन, कर्तव्याकर्तव्यविवेकवन्ध्येनेत्यर्थः। **यत्** यस्मात् **आयुधपरिग्रहपर्यन्तम्** आयुधोद्धरणावश्यकताप्रतिपत्तिपर्यन्तम्। यावच्छब्दः साकल्ये। समरसाहसादर्वाग्भूतं वृत्तं सकलमपीत्यर्थः। **अत्यारूढः** निजाविनयवशादेवोद्भूत इत्यर्थः। **दुर्योगः** दुष्टयोगः सन्नहनमित्यर्थः। आयुधग्रहणात्परतस्तु निवर्तितुं

**रामः**—किमपराद्धं वत्सेन ।

**चन्द्रकेतुः**—अश्वानुयात्रिकेभ्यस्तातप्रतापाविष्करणमुपश्रुत्य वीरायितमनेन ।

**रामः**—नन्वयमलंकारः क्षात्रस्य ।

न तेजस्तेजस्वी प्रसृतमपरेषां विषहते
स तस्य स्वो भावः प्रकृतिनियतत्वादकृतकः ।
मयूखैरश्रान्तं तपति यदि देवो दिनकरः
किमाग्नेयो ग्रावा निकृत इव तेजांसि वमति ॥१४॥

**चन्द्रकेतुः**—अमर्षोऽप्यस्यैव शोभते महावीरस्य । पश्यन्तु हि

---

न युक्तमिति भावः । **मृष्यतां** क्षम्यताम् **इदानीं** धर्मत ईदृशे संबन्धे सति **लवस्य** शैशवादतिदुर्ललितचेष्टितस्य **बालिशत्वम्** अज्ञत्वम् । तातपादा इति युष्मदर्थे । **किमपराद्धमिति** ॥ अस्मद्विषयतया तवापराधलेशोऽपि न प्रतीयते इति भावः । **अश्वानुयात्रिकेभ्यः** क्रतुपशुरक्षकेभ्यः **तातप्रतापाविष्करणं** युष्मद्वीर्यप्रकटनम् । **उपश्रुत्य** निजप्रश्नप्रतिध्वानरूपतया झटिति निशमनात् स्वावमानमभिशङ्क्येत्यर्थः । **वीरायितं** वीरवदाचरितम् । नन्वित्यनुमनने । **अयं** वीरवदाचरणम् **अलंकारः** शोभाकरः **क्षात्रस्य** क्षत्रभावस्य वीर्यस्येत्यर्थः । एतदेवोपपादयति—**नेति** ॥ तेजस्वी अपरेषां प्रसृतं तेजः न विषहते इति संबन्धः । **तेजस्वी** वीर्यवान् **अपरेषाम्** स्वस्मादन्येषां **प्रसृतम्** आविर्भूतं **तेजः** वीर्यं **न विषहते** न क्षमते **सः** परतेजोऽसहनतारूपः **तस्य** तेजस्विनः **स्वः** आत्मीयः **भावः** धर्मः । किं पुनः प्रमाणमित्यत्राह—**प्रकृतिनियतत्वादिति** ॥ यावद्द्रव्यभावित्वादेवेत्यर्थः । **अकृतकः** कारणान्तराजन्यः । दृष्टान्तेन चैतत्स्फुटयति—**मयूखैरिति** ॥ अश्रान्तमिति क्रियाविशेषणं, अतिशयेनेत्यर्थः । **तपति यदि** निजोष्णतां प्रकटयति चेदित्यर्थः । **देवः** अत्यन्तदीप्तिमान् **दिनकरः** सर्वप्राण्युपकारकः । **किं** किमर्थम् । **आग्नेयः** अग्निः पतत्यस्मादिति शैषिकार्थे 'सर्वत्राग्निभ्यां ढग्वक्तव्यम्' इति ढक् । **ग्रावा** शिला सूर्यकान्त इत्यर्थः । **निकृत इव** न्यक्कृत इव परिभूत इवेत्यर्थः । **तेजांसि** महांसि **वमति** उद्गिरति । अयमाशयः—तेजस्विनामन्यतेजोऽसहनता न स्वाभाविको गुण इति वदेत्तर्हि सूर्यकिरणपरिपतनेन मार्ताण्डमणिज्वलनेऽपि किं कारणमिति वक्तव्यमिति । **अमर्षोऽपि** परोत्कर्षासहनताऽपि **अस्यैव** नान्यस्य कस्यचित **शोभते** अस्माकं हृदयोल्लासहेतुर्भवतीत्यर्थः । अत्र हेतुः—

तातपादाः। प्रियवयस्यनियुक्तेन जृम्भकास्त्रेण विक्रम्य स्तम्भितानि सर्वसैन्यानि।

रामः—(विलोक्य) वत्स लव, संह्रियतामस्त्रम्। त्वमपि चन्द्रकेतो, निर्व्यापारताविलक्षणानि सान्त्वय बलानि।

(लवः प्रणिधानं नाटयति।)

चन्द्रकेतुः—यथा निर्दिष्टम्। (इति निष्क्रान्तः।)

लवः—तात, प्रशान्तमस्त्रम्।

रामः—(स्वगतम्) सरहस्यप्रयोगसंहारजृम्भकास्त्राणि अस्यापि विद्यन्ते। (प्रकाशम्।)

ब्रह्मादयो ब्रह्महिताय तप्त्वा
परःसहस्रं शरदस्तपांसि।
एतान्यदर्शन् गुरवः पुराणाः
स्वान्येव तेजांसि तपोमयानि॥ १५॥

अथेमामस्त्रपारायणोपनिषदं भगवान्कृशाश्वः परःसहस्रसंवत्सरान्तेवासिने कौशिकाय प्रोवाच। स तु भगवान्मह्यमित्येष गुरुपूर्वानुक्रमः। कुमारस्य कुतः संप्रदाय इति पृच्छामि।

लवः—स्वतःप्रकाशान्यावयोरस्त्राणि।

---

**महावीरस्येति।** **विक्रम्य स्तम्भितानि** परप्रहरणं व्यर्थीकृत्य स्तम्भितानीत्यर्थः। **संह्रियतां** त्वयैवेति शेषः। **निर्व्यापारताविलक्षणानि** निर्व्यापारतया विलक्षणानि निश्चेष्टतया विगतलक्षणानीत्यर्थः, विहीनजन्तुधर्माणीति यावत्। लक्षणशब्दो ह्यसाधारणधर्मवाची। **सान्त्वय** अन्नपानाद्युचितसंपादनेनाश्वासयेत्यर्थः। **बलानि** युद्धव्यापारिणायस्तानि। **प्रणिधानं** चित्तैकाग्र्यम्। अस्त्रदेवतास्मरणमिति यावत्। **रहस्य**शब्देन मुष्टिप्रयोगोपसंहृतिमन्त्राः कथ्यन्ते। अस्यापीत्यनेनासार्वत्रिकता प्रकाश्यते। **विद्यन्ते** सन्ति, कार्यसाधनक्षमाणि जायन्त इत्यर्थः। **ब्रह्मादय इति॥** व्याख्यातम्। अथशब्दः प्रश्ने। **इमां** त्वयेदानीं प्रयुक्ताम् **अस्त्रपारायणोपनिषदम्** अस्त्रस्य पारायणोपनिषदं मुष्टिप्रयोगादिसकलरहस्यम्। 'साकल्यासङ्गवचने पारायणपरायणे' इत्यमरः। **कुतः संप्रदाय इति॥** कस्मादाचार्यादुपदेशग्रहणमित्यर्थः। **स्वतः प्रकाशानीति॥** आचार्योपदेशं

रामः—(विचिन्त्य ।) किं न संभाव्यते । प्रकृष्टपुण्योपादानकः कोऽपि महिमा स्यात् । द्विवचनं तु कथम् ।

लवः—भ्रातरावावां यमौ ।

रामः—स तर्हि द्वितीयः क ।

(नेपथ्ये ।)

दाण्डायन दाण्डायन,

आयुष्मतः किल लवस्य नरेन्द्रसैन्यै-
रायोधनं ननु किमात्थ सखे तथेति ।
अद्यास्तमेतु भुवनेष्वपि राजशब्दः
क्षात्रस्य शस्त्रशिखिनः शममद्य यान्तु ॥ १६ ॥

---

विनैव हृदये स्फुरितानीत्यर्थः । **आवयोरिति** ॥ न केवलं ममैव अस्मद्भ्रातुरपीत्यर्थः । **प्रकृष्टेति** ॥ प्रकृष्टानां पुण्यानां परिपाक एवोपादानं कारणं यस्य सः । **कोऽपि** अनिर्देश्यः **महिमा** महत्त्वम् । स्यादिति संभावनायां लिङ् । **द्विवचनमिति** ॥ आवयोरिति द्विवचनप्रयोगः । तुशब्दो विरोधं द्योतयति । कथमिति वितर्के । कस्यचित्क्वचिदेवं संभाव्यते न पुनरन्यस्यापीति भावः । ननु पुण्यपरिपाकभेदेन जात इत्याह—**भ्रातराविति** ॥ ननु भ्रात्रोरप्यैकविध्यं संभवेदित्यत्राह—**आवां यमाविति** ॥ बैजिकाद्गार्भिकाच्च पुण्यपरिपाकाज्जातश्चेत् संभाव्यत एवेति भावः । **सः** त्वया सह जातः स्वयंप्रकाशतयाविर्भूतदिव्यास्त्र इति वा । **द्वितीयः** यमयोरन्यतरः **क** कस्मिन्देशे वर्तते । दाण्डायनेति भ्रातृपरिभवश्रवणजनितावेगवशाद् द्विर्वचनम् । **आयुष्मत इति** ॥ सखे दाण्डायन आयुष्मतः लवस्य नरेन्द्रसैन्यैः तथा किल आयोधनं ननु किमात्थ इति संबन्धः । आयुष्मत इत्यनेन मौग्ध्यं व्यज्यते । **नरेन्द्रसैन्यैः** राजभटैः । तथा किलेत्यनेन संख्यातीतैरित्यादिना प्रतिपादितोऽर्थः संगृह्यते । ततः किमित्यत्राह—**अद्येति** ॥ **अस्तमेतु** विनाशं प्राप्नोतु **भुवनेष्वपि** न केवलमस्मद्रिपुनगर एव **राजशब्दः** राजव्यवहारः । अयं वैरो जात्यैव परिणमेदिति भावः । ननु शूरतरैः क्षत्रियैः निर्बद्धमेतद्वैरं तव विनाशायैव नियतमित्यत्राह—**क्षात्रस्येति** ॥ क्षत्रभावस्येत्यर्थः । सकलक्षत्रियाणामपीति भावः । **शस्त्रशिखिनः** शस्त्रवैश्वानराः **शमं** विलयम् **अद्य** एवंविधे वैरे **यान्त्विति** विधौ लोट् । अत्र रौद्ररसस्य व्यञ्जकत्वात् कष्टत्वं गुणः । **अथेति** ॥ अथ इन्द्रमणिमेचकच्छविः कः अयं ध्वनिनैव बद्धपुलकं मां नवनीलनी-

रामः—

अथ कोऽयमिन्द्रमणिमेचकच्छवि-
र्ध्वनिनैव बद्धपुलकं करोति माम् ।
नवनीलनीरधरगर्जितश्रुति-
क्षणबद्धकुड्मलकदम्बडम्बरम् ॥ १७ ॥

लवः—अयमसौ मम ज्यायानार्यः कुशो नाम भरताश्रमात्प्रतिनिवृत्तः ।

रामः—(सकौतुकम् ।) वत्स, इत आह्वयैनमायुष्मन्तम् ।

लवः—एवम् । (इति परिक्रामति ।)

(ततः प्रविशति कुशः ।)

कुशः—(सक्रोधाकूतहर्षधैर्यं धनुरास्फालयन् ।)

दत्तेन्द्राभयदक्षिणैर्भगवतो वैवस्वतादा मनो-
र्दृप्तानां दहनाय दीपितनिजक्षत्रप्रतापाग्निभिः ।
आदित्यैर्यदि विग्रहो नृपतिभिर्धन्यं ममैतत्ततो
दीप्तास्त्रस्फुरदुग्रदीधितिशिखानीराजितज्यं धनुः ॥१८॥

(विकटं परिक्रामति ।)

---

रधरगर्जितश्रुतिक्षणबद्धकुड्मलकदम्बडम्बरं करोति इति संबन्धः । अथशब्दः प्रश्ने । **इन्द्रमणिमेचकच्छविः** इन्द्रनीलरत्नवच्छ्यामलकान्तिरित्यर्थः । विप्रकर्षाच्छारीरशोभैव नयनविषयीभूता न पुनरवयवसंस्थानमिति भावः । **अयं** दूरतो दृश्यमानः । **ध्वनिनैवेति** ॥ नतु वर्णविभागः स्फुटीभवतीति भावः । **नवनीलनीरधरेति** ॥ अभिवर्षितुमारब्धस्य अत एव नीलस्य श्यामलतरस्य नीरधरस्य मेघस्य गर्जितश्रुतिक्षण एव बद्धकुड्मलस्य कदम्बस्य डम्बरो यस्य सः । **ज्यायान्** अग्रजः । समुदाचारवशादार्यशब्दः प्रयुक्तः । **भरताश्रमात्** भरतमुनेराश्रमात् **प्रतिनिवृत्तः** प्रत्यागतः । **सक्रोधेति** ॥ निजभ्रातृपरिभवश्रवणात् क्रोधः । तत्प्रतिकरणगवेषणमाकूतम् । निजवीर्यप्रकटनावकाशलाभाद्धर्षः । प्रवीरराजन्यविरोधितया धैर्यम् । धनुरास्फालनं युद्धौत्सुक्यवशात् । **दत्तेति** ॥ मम आदित्यैः नृपतिभिः विग्रहः यदि ततः एतद्धनुर्धन्यमित्यन्वयः । **मम** सुतीर्थादधिगतदिव्यास्त्रसंप्रदायस्य **आदित्यैः** आदित्यगोत्रजातैः । तद्राजप्रत्ययत्वात् बहुषु लुक् । **विग्रहो** युद्धम् । यदीति सिद्धानुवादे । **ततः** तर्हि **एतत्** अस्मत्करस्थं **धनुः** अननुभूतसमरकर्म **धन्यं** भागधेयवत् ।

रामः—कोऽप्यस्मिन्क्षत्रियपोतके पौरुषातिरेकः । तथाहि ।

दृष्टिस्तृणीकृतजगत्त्रयसत्त्वसारा
धीरोद्धता नमयतीव गतिर्धरित्रीम् ।
कौमारकेऽपि गिरिवद्गुरुतां दधानो
वीरो रसः किमयमेत्युत दर्प एव ॥ १९ ॥

लवः—(उपसृत्य ।) जयत्वार्यः ।

कुशः—नन्वायुष्मन् , किमियं वार्ता युद्धं युद्धमिति ।

लवः—यत्किंचिदेतत् । आर्यस्तु दृप्तभावमुत्सृज्य विनयेन वर्तताम् ।

कुशः—किमर्थम् ।

लवः—यदत्र देवो रघुपतिस्तिष्ठति । स च स्निह्यत्यावयोः, उत्कण्ठते

---

कृतं इत्यत्राह—**दीप्तेति** ॥ दीप्तानां प्रज्वलितानाम् अस्त्राणामाग्नेयादीनां स्फुरन्तीभिः तरलाभिः उग्राभिः करालाभिः दीधितिशिखाभिः **मयूखप्ररोहैः** नीराजिता प्रथमतो युद्धप्रवर्तनात्संपादितमङ्गला ज्या यस्य तत् । विकटमिति क्रियाविशेषणम् । आयतपदविन्यासमित्यर्थः ॥ **कोऽपि** वागिन्द्रियाविषयः **अस्मिन्** इतोमुखमागच्छति **क्षत्रियपोतके** क्षत्रियबालके **पौरुषातिरेकः** प्रभावातिशयः । उक्तमेवार्थमुपपादयति—**दृष्टिरिति** ॥ अयं वीरः रसः किमेति, दर्प एव उत इत्यन्वयः । अयमित्यभिनीयोक्तिः । **वीरःरसः** उत्साहः । व्यङ्ग्यव्यञ्जकयोरभेदेनाध्यवसायात्कुमारस्य वीर्यातिशयः प्रतीयते । **दर्पः** अहंकारः । अत्रापि अध्यवसायः । किमुतशब्दावुत्प्रेक्षाद्योतकौ । उत्प्रेक्षाद्वितयस्यापि निमित्तमुपपादयति—**दृष्टिरित्यादिना** ॥ दृष्टिर्दर्शनं नयनपात इत्यर्थः । भावे क्तिन् । **तृणीकृतजगत्त्रयसत्त्वसारा** तृणीकृतो न्यक्कृतो जगत्त्रयसत्त्वसारो लोकत्रयवर्तिशूरजनवीर्यसारो यया सा । **धीरोद्धता** सगर्वा **गतिः** परिक्रमणम् । **कौमारकेऽपि** बाल्येऽपि **गिरिवत्** पर्वतवत् **गुरुताम्** अचाल्यताम् । अत्र वीररसत्वेन संभावनायां दृष्टिस्तृणीकृतजगत्त्रयसत्त्वसारेति कौमारकेऽपि गिरिवत् गुरुतां दधान इति च निमित्तम् । दर्पत्वेन तु धीरोद्धता नमयतीव गतिर्धरित्रीमिति । नन्विति प्रश्ने । किंशब्दो जिज्ञासायाम् । इयमित्यनेन तात्कालिकता कथिता । पौनःपुन्येन श्रवणाद्द्विर्वचनम् । यत्किंचिदित्ययथार्थायाम् । तुशब्दः प्रकृतसंनाहस्य अनौचित्यं द्योतयति । **दृप्तभावम्** उद्धतचेष्टितम् **उत्सृज्य** परित्यज्य **विनयेन** उपशान्ततया **वर्तताम्** चेष्टताम् । कर्मेन्द्रियाणि सुसंयतानि भवन्त्वित्यर्थः । अत्र हेतुं जिज्ञासते—**किमर्थमिति** ॥ **यत्** यस्मात् । अत्रेत्यभिनीयोक्तिः । **देवः**

च युष्मत्संनिकर्षस्य ।

कुशः—(सवितर्कम् ।) स रामायणकथानायको ब्रह्मकोशस्य गोपायिता।

लवः—अथ किम् ।

कुशः—आशंसनीयपुण्यदर्शनः स महात्मा । किंतु स कथमस्माभिरुपस्थातव्य इति संप्रधारयामि ।

लवः—यथैव गुरुस्तथोपसदनेन ।

कुशः—अपि हि नामैतत् ।

लवः—अत्युदात्तः सुजनश्चन्द्रकेतुरौर्मिलेयः प्रियवयस्येति सख्येन मामुपातिष्ठते । तेन संबन्धेन धर्मतस्तात एवायं राजर्षिः ।

कुशः—संप्रत्यवचनीयो राजन्यसंश्रयः ।

(उभौ परिक्रामतः ।)

लवः—पश्यत्वेनमार्यो महापुरुषमाकारानुभावगाम्भीर्यसंभाव्यमानविविधलोकोत्तरसुचरितातिशयम् ।

---

जगत्स्वामी **रघुपतिः** श्रीरामचन्द्रः रामायणकथानायक इति भावः। ततः किमित्यत्राह—**स चेति** ॥ **स्निह्यति** स्नेहं करोति। **आवयोरिति** ॥ त्वय्यपीत्यर्थः । किमपरिचिते मय्यपीत्यत्राह—**उत्कण्ठते चेति** ॥ **युष्मत्संनिकर्ष** युष्मत्प्राप्तिम् । लववचनपरिसूचितमेव सकौतुकं पृच्छति—**श्रीमद्रामायणकथानायक इति** ॥ **ब्रह्मकोशस्य** ब्रह्माण्डस्य **गोपायिता** रक्षिता । अथकिमित्यनुवादे । **आशंसनीय इति** ॥ आशंसनीयेन प्रार्थनीयेन पुण्येनैव दर्शनं यस्य सः। प्राकृतजनैर्दुर्दर्श इत्यर्थः। किंत्विति पक्षव्यावृत्तौ । कथमिति प्रकारे । **उपस्थातव्यः** सेवनीयः । इतिशब्दः स्वरूपे । **संप्रधारयामि** विचारयामि । **उपसदनेन** समीपगमनेन । उपस्थातव्य इत्यनुषज्यते । अपिशब्दः प्रश्ने । हिर्हेतौ । नामेत्युपगमने । **एतत्** गुराविवोपसदनम् । प्रणामादिसमुदाचारकरणमङ्गीकर्तव्यमित्यत्र किं कारणमिति प्रश्नार्थः । अत्युदात्त इत्यनेन लोकोत्तरता कथिता। सुजन इत्यनेनामर्षकारणेऽप्यमर्षशून्यता । चन्द्रकेतुरौर्मिलेय इत्यनेन वाल्मीकिकथितमनुस्मारयति । **उपतिष्ठते** सेवते । **संप्रति** धर्मतोऽस्य पितृत्वे सति **अवचनीयः** वचनीयरहितः निर्दोष इत्यर्थः। **राजन्यसंश्रयः** राजन्यसेवनम् । **आकारेति** ॥ आकारस्यानुभावगाम्भीर्याभ्यां संभाव्यमान उपपन्न इति कल्प्यमानो विविधो लोकोत्तरसुचरितातिशयो वरुणत्रासनसेतुबन्धनाद्यपदानानामतिशयो यस्य तम् । **अहो इति** ॥ प्रसादेन निर्वृत्तं प्रासादिकम् । 'निर्वृत्तेऽ

कुशः—(निर्वर्ण्य ।)

अहो प्रासादिकं रूपमनुभावश्च पावनः ।
स्थाने रामायणकविर्दैवीं वाचं व्यवीवृधत् ॥ २० ॥

तात, प्राचेतसान्तेवासी कुशोऽभिवादयते ।

रामः—एह्येहि युष्मन् ।

अमृताध्मातजीमूतस्निग्धसंहननस्य ते ।
परिष्वङ्गाय वात्सल्यादयमुत्कण्ठते जनः ॥ २१ ॥

(परिष्वज्य स्वगतम् ।) तत्किमित्ययं च दारकः

अङ्गादङ्गात्स्रुत इव निजः स्नेहजो देहसारः
प्रादुर्भूय स्थित इव बहिश्चेतनाधातुरेकः ।

---

क्षद्यूतादिभ्य'इत्यत्र निर्वृत्त इति विभागात् ठक् । **रूपम्** आकारः । अनुभव एवानुभावः । प्रज्ञादित्वात्स्वार्थेऽण् । **पावनः** विशुद्धः । नृशंसतासंपर्करहित इत्यर्थः । एवं विस्मयातिभारेणावलोक्यमाने रघुनाथे निखिलानपि वाल्मीकिकथितान् गुणान् प्रत्यभिजानन् सश्लाघमाह—**स्थान इति** ॥ युक्तमित्यर्थः । **दैवीं** देवसंबन्धिनीं **वाचं** वाणीं संस्कृतभाषामिति यावत् । **व्यवीवृधत्** वर्धयति स्म । एतदपदानगुणवर्णनात्मकतया दैव्या वाचोऽधिकतरं विस्तरकरणमुचिततरमितीदानीं जानामीत्यर्थः । **प्राचेतसान्तेवासीति** ॥ मातापित्रोरनुस्मरणाभावात् । **अमृतेति** ॥ अयं जनः वात्सल्यात् ते परिष्वङ्गाय उत्कण्ठते इत्यन्वयः । **परिष्वङ्गाय** परिष्वङ्गं लब्धुम् । उत्कण्ठाकारणमाह—**अमृतेति** ॥ अमृतेन जलेनाध्मातस्य पीनस्य जीमूतस्येव स्निग्धमत्यन्तसुकुमारं संहननं शरीरबन्धो यस्य तस्य । अथ लवस्येव कुशस्यापि परिष्वङ्गे एकविधमानन्दातिशयमुपलभ्य सवितर्कमाह—**तदिति** ॥ अयं च दारकः गात्रश्लेषे अमृतरसस्रोतसा सिञ्चतीव यत् तत् किमित्यन्वयः । चकारः समुच्चये । **गात्रश्लेषे** गात्रसंसर्गे **अमृतरसस्रोतसा** अमृतरसस्य अमृतद्रवस्य स्रोतसा प्रवाहेण **सिञ्चतीव** आप्यायतीव । किंशब्दो जिज्ञासायाम् । इतिर्हेतौ । जिज्ञासितं चार्थमिन्द्रियसंमोहवशादनवधारणीयतयैव तादृशप्रतीत्युपपादकतत्तदात्मकतयोत्प्रेक्षते—**अङ्गादङ्गादिति** ॥ वीप्सायां द्विर्वचनम् । सकलावयवेभ्य इत्यर्थः । **स्रुत इव** शरीरात् बहिर्निर्गत्य स्थित इवेत्यर्थः । स तु कीदृश इत्यत्राह—**निज इति** ॥ आत्मीय इत्यर्थः । स्रवणोपपात्तिं कथयति—**स्नेहज इति** ॥ स्नेहान्निमित्तात् प्रादुर्भूतः स्नेहातिशयवशात् द्रवीभूय बहिः प्रसृत इति यावत् । किं वा तद्वस्तु इत्यत्राह—**देहसार इति** ॥ देहस्य सारः त्वगादिषु प्रधानभूत इत्यर्थः । तदुक्तम्—'कायस्य तेजः परमं हि शुक्रमा-

सान्द्रानन्दक्षुभितहृदयप्रस्रवेनेव सिक्तो
गात्रश्लेषे यदमृतरसस्रोतसा सिञ्चतीव ॥ २२ ॥

लवः—ललाटंतपस्तपति तिग्मांशुः । तदत्र सालप्रच्छाये मुहूर्तमासनपरिग्रहं करोतु तातः ।

रामः—यदभिरुचितं वत्सस्य ।

(परिक्रम्य यथोचितमुपविशन्ति ।)

रामः—(स्वगतम् ।)

अहो प्रश्रययोगेऽपि गतिस्थित्यासनादयः ।
साम्राज्यशंसिनो भावाः कुशस्य च लवस्य च ॥ २३ ॥

---

हारसारादतिसारभूतम्' इति । तथापि नेदृशी सुखसंपत्तिर्जायेत इत्यत्राह—**प्रादुर्भूयेति** ॥ सशरीरी भूत्वेत्यर्थः । **स्थित इव** परिष्वङ्गोचित इवेत्यर्थः । **बहिः** शरीरात् पृथग्भूत इत्यर्थः । **चेतनाधातुः** चेतनारूपः शरीरधातुः **एकः** मुख्यः । शरीरवर्तिभ्यः त्वगादिभ्यः प्रधानभूतोऽष्टम ओजोधातुरित्यर्थः । तथा-च वाहटः—'ओजस्तेजस्तु धातूनां शुक्रान्तानां परं स्मृतम् । स्निग्धं सोमात्मकं शुद्धमीषल्लोहितपीतकम् ॥' इति । तथापि नेदृश आनन्दातिशयः संभवेदित्यत्राह—**सान्द्रेति** ॥ सान्द्रेण परिपूर्णेन आनन्देन हेतुना क्षुभितस्य द्रवीभूय परिप्लवमानस्य हृदयस्य प्रस्रवेन निष्यन्देन सिक्तो निषिक्त उत्पादित इति यावत् । अत्र गात्रसंश्लेषणक्रियावत आत्मनः अमृतरससेचनक्रियावत्त्वेन संभावनादुत्प्रेक्षालंकारः । स च संदेहानुप्राणितानामुत्प्रेक्षान्तराणामुत्थापक इति संकरः । **ललाटंतपः** ललाटं मूर्धानं तपतीति ललाटंतपः । 'असूर्यललाटयोर्दृशितपोः' इति खश् । **तपति** संतापयति **तिग्मांशुः** सूर्यः । **तत्** तस्मात् । **सालप्रच्छाये** सालस्य प्रकृष्टायां छायायामित्यर्थः । 'विभाषा सेनासुराच्छायाशालानिशानाम्' इति क्लीबत्वम् । **मुहूर्तं** मुहूर्तकालम् **आसनपरिग्रहम्** उपवेशनादरम् । **यदभिरुचितमिति** ॥ तत्तथैवेति शेषः । अथोभयोरपि शरीरचेष्टितानि दृष्ट्वा सविस्मयमाह—**अहो इति** ॥ कुशस्य लवस्य च गतिस्थित्यासनादयः भावाः प्रश्रययोगेऽपि साम्राज्यशंसिनः अहो इत्यन्वयः । **गतिः** गमनं **स्थितिः** पादपमूलं गत्वाऽवस्थानम् **आसनं** तत्रोपवेशनम् । आदिशब्दादवलोकनं कथ्यते । **भावाः** क्रियाः **प्रश्रययोगेऽपि** विनयसंबन्धेऽपि **साम्राज्यशंसिनः** सम्राड्भावप्रतिबोधकाः । अहो इति विस्मये । एवं सुखासीनयोस्तयोर्नखादिकेशान्तं सुनिपुणं निरूपयन्नाह—**वपुरिति** ॥ वपुषा शरीरेण अवियुतसिद्धा अपृथक्सिद्धा इत्य-

वपुरवियुतसिद्धा एव लक्ष्मीविलासाः
प्रतिकलकमनीयां कान्तिमुद्भेदयन्ति ।
अमलिनमिव चन्द्रं रश्मयः स्वे यथा वा
विकसितमरविन्दं बिन्दवो माकरन्दाः ॥ २४ ॥

भूयिष्ठं च रघुकुलकौमारकमनयोः पश्यामि ।

कठोरपारावतकण्ठमेचकं
वपुर्वृषस्कन्धसुबन्धुरांसयोः ।
प्रसन्नसिंहस्तिमितं च वीक्षितं
ध्वनिश्च माङ्गल्यमृदङ्गमांसलः ॥ २५ ॥

र्थः । 'यु मिश्रणामिश्रणयोः' इति धातुः । शरीरसमवायिन इति यावत् । एवशब्देन कटकमकुटादिसम्राट्चिह्नानि व्यावर्त्यन्ते । **लक्ष्मीविलासाः** राजलक्ष्मीविलसितानि । सामुद्रिकादिप्रसिद्धलक्षणलक्षितेष्ववयवेषु प्रतिदर्शनं तत्र तत्र प्रतीयमाना राजलक्ष्म्याः परिस्फुरणभेदा इत्यर्थः । **प्रतिकलकमनीयां** प्रतिक्षणरमणीयां पुनः पुनरभिनवताबोधिनीमिति यावत् । **कान्तिम्** अस्पृष्टयौवनाम् अपरिमुक्तबालभावामेव शरीरशोभाम् **उद्भेदयन्ति** कन्दलयन्ति उपबृंहयन्तीति यावत् । उपमानेन चैतद्धृदयंगमीकरोति—**अमलिनमिति** ॥ अतिविशदमित्यर्थः । **चन्द्रं** बालेन्दुमित्यर्थात् । परिपूर्णस्य तु कलङ्कमालिन्येन वैशद्यातिशयाभावात् । प्रथमवाक्यार्थस्यात्रोपमेयता उत्तरयोस्तूपमानता । अतः कान्तेश्चन्द्रस्य च लिङ्गभेदो न विरसतामावहति । **स्वे** आत्मीयभूताः चन्द्रसमवेता इति यावत् । ननु चन्द्र एव रश्मिशब्देनापि कथ्यत इति वस्तुगतिः, प्रकृष्टप्रकाशश्चन्द्र इति वाक्ये व्यावर्त्यसद्भावादेव विशेषणोपादानमिति शास्त्रकारैरुक्तत्वात् तत्कथमात्मैवात्मनमुपबृंहयतीत्यत्राह—**यथेति** ॥ वाशब्दः पक्षान्तरे । **माकरन्दाः** मकरन्दसंबन्धिनः । अत्र स्वशब्दोऽनुषञ्जनीयः । **भूयिष्ठम्** अधिकतरम् **उत्पश्यामि** उत्प्रेक्षे । हेतुमाह—**कठोरेति** ॥ कठोरस्य तरुणस्य पारावतस्य कण्ठवन्मेचकं स्निग्धनील **वपुः** शरीरम् । **वृषस्कन्धेति** ॥ वृषस्कन्धवत् सुबन्धुरौ सुतरां बन्धुरौ सुन्दरतरावंसौ ययोः । **प्रसन्नेति**॥ प्रसन्नस्य परितुष्टस्य सिंहस्येव स्तिमितं निश्चलं **वीक्षितं** नयनविक्षेपणम् । **ध्वनिः** वचनस्वरसंयोगः । **माङ्गल्येति** ॥ मङ्गल्यमृदङ्गस्येव मार्जनावादितमृदङ्गस्येव मांसलः परिपुष्टगम्भीर इत्यर्थः । अये इत्यादरे । संभ्रमविशेषत्वात् आदरस्य । **न केवलमिति** ॥ अस्मद्वंशमधिकं संवदतीत्यस्मद्वंशसंवादिनी । अस्मद्वंशसदृशीति यावत् । सोपसर्गस्यास्य ताच्छील्यविहितणिनेरभावात्

(निपुणं निरूपयन् ।) अये न केवलमस्मद्वंशसंवादिन्याकृतिः ।

अपि जनकसुतायास्तच्च तच्चानुरूपं
स्फुटमिह शिशुयुग्मे नैपुणोन्नेयमस्ति ।
ननु पुनरिव तन्मे गोचरीभूतमक्ष्णो-
रभिनवशतपत्रश्रीमदास्यं प्रियायाः ॥ २६ ॥

शुक्लाच्छदन्तच्छविसुन्दरेयं
सैवोष्ठमुद्रा स च कर्णपाशः ।
नेत्रे पुनर्यद्यपि रक्तनीले
तथापि सौभाग्यगुणः स एव ॥ २७ ॥

बहुलमाभीक्ष्ण्य इति णिनिः । **आकृतिः** शरीरसंस्थानम् । न खल्वनयोरस्मद्वंशसादृश्यमेव ततः परमप्यस्तीत्याह—**अपीति** ॥ इह शिशुयुग्मे जनकसुतायाः अपि अनुरूपं तच्च तच्च स्फुटम् अस्ति इत्यन्वयः । **अनुरूपं** सदृशम् । **तच्च तच्चेति** ॥ यद्यन्मया निरूप्यते निरीक्ष्यते च, तच्च तच्च तत्सर्वमपि इत्यर्थः । **स्फुटं** विशदम् । न चैतन्निखिलैरप्यवगन्तुं शक्यत इत्याह—**नैपुणोन्नेयमिति** ॥ एवमनयोः शरीरे नितरामेव सीतासादृश्यमनुभूयाप्यपरितुष्यदेव स्वहृदयमनुमोदयन्नाह—**नन्विति** ॥ प्रियायाः तत् आस्यं मे अक्ष्णोः पुनरिव गोचरीभूतं ननु इति संबन्धः । **तत्** परोक्षभूतम् **आस्यं** मुखं **मे** अनुतापोपहतहृदयस्य **पुनरिव** विरहवेदनामाभिवीक्ष्येव **गोचरीभूतं** विषयीभूतम् । कीदृशमित्यत्राह—**अभिनवेति** ॥ अभिनवस्य सद्यो विकसितस्य शतपत्रस्य पद्मस्य श्रीः यस्मिन् तत् । प्रत्यभिज्ञामेव स्थिरीकरोति—**शुक्लेति** ॥ शुक्लाच्छेन धवलोज्ज्वलेन दन्तच्छविना सुन्दरा दृष्टिहारिणी **सैव** सीताया एव ओष्ठ एव ओष्ठमुद्रा मुद्राशब्दस्य स्वरूपवाचित्वात् । **स चेति** ॥ चकारोऽवधारणे । पाश इव कर्णः कर्णपाश इत्युपमितसमासः । कर्णात्परस्य पाशशब्दस्य प्रशंसावाचित्वाभावात् । न चानयोरुपमानोपमेयभावस्याप्रसिद्धेरिह तत्कल्पनमसमीचीनमिति वाच्यम् 'पाशाभे श्रवसी विलोक्य ललितं माञ्जिष्ठसृष्टोऽधरः' इति महाकविप्रयोगदर्शनात् । अतोऽत्र धर्मद्योतकयोर्लोपे समासगा लुप्तोपमैवेयम् । पाशशब्देन च गवादिबन्धनरज्ज्वा वलयाकारेण विरचितमग्रमेवोच्यते, तस्यैव कर्णोपमानत्वोपपत्तेः । संनिवेशसौष्ठवं परवशीकरणसामर्थ्यं च कर्णस्य पाशस्य च साधारणो धर्मः । पुनःशब्दो विशेषे ॥ विशेषमेवोपपादयति— **यद्यपीति** ॥ रक्ते नीले च रक्तनीले । रक्तता तावत् पुटयोः, नीलता तु कनीनिकयोः । प्रतिपादितोऽयं विशेषः पुंस्त्वादेवेत्यवगन्तव्यम् । **तथापीति** ॥ वर्णतो

(विचिन्त्य ।) तदेतत्प्राचेतसाध्युषितमरण्यं यत्र किल देवी परित्यक्ता । इयं चानयोराकृतिर्वयोऽनुभावश्च । यदपि स्वतःप्रकाशान्यस्त्राणीति तत्र विमृशामि तदपि खलु चित्रदर्शनप्रासङ्गिकं शस्त्राभ्यनुज्ञानं प्रबुद्धं स्यात् । न ह्यसांप्रदायिकान्यस्त्राणि पूर्वेषामपि शुश्रुम । अयं संप्लवमानसुखदुःखातिशयो हृदयस्य मे विस्रम्भः । यमलाविति च भूयिष्ठमात्मसंवादः । जीवद्वयापत्यचिह्नो हि भूयिष्ठं प्रतिपन्नो

---

वैधर्म्येऽपीत्यर्थः । **सौभाग्यगुणः** सौभाग्यातिशयः **स एव** सीतानेत्रयोरेव ! **विचिन्त्येति** ॥ कुमारयोः सीतापुत्रतोपपत्तिं विचार्येत्यर्थः । विचारप्रकारमेवाह—**तदिति** ॥ प्राचेतसाध्युषितं तत् अरण्यम् एतत् इति संबन्धः । **प्राचेतसाध्युषितं** प्राचेतसेन अध्युषितम् अध्यासितम् । **तत्** प्रसिद्धम् **अरण्यं** वनम् **एतत्** पुरोवर्ति । ततः प्रकृतस्य किमायातमित्यत्राह—**यत्रेति** ॥ यस्मिन् अरण्य इत्यर्थः । किलेति पारोक्ष्ये । **देवी** सीता **परित्यक्ता** लक्ष्मणेन विसृष्टा । **इयं** सीतासदृशी **आकृतिः** शरीरप्रकृतिः । **वयः** अत्र जननादारभ्यैतत्पर्यन्तो जीवनकालः । परित्यागसमयेन प्रायेण परिच्छेत्तुं शक्यत इत्यर्थः । **अनुभावश्चेति** ॥ प्रभावोऽपि इतरबालकदुर्लभ इत्यर्थः । सकलसंदेहव्युदसनसमर्थं च हेत्वन्तरमाह—**यदपीति** ॥ स्वतः उपदेशं विनैव प्रकाशः स्फुरणं येषां तानि अस्त्राणि जृम्भकादीनि । इतिर्हेतौ । एवंभूतैर्हेतुभिरित्यर्थः । **विमृशामि** सप्रणिधानं निरूपयामि । **तत्** तस्मात् । अपिखल्विति जिज्ञासायां निपातसमुदायः । **चित्रदर्शनप्रासङ्गिकशस्त्राभ्यनुज्ञानं** चित्रदर्शनप्रासंगिकं चित्रदर्शनप्रसंगादागतं• शस्त्राभ्यनुज्ञानं शस्त्राणामनुग्रहः **प्रबुद्धं** प्रकाशितम् । स्यादिति संभावनायाम् । व्यतिरेकेण चैतद्दृढीकरोति—**नहीति** ॥ **असांप्रदायिकानि** संप्रदायं विना जातानि **अस्त्राणि** आग्नेयादीनि **पूर्वेषामपि** अस्मत्कुलज्येष्ठानां दिलीपप्रभृतीनामपि । **शुश्रुमेति** ॥ अत्र तत्तत्प्रसंगेषु वसिष्ठादिकथितचिरंतनराजर्षिचरित्रश्रवणसमुन्मिषितभक्त्यतिशयवशेन चित्तव्याक्षेपसंभवात् स्वकृतेऽपि परोक्षत्वेन लिट् । **अयं** वक्ष्यमाणः । **संप्लवमानसुखदुःखातिशय इति** ॥ संप्लवमानः प्रवहमानः सुखदुःखातिशयः सुखस्य दुःखस्यातिशय इत्यर्थः । अत्यन्तस्निग्धस्य पुत्रादेर्दर्शन एव हि तात्कालिकस्य संगमसुखस्यातिक्रान्तस्य वियोगदुःखस्य च तुल्यं वृद्धिः संभवेदिति भावः । **हृदयस्य** स्मृतिकारिणश्चित्तस्य **मे** यादृशतादृशेषु अचञ्चलस्य **विस्रम्भो** विश्वासः । **यमलौ** युगजातौ । इति प्रकारे । **भूयिष्ठं** नितराम् **आत्मसंवादः** आत्मनः संशयकारिणो मनसः संवादः । पूर्वं प्रतिपन्नस्यैव पश्चाद्धेत्वन्त-

देव्या द्विविधो गर्भिणीभाव आसीत्। (सास्रम्।)

परां कोटिं स्नेहे परिचयविकासादधिगते
रहो विस्रब्धाया अपि सहजलज्जाजडदृशः।
मयैवादौ ज्ञातः करतलपरामर्शकलया
द्विधा गर्भग्रन्थिस्तदनु दिवसैः कैरपि तया ॥२८॥

(रुदित्वा।) तत्किमेतौ पृच्छामि केनचिदुपायेन।

---

रेण तथात्वप्रतिपत्तिः संवादः। यमलता कथमत्र निश्चयकारणमित्यत्राह—**जीवद्वयेति**॥ जीवद्वयापत्यस्य चिह्नं लक्षणं यस्मिन् सः। हिरवधारणे। **भूयिष्ठं** नितरां **मया** स्वरूपज्ञानसमुत्सुकेन **प्रतिपन्नो** निश्चितः। **द्विविधो** द्विप्रकारः **गर्भिणीभावो** गर्भिणीत्वम्। अतिक्रान्तरहोवृत्तान्तस्मरणादास्रम्। **परामिति**॥ देव्याः गर्भग्रन्थिः आदौ मया एव द्विधा ज्ञातः, तदनु कैरपि दिवसैः तया इत्यन्वयः। **देव्याः** सीतायाः **गर्भग्रन्थिः** गर्भस्य ग्रन्थिः शुक्रशोणितयोः कोष्ठयवाय्वग्निसंपर्कवशात् उत्पादनदिनादारभ्य क्रमेण कललादिरूपतया परिणतः कोऽपि घनीभावविशेषः। तदुक्तं श्रीमद्भागवते—'कललं त्वेकरात्रेण पञ्चरात्रेण बुद्बुदम्। दशाहेन तु कर्कन्धुः पेश्यण्डं वा ततः परम्॥' **आदौ** पूर्वं **मयैव** न तु देव्या **द्विधा** द्विप्रकारम् **ज्ञातः** सम्यगवगतः। **तदनु** पश्चात् **कैरपि** कतिपयैरेव **दिवसैः** दिनैः **तया** सीतया। स्वात्मनावगन्तुमशक्यः कथं परेण ज्ञातव्य इत्यत्राह—**करतलेति**॥ करतलस्पर्शजनितया बुद्ध्येत्यर्थः। ननु तथाविधो महिलाजनस्तादृशं करतलस्पर्शं कथंचिदपि न सहते इत्यत्राह—**रहोविस्रब्धाया इति**॥ तादृशविस्रम्भापादनं तु ममोपलालनचातुर्यवशादेवेत्याह—**अपि सहजलज्जाजडदृश इति**॥ ननु दुष्करं तथाऽपि तत्रानुकूल्यापादनमित्यत्राह—**परामिति**॥ उपरितनीमित्यर्थः। **कोटिं** सीमाम् रागात्मकतामित्यर्थः। **स्नेहे** अङ्कुरादिक्रमेण प्रसूनावस्थायां स्थिते। **परिचयविकासात्** परिचयप्रकर्षात्। अथवा परिचयेन विश्वासेन कृतेन विकासेनेत्यर्थः। अत्र विकासशब्देन प्रेमप्रकर्षो लक्ष्यते, एकार्थसमवायः संबन्धः, कुसुमसादृश्यप्रतीतिः फलम्। **अधिगते** प्राप्ते। तदुक्तम्—'अङ्कुरपल्लवकलिकाप्रसूनफलभोगभागयं क्रमतः। प्रेमा मानः प्रणयः स्नेहो रागोऽनुराग इति॥' इति। तथाविधविस्रम्भविवशायाः परित्यजनवृत्तस्मरणाद्रोदनम्। **तत्** तस्मात्। किंशब्दो जिज्ञासायाम्। **एतौ** कुशलवौ **पृच्छामि** विनिश्चेतुमिति शेषः। **केनचिदुपायेनेति**॥ ईप्सितप्रतिपादकेन प्रकारान्त-

**लवः**—तात, किमेतत् ।

**बाष्पवर्षेण नीतं वो जगन्मङ्गलमाननम् ।**
**अवश्यायावसिक्तस्य पुण्डरीकस्य चारुताम् ॥ २९ ॥**

**कुशः**—अयि वत्स,

**विना सीतादेव्या किमिव हि न दुःखं रघुपतेः**
**प्रियानाशे कृत्स्नं किल जगदरण्यं हि भवति ।**
**स च स्नेहस्तावानयमपि वियोगो निरवधिः**
**किमेवं त्वं पृच्छस्यनधिगतरामायण इव ॥ ३० ॥**

**रामः**—(स्वगतम् ।) अये, तटस्थ आलापः । कृतं प्रत्ययेन । दग्धहृदय, कोऽयमाकस्मिकस्ते पारिप्लवविकारः । एवं विनिर्भिन्नहृद-

---

रेणेत्यर्थः । मातृपित्राद्यनुयोगेनेति यावत् । एवं रुदितोपहतं रघुनाथस्य वदनमभिवीक्ष्य लवः साशङ्कमाह—**तातेति** ॥ तात वः जगन्मङ्गलम् एतत् आननं बाष्पवर्षेण अवश्यायावसिक्तस्य पुण्डरीकस्य चारुतां किं नीतमित्यन्वयः । **वः** जगदानन्दकन्दलानां **जगन्मङ्गलं** त्रैलोक्यरक्षानिदानम् **एतत्** अत्यन्तमनोहरम् **आननं** मुखं **बाष्पवर्षेण** नयनजलावसेकेन **अवश्यायावसिक्तस्य** अवश्यायेन हिमेन अवसिक्तस्य परिक्लिष्टस्येत्यर्थः । **पुण्डरीकस्य** पद्मस्य **चारुतां** सौन्दर्यम् परिम्लानशोभामिति यावत् ॥ **किं** किमर्थम् **नीतं** प्रापितम् । लववचनं कुश आक्षिपति—**अयीति** ॥ अयीत्यनुनये । रघुपतेः सीतादेव्या विना किमिव दुःखं न हीत्यन्वयः । सीतावियोगात्सकलमपि वस्तु दुःखकरमेवेत्यर्थः । पचाद्यच् । सामान्येन चैतत्स्फुटीकरोति—**प्रियानाश इति** ॥ किलेति संभावनायाम् । अरण्यशब्दोऽत्र विरतिहेतुतां प्रतिपादयति । **स च** सीतादेवीविषयतया प्रसिद्धः **स्नेहः** परिचयक्रमेण प्ररूढा रतिः **तावान्** वचनागोचरः अपरिच्छिन्न इति यावत् । **अयम्** अनुभूयमानः **वियोगो** विरहः **निरवधिः** अपर्यन्तः । किंशब्दः क्षेपे । **त्वं** वाल्मीकिवचनावगतनिखिलतत्त्वः **अनधिगतरामायण इव** अनधिगतवाल्मीकिप्रबन्ध इव । अये इति विषादानुभावः । **तटस्थः** बाह्यः अस्मन्मनोरथप्रतिकूल इत्यर्थः । **आलापः** विना सीतादेव्येत्यादिरूपः । **कृतं प्रत्ययेनेति** ॥ प्रत्ययेन यत् कर्तव्यं तत् कृतमेवेत्यर्थः । प्रत्ययो विश्वासः । एतौ सीतापुत्रकौ नहीति यावत् । **दग्ध** भाग्यविहीन **हृदय** मिथ्याविकल्पतरल । किंशब्दः क्षेपे । **अयम्** इदानींतनः

यावेगः शिशुजनेनाप्यनुकम्पितोऽस्मि । भवतु तावदनुसरामि । (प्रकाशम् ।) वत्सौ, रामायणं रामायणमिति श्रूयते भगवतो वाल्मीकेः सरस्वतीनिष्यन्दः प्रशस्तिरादित्यवंशस्य । तत्र कौतूहलेन यत्किंचिच्छ्रोतुमिच्छामि ।

कुशः—स कृत्स्न एव संदर्भोऽस्माकमावृत्तः । स्मृतिप्रत्युपस्थितौ तावदिमौ बालचरितस्यान्यतमे सर्गे द्वौ श्लोकौ ।

रामः—उदीरयतं वत्सौ ।

कुशः—

प्रकृत्यैव प्रिया सीता रामस्यासीन्महात्मनः ।
गुणै रूपगुणैश्चापि प्रीतिर्भूयोऽपि वर्धिता ॥ ३१ ॥

---

आकस्मिकः अकस्मादुद्भूतः ते मनोरथलाभपर्युत्सुकस्य पारिप्लवविकारः उन्मादाविकारः । एवं विनिर्भिन्नहृदयावेगः एवं रुदितेन विनिर्भिन्नः प्रकाशितो हृदयावेगो हृदयसंतापो येन सः । भवत्विस्यान्तरनिर्णये । तावच्छब्दोऽवधारणे । अनुसरामि तत्तदुचितव्यवहारेण प्रीणयामि । रामायणमिति ॥ बहुवारं बहुभ्यः श्रवणाद्द्विर्वचनम् । भगवतः साक्षात्कृतत्रिभुवनवृत्तान्तस्य । अनेन सत्यवचनता प्रकाशिता । वाल्मीकेः उत्कृष्टतपसः सरस्वतीनिष्यन्दः सरस्वत्या निष्यन्दः प्रवाहः । श्लिष्टपरंपरितं चैतद्रूपकम् । प्रशस्तिः यशः आदित्यवंशस्य सूर्यवंशस्य । तत्र सरस्वतीनिष्यन्दरूपे प्रबन्धे । यत्किंचिदित्यनेन कतिपये श्लोका विवक्षिताः । सः युष्माभिरुक्तः । कृत्स्न एवेत्यनेन सकलमपि श्रावयामीति प्रकाश्यते । संदर्भ इत्यनेन श्रवणहारिता प्रकाश्यते । अस्माकमिति तृतीयार्थे षष्ठी । आवृत्तः बहुवारं पठितः । स्मृतिप्रत्युपस्थितौ संस्कारजनितस्य प्रत्ययस्य विषयतां प्राप्तौ । बालचरितस्य षट्सु काण्डेषु बाल्यवृत्तप्रतिपादकस्य काण्डस्येत्यर्थः । अन्यतमे कस्मिन्नपि सर्गे काव्यलक्षणपरिच्छिन्ने प्रबन्धावयवे । द्वौ श्लोकावित्यनेन कृत्स्नश्रवणरुच्युत्पादनार्थं प्रसंगात्स्फुरितं श्लोकद्वितयमात्रमिदानीं पठिष्यामि इति व्यज्यते । उदीरयतं पठनं कुरुतम् । प्रकृत्येति ॥ स्वत एवेत्यर्थः । प्रिया अभीष्टा । गुणैः सौशील्यादिभिः रूपगुणैः सौन्दर्यसौकुमार्यादिभिः । भूयोऽपीत्यनेन परिचयवशता कथिता । वर्धिता ननु सीमामधिरूढेत्यर्थः । तथैवेति ॥ प्रतिपादितप्रकारेणैवेत्यर्थः । प्राणे-

तथैव रामः सीतायाः प्राणेभ्योऽपि प्रियोऽभवत् ।
हृदयं त्वेव जानाति प्रीतियोगं परस्परम् ॥ ३२ ॥

रामः—कष्टमतिदारुणो हृदयमर्मोद्घातः । हा देवि, एवं किलैतदासीत् । अहो निरन्वयविपर्यासवृत्तिविप्रलम्भाः स्तुतिपर्यवसायिनस्तावकाः संसारवृत्तान्ताः ।

क्व तावानानन्दो निरतिशयविस्रम्भबहलः
क्व वान्योन्यप्रेम क्व च नु गहनाः कौतुकरसाः ।

---

भ्योऽपीति विभक्ते पञ्चमी । जीवितादपीत्यर्थः । का वा तत्र प्रमातेत्यत्राह—**हृदयमिति** ॥ तुशब्देनान्ये प्रमातारो व्यावर्त्यन्ते । एवकारो भिन्नक्रमः । जानात्येवेति योजना । **प्रीतियोगं** प्रीतिप्रकर्षम् । अत्र सीताविरहवैवश्यानुभावभूतस्य रुदितस्य रघुनाथे दर्शनादेव कुशस्य तदानीं तादृशप्रणयप्रतिपादकश्लोकद्वयस्मरणमित्यवगन्तव्यम् । कष्टमिति कृच्छ्रे असह्यतायां वा । **अतिदारुणः** अतिक्रूरः **हृदयमर्मोद्घातः** हृदय एव मर्मण्युद्घातोऽभिहननम् । वेदनातिशयकारित्वसाधर्म्याच्छ्लोकद्वयपठनेऽध्यवसायः । इति विषादानुभावः । **देवि** प्रशंसनीयशीले **एवं** वाल्मीकिकथितप्रकारेणैव । किलेति संभावनायाम् । **एतत्** परस्परप्रीतिजननं, गुणैः पुनस्तद्वर्धनं, तस्य च केवलहृदयवेदनीयत्वं चेत्यर्थः । एवं श्लोकद्वयपठनादुद्बुद्धानामात्मना पूर्वमनुभूतानां सीताया निरतिशयप्रीतिप्रणयवशोन्मिषितानां तत्तादृशविस्रम्भविलसितानां मुहुर्मुहुरनुसंधानात्तत्क्षणप्रवृत्तदुस्सहतरवेदनाविवशहृदयः क्षणमात्रमपि स्वोच्छ्वसितमसहमानः सविषादमाह—**अहो इति** ॥ खेदानुभावोऽयम् । **निरन्वयेति** ॥ निरन्वया अन्वयरहिता असंभावनीया विपर्यासवृत्तिः वियोगप्रतियोगिनः संयोगस्य वृत्तिर्वर्तनं यस्य तादृशो विप्रलम्भो येषां ते । **स्तुतिपर्यवसायिनः** स्तुतौ पर्यवसायः परिसमाप्तिः येषां ते । स्तोतव्यदशां प्राप्ता इत्यर्थः । विनष्टा इति यावत् । **तावकाः** त्वदीयाः **संसारवृत्तान्ताः** संसारवृत्तानि तत्तदुपभोगा इत्यर्थः । दर्शनस्पर्शनालापादीनि इति यावत् । प्रतिनिवर्तनानर्हतामाह—**क्वेति** ॥ क्वेत्यसंभावनायाम् । **तावान्** अपरिच्छिन्नः **आनन्दः** परस्परोपचरणजनितं सुखम् । अपरिच्छिन्नतामेवाह—**निरतिशयविस्रम्भबहल इति** ॥ निरतिशयेन परिपूर्णेन विस्रम्भेण हेतुना बहलः उपचितः । **अन्योन्यप्रेम** इतरेतरतुल्यतया प्रवृत्ता संदर्शनादिजनिता रतिः । नुशब्दो वितर्के । **गहना** वागिन्द्रियाविषयाः । **कौतुकरसाः** कौतुकापादिता रसाः **सुखे** सुखानुभवे **दुःखे** दुःखानुभवे ।

सुखे वा दुःखे वा क नु खलु तदैक्यं हृदययो-
स्तथाप्येष प्राणः स्फुरति न तु पापो विरमति ॥३३॥

भोः कष्टम् ।

प्रियागुणसहस्राणां क्रमोन्मीलनतत्परः ।
य एव दुःसहः कालस्तमेव स्मारिता वयम् ॥ ३४ ॥

---

वाशब्दौ समुच्चये । क नु खल्विति भूयःप्राप्त्यसंभावनाऽनुप्राणिते वितर्के निपातसमुदायः । तदित्यनुभूतपरामर्शः । **ऐक्यं** प्रतीतिसाम्यम्, एकस्य सुखानुभवे दुःखानुभवे वाऽन्यस्यापि तथा भाव इत्यर्थः । **हृदययोः** भिन्नरुचित्वात् असंभावनीयैक्ययोः । **तथापि** प्रतिपादितानामेषामभावेऽपि । एष इत्यभिनीयोक्तिः । **प्राणः** उच्छ्वसितवायुः **स्फुरति** पूर्ववदेवाऽस्मिञ्छरीरे विचेष्टते **पापः** चिरपरिचितानां निजसंबन्धिनां विनाशेऽपि तथैवावस्थानादतिनिकृष्ट इत्यर्थः । **न विरमति** श्वासोच्छ्वासप्रयत्नकारी जायते । भो इति खेदे । कष्टमिति कृच्छ्रे । कृच्छ्रमेव प्रतिपादयति—**प्रियेति** ॥ प्रियागुणसहस्राणामित्यनेन धात्रेयिकाद्याभिरादिमे वयसि परिशिक्षितानां विविधशिल्पविभ्रमकलाचातुर्यप्रभृतीनां गुणानां गणनाराहित्यं विवक्षितम् । तथाच वात्स्यायनः—'आचार्यास्तु कन्यकानां, प्रवृत्तपुरुषसंप्रयोगा सहसंवर्धितधात्रेयिका, तथाभूता निरत्ययसंभाषणा सखी, सवयाश्च मातृष्वसा, विस्रब्धा तत्स्थानीया विदितबहुवृत्तान्ता वृद्धदासी, पूर्वसंसृष्टा भिक्षुकी, स्वसा च, विश्वाससंप्रयोगात्' इति । **क्रमोन्मीलनतत्परः** क्रमोन्मीलने क्रमेणोन्मीलने शैशवेऽभ्यस्तानामेव पुनः प्रतिक्षणमन्योन्यातिशयवत्तया प्रकटने तत्परः तदेकपरायणः आत्यन्तिको हेतुरित्यर्थः । यथाह राजशेखरः—'उत्तालालकभञ्जनानि कबरीपाशेषु शिक्षारसः दन्तानां परिकर्म नीविनहनं भ्रूलास्ययोग्याग्रहः । तिर्यग्लोचनवल्गितानि वचसां शोकार्तिसंक्रान्तयः स्त्रीणां म्लायति शैशवे प्रतिकलं कोऽप्येष केलीक्रमः ॥' इति । यच्छब्दः प्रतिपादिताकारवैशिष्ट्यपरामर्शकः । अवधारणेन धात्रेयिकाद्या आचार्या व्यावर्त्यन्ते । **दुःसहः** तात्कालिकनिखिलसंस्कारोद्बोधनादिदानीं क्षतक्षारकल्पः **कालः** सीताविवाहानन्तरभवः तस्यैवेदानीं बालचरितोपवर्णनश्लोकद्वयपठनेन स्मर्तव्यत्वात् **तमेव** तथाविधाकारमेव **स्मारिताः** उद्बुद्धतद्विषयसंस्काराः कृताः अनेन कुमारेणेत्यर्थात् । ननु बाह्याः सौन्दर्याद्यनुप्राणिताः शृङ्गारमया आकारचेष्टाविशेषा आभ्यन्तराः सौशील्याद्युपस्कृतास्तत्तत्केलीषु प्रतिक्षणहृद्यताविधायिनश्चित्तोल्लासभेदाश्च स्त्रीणां प्रधानभूता गुणाः । तदुत्पादनं च यौवनमेव नियतं करोति । यथोक्तम्—'उपदिशति कामि-

यदा किंचित्किंचित्कृतपदमहोभिः कतिपयै-
र्यदेतद्विस्तारिस्तनमुकुलमासीन्मृगदृशः ।
वयः स्नेहाकूतव्यतिकरघनो यत्र मदनः
प्रगल्भव्यापारः स्फुरति हृदि मुग्धश्च वपुषि ॥ ३५ ॥

**लवः**—अयं तु चित्रकूटमन्दाकिनीवनविहारे सीतादेवीमुद्दिश्य रघुपतेः श्लोकः ।

---

नीनां यौवनमद एव ललितानि' इति । तत्कथं कालस्य गुणगणोन्मीलनतत्परत्वं कथितम् । सत्यम् । सीतानवयौवनस्य तात्कालिकत्वात्तदुपाध्यवच्छिन्नो विवाहानन्तरभवः काल एवात्र गुणगणोन्मीलनहेतुर्विवक्षित इत्यभिप्रायेणाह—**यदेति** ॥ मृगदृशः विस्तारिस्तनमुकुलं वयः यदेतत् तत् यदा कतिपयैः अहोभिः किंचित् किंचित् कृतपदमासीदित्यन्वयः । मृगदृश इत्यनेन सर्वे भावाश्चक्षुषि व्यज्यन्त इति न्यायेन यौवनप्रवेशक्रमजन्यतया प्रतिक्षणमुत्कृष्यमाणानां मनोविकाराणां तत्तदवसरे सम्यगभिव्यक्ततयाऽनुभूतत्वं कथितम् । **विस्तारिस्तनमुकुलं** विस्तारि विस्तारवत्, स्तनमुकुलं मुकुलसदृशं स्तनं यस्मिन् तत् **वयः** यौवनाख्यम् । यच्छब्दानिकटवर्ती पुनरेतच्छब्द उद्देश्यस्य वयसः इतरमहिलाजनव्यतिरिक्ततां परामृशंस्तस्योत्कर्षमेव पुष्णाति । नतु विधेयकोटिमवगाहते । अतो यच्छब्दबलादेवात्र तच्छब्दः सिद्धः । **यदा** यस्मिन् काले **कतिपयैः** कैश्चिदेव **अहोभिः** दिवसैः **किंचित् किंचित्** प्रतिक्षणजनिताभिनवतापत्तिक्रमेण **कृतपदं** कृतं निहितं पदं येन तत् । तथाच श्रीहर्षः—'संप्रति प्रतिमुहूर्तमपूर्वा कापि यौवनजवेन भवन्ती' इति । अतिविदग्धैरेवेदृशे वयसि सम्यगीप्सितविधानेन महिला अनुरञ्जयितुं शक्या इत्याह—**यत्रेति** ॥ यत्र स्फुरति मदनः हृदि प्रगल्भव्यापारः वपुषि मुग्धश्च इति संबन्धः । **यत्र** यस्मिन् वयसि **स्फुरति** उन्मिषति सति **मदनः** कामः **हृदि** अन्तः **प्रगल्भव्यापारः** अकुण्ठवृत्तिः । औत्सुक्यचिन्तास्मृतिविषादमोहादिप्रवर्तक इत्यर्थः । **वपुषि** बहिः **मुग्धः** मसृणवृत्तिः लज्जानिरोधादपरिस्फुटप्रसरण इति यावत् । जायते इति शेषः । अन्तः पुनरकुण्ठचेष्टितत्वे कारणमाह—**स्नेहेति** ॥ कुसुमावस्थास्थानीयाया रतेराकूतानां तत्तन्मनोरथानां च व्यतिकरेण मेलनेन घनः समुपचितः । एवंविधं वयः यदा किंचित्किंचित् कृतपदमासीत् तमेव कालं वयं स्मारिता इति पूर्वेण संबन्धः । **अयं** वक्ष्यमाणः । तुशब्दो व्यावृत्तिं द्योतयति । न बालचरित इत्यर्थः । कुत्र तर्हीत्यत आह—**चित्रकूटमन्दाकिनीवनविहार इति** ॥ चित्रकूटे यन्मन्दाकिनीवनं मन्दा-

त्वदर्थमिव विन्यस्तः शिलापट्टोऽयमग्रतः ।
यस्यायमभितः पुष्पैः प्रवृष्ट इव केसरः ॥ ३६ ॥

रामः—(सलज्जास्मितस्नेहकरुणम् ।) अति हि नाम मुग्धः शिशुजनः विशेषतस्त्वरण्यचरः । हा देवि, स्मरसि वा तस्य तत्समयविस्रम्भातिप्रसङ्गस्य । भोः कष्टम् ।

श्रमाम्बुशिशिरीभवत्प्रसृतमन्दमन्दाकिनी-
मरुत्तरलितालकाकुलललाटचन्द्रद्युति ।
अकुङ्कुमकलङ्कितोज्ज्वलकपोलमुत्प्रेक्ष्यते
निराभरणसुन्दरश्रवणपाशमुग्धं मुखम् ॥ ३७ ॥

---

-किनीतटवनं तत्र प्रवृत्ते विहार इत्यर्थः । **सीतादेवीमुद्दिश्य** सीतादेवीं प्रति । तमेव पठति—**त्वदर्थमिति** ॥ इवशब्दः संभावनायाम् । **विन्यस्तो** निवेशितः । **शिलाप** : प्रशस्तशिला । अयमित्यभिनीयोक्तिः । **अग्रतः** पुरोभागे । संभावनानिमित्तमाह—**यस्येति** ॥ शिलापट्टस्येत्यर्थः । **अयं** परिसरवर्ती **अभितः** समन्तात् **प्रवृष्ट इव** प्रकर्षेण निबिडतया वर्षं कृतवानिव । कर्तरि क्तः । रघुनाथहृदयवैवश्यावगमनमेवास्यापि श्लोकस्य स्फुरणे निमित्तम् । तत्रत्यं रहोवृत्तं वाल्मीकिनाऽवगतमिति लज्जा । लवस्य तत्परिज्ञानाभावात् स्मितम् । मौग्ध्यातिशयदर्शनाच्च श्रीरामभद्रस्य स्नेहप्रकर्षोत्पत्तिः । तथा विस्रब्धायाश्च परित्यजनस्मरणादास्रं करुणश्च । **अति** अतिशयेन । हिरवधारणे । नाम प्रसिद्धौ । **मुग्धो** मूढः । तत्रापि प्रकर्षमाह—**विशेषत इति** ॥ अपरिचितलौकिकव्यवहार इत्यर्थः । एवं वाल्मीकिवचनानुस्मृतमन्दाकिनीवनविहरणवृत्तः सावेगमाह—**हा देवीति** ॥ **स्मरसि वा** चिन्तयसि वा । वाशब्दो विकल्पे । ततः किमित्यत्राह—**तत्समयविस्रम्भातिप्रसंगस्येति** ॥ तत्समये मन्दाकिनीवनविहरणसमये यो विस्रम्भातिप्रसंगो विस्रम्भस्यातिप्रसंगः तस्य मनोज्ञतरशिलातलसंदर्शनप्रवृत्तस्य रहोवृत्तस्येत्यर्थः । 'अधीगर्थदयेशां कर्मणि' इति षष्ठी । अथ तथाविधरहोवृत्तनिरन्तरस्मरणबलानीतसीतावदनेन्दुसाक्षात्कारविवशहृदय आह—**भोः कष्टमिति** ॥ विनष्टायाः स्मरणस्य वेदनातिशयकारित्वात् कष्टता । मुखमुत्प्रेक्ष्यते भोः कष्टमिति संबन्धः । **उत्प्रेक्ष्यते** मनसि सम्यगवलोक्यते । कीदृशं मुखमित्यत्राह—**श्रमाम्बिवति** ॥ श्रमाम्बुभिः स्वेदबिन्दुभिः शिशिरं जायमानमित्यर्थः । कामोष्मणा पूर्वमशिशिरमपि यथारुचि क्रीडालाभपरितोषात्परिश्रमवशादुन्मिषितैः स्वेदबिन्दुभिश्च पुनः शिशिरं जायमानमिति चे-

(स्तम्भित इव स्थित्वा । सकरुणम् ।) अहो नु खलु भोः,

चिरं ध्यात्वा ध्यात्वा निहित इव निर्माय पुरतः
प्रवासे चाश्वासं न खलु न करोति प्रियजनः ।
जगज्जीर्णारण्यं भवति च कलत्रव्युपरमे
कुकूलानां राशौ तदनु हृदयं पच्यत इव ॥ ३८ ॥

(नेपथ्ये ।)

वसिष्ठो वाल्मीकिर्दशरथमहिष्योऽथ जनकः
सहैवारुन्धत्या शिशुकलहमाकर्ण्य सभयाः ।

---

रर्थ ऊहनीयः । पुनः कीदृशमित्यत्राह—**प्रसृतेति** ॥ प्रसृतेन आगच्छता मन्देन मन्दाकिनीमरुता तरलितैः विमुक्तपूर्वसन्निवेशैः अलकैः आकुला कलुषा ललाटचन्द्रद्युतिर्यस्मिन् तत् । वनवासवेलायामेव सीतावदनस्य शोभातिशय इत्याह—**अकुङ्कुमकलङ्कितोज्ज्वलकपोलमिति, निराभरणसुन्दरश्रवणपाशमुग्धमिति च** ॥ संतापातिरेकेण स्तम्भितत्वम् । सर्वप्रकारेणाप्यवशतया करुणम् । विरहिसमालम्बनभूतस्य संकल्पविनोदस्याप्यभावमाह—**अहो नु खल्विति** ॥ दैवविलसितचिन्ताजनिते विस्मये निपातसमुदायोऽयम् । भो इति खेदे । **चिरमिति** ॥ प्रियजनः प्रवासेऽपि आश्वासं न न खलु करोति इत्यन्वयः । **प्रियजनः** इष्टजनः **प्रवासेऽपि** वियोगेऽपि **आश्वासं** कृतार्थताम् । न नेत्यस्य निषेधनिषेधनाद्विधिरेवार्थः । खल्वितिवाक्यालंकारे । आश्वासं करोत्येवेत्यर्थः । वियोगे कथमाश्वासकरणमित्यत्राह—**चिरं ध्यात्वा ध्यात्वा निर्माय पुरतो निहित इवेति** ॥ संकल्पसंपादितप्रियतमैव निखिलानपि विरहिजनानाश्वासयतीत्यर्थः । अस्माकं पुनस्तदपि दुर्लभमित्याह—**जगदिति** ॥ कलत्रव्युपरमे जगत् जीर्णारण्यं भवति, तदनु हृदयं कुकूलानां राशौ पच्यत इव इत्यन्वयः । **कलत्रव्युपरमे** कलत्रविनाशे **जगत्** निखिलो जीवलोकः । तुशब्दो व्यतिरेकं द्योतयति । **कुकूलः** करीषाग्निः । न केवलं विनाशानुसंधानात् प्रियतमा संकल्पेन आयाति, प्रत्युत हृदयं प्रदहेदपीत्यर्थः । अथ चतुर्थेऽङ्के ज्ञातव्यमेतदवसरे भवद्भिरिति गृष्टिकथितं वाल्मीकिवचनं श्रुत्वा 'भगवत्यरुन्धति, सखि कौसल्ये, आर्य गृष्टे, तमेव भगवन्तं प्राचेतसं पश्याम' इति जनकवचनेन सूचितं वसिष्ठादीनां वाल्मीकिदर्शनं संघट्टयति—**नेपथ्य इत्यादिना** ॥ वसिष्ठः वाल्मीकिः अथ दशरथमहिष्यः जनकश्च शिशुकलहम् आकर्ण्य सभयाः आगच्छन्तीत्यन्वयः । उद्देशसामर्थ्यात् समुच्चयः । अथशब्दो वसिष्ठवाल्मीक्योरितरेषां च विशेषं

जराग्रस्तैर्गात्रैरथ खलु विदूराश्रमतया
चिरेणागच्छन्ति त्वरितमनसो विश्लथजटाः ॥३९॥

रामः—कथं भगवत्यरुन्धती वसिष्ठोऽम्बाश्च जनकश्चात्रैव । कथं खल्वेते द्रष्टव्याः । (सकरुणं विलोक्य ।) तातजनकोऽप्यत्रैवायात इति वज्रेणेव ताडितोऽस्मि मन्दभाग्यः ।

संबन्धस्पृहणीयताप्रमुदितैर्ज्येष्ठैर्वसिष्ठादिभि-
र्दृष्ट्वापत्यविवाहमङ्गलमहो नस्तातयोः संगमम् ।
पश्यन्नीदृशमीदृशः पितृसखं वृत्ते महावैशसे
दीर्ये किं न सहस्रधाहमथवा रामेण किं दुष्करम् ॥४०॥

---

द्योतयति । साक्षात्कृतनिखिलतत्त्वयोस्तयोर्भयावकाशो नास्तीति भावः । सहैवेत्यनेनारुन्धत्या अपि भयराहित्यं सूचितम् । **जराग्रस्तैरिति** ॥ स्वायत्तताविरहितैरित्यर्थः । उपलक्षणे तृतीया । विदूरे आश्रमाः येषां ते विदूराश्रमाः । तद्भावो विदूराश्रमता । **त्वरितमनस इति** ॥ नतु त्वरितगतय इत्यर्थः । विश्लथजटा इति संभ्रमानुभावः । कथमित्यविचारितघटनाजनिते संभ्रमे । कथं नु खल्विति वितर्कानुप्राणिते क्षेपे । **एते** वसिष्ठादयः **द्रष्टव्याः** द्रष्टुं शक्याः । तातजनकोऽपीत्यत्रापिशब्दस्तद्दर्शनस्य वेदनातिशयदायित्वमवगमयति । अत्रैवेत्यवधारणेन दैववैचित्र्यस्य दुरधिगमता प्रकाश्यते । **मन्दभाग्यः** क्षीणभाग्यः । उक्तमर्थमुपपादयति—**संबन्धेति** ॥ अस्माकं तातयोः च वसिष्ठादिभिः संगमं दृष्ट्वा महावैशसे वृत्ते ईदृशं पितृसखं पश्यन् ईदृशः अहं सहस्रधा दीर्ये न किम् अहो इत्यन्वयः । **तातयोः** मम सीतायाश्च पित्रोः । वसिष्ठादिभिरित्यत्रादिशब्देन अरुन्धती मातरश्च विवक्षिताः । **संगमम्** एतेषां सर्वेषामपीतरेतरपरिमिलनं **दृष्ट्वा** स्वयंवरसमये मिथिलायां पूर्वमनुभूय **महावैशसे** अस्मत्पितुः सीतायाश्च विनाशे **वृत्ते** कालवैपरीत्यादुपजाते **ईदृशं** सख्युः सुतायाश्च विनाशेन परिदूनं **पितृसखम्** अस्मत्पितुर्विश्वासपात्रं **पश्यन्** अवलोकयन् **ईदृशः** अवशकृतदयितापरित्यागः । सहस्रधेत्यनेन वेदनातिरेकः कथितः । दीर्य इति कर्मकर्तरि यक् । अहो इति खेदे । कीदृशैर्वसिष्ठादिभिरित्यत्राह—**संबन्धस्पृहणीयताप्रमुदितैरिति** ॥ संबन्धस्य यौनसंबन्धस्य स्पृहणीयतया प्रमुदितैः संतुष्टैरित्यर्थः । अनेन बान्धवाः कुलमिच्छन्तीत्याद्युक्तमनुस्मारयति । **ज्येष्ठैः** उत्कृष्टैः । अनेन प्रमोदयोग्यता कथिता । कीदृशं संगममित्यत्राह—**अपत्यविवाहमङ्गलमिति** ॥ अपत्यानां तनयानां

(नेपथ्ये ।)

भो भोः, कष्टम् ।

अनुभावमात्रसमवस्थितश्रियं
सहसैव वीक्ष्य रघुनाथमीदृशम् ।
प्रथमप्रबुद्धजनकप्रबोधिता
विधुराः प्रमोहमुपयान्ति मातरः ॥ ४१ ॥

रामः—

जनकानां रघूणां च यत्कृत्स्नं गोत्रमङ्गलम् ।
तत्राप्यकरुणे पापे वृथा वः करुणा मयि ॥ ४२ ॥

यावत्संभावयामि । (इत्युत्तिष्ठति ।)

कुशलवौ—इत इतस्तातः ।

(सकरुणाकुलं परिक्रम्य निष्क्रान्ताः सर्वे ।)

इति षष्ठोऽङ्कः ।

---

विवाहमङ्गलं यस्मिन् तम् । अथवेति पक्षव्यावृत्तौ । अत्र रामेणेति वनवासादिदुःखसहिष्णुरूपेऽर्थेऽभिसंक्रामति । **किं दुष्करमिति** ॥ कठिनतरहृदयत्वात् मम तु सर्वमेव सुकरमेवेति भावः । अथ रामसमीपमागतानां कौसल्यादीनां वृत्तं प्रतिपादयति—**नैपथ्य इत्यादिना** ॥ **अनुभावमात्रसमवस्थितश्रियमिति** ॥ अनुभावेनैव केवलं समवस्थिता अनपगता श्रीः शरीरशोभा यस्मिन् तम् । **प्रथमप्रबुद्धजनकप्रबोधिता इति** ॥ प्रथमं पूर्वं प्रबुद्धेन ज्ञातेन जनकेन प्रबोधिताः प्रकर्षेण बोधं प्रापिताः **विधुरा** विवशाः **प्रमोहं** मूर्च्छाम् **उपयान्ति** प्राप्नुवन्ति **मातरः** कौसल्याद्याः । अथ मातृदर्शनविवृद्धहृदयावेगपरवश आह—**जनकानामिति** ॥ **गोत्रमङ्गलं** उभयकुलाभ्युदयकारणं **तत्रापि** तस्मिन्नपि **अकरुणे** निर्दये अत एव **पापे** । **वृथेति** विफलेत्यर्थः । **मयि** एवंभूते । **संभावयामि** पादवन्दनाद्युचितोपचारं करोमि । **इत्युत्तिष्ठतीति** ॥ इत्युक्त्वोत्तिष्ठतीत्यर्थः । **इत इत इति** ॥ आगच्छत्विति शेषः । **सकरुणाकुलमिति** परिक्रमणाक्रियाविशेषणम् ॥

निरन्तरप्रौढरसप्ररोहो विभावचातुर्यविभागनिष्ठः ।
अङ्कः सुधाहृद्यपदप्रबन्धो व्याकारि षष्ठः सुतरां गरिष्ठः ॥

॥ इति भावार्थदीपिकाख्यायाम् उत्तररामचरितव्याख्यायां षष्ठोऽङ्कः ॥

# सप्तमोऽङ्कः ।

(ततः प्रविशति लक्ष्मणः ।)

**लक्ष्मणः**—भोः, किं नु खलु भगवता वाल्मीकिना सब्रह्मक्षत्रपौरजानपदाः प्रजाः सहास्माभिराहूय कृत्स्न एव मर्त्यामर्त्यदेवासुरनरनारीतिर्यङ्निकायः सान्तराभवचरस्थावरो भूतग्रामः स्वप्रभावेन संनिधापितः । आदिष्टश्चाहमार्येण—'वत्स लक्ष्मण, भगवता

---

सप्तमोऽङ्कः ।

अथ निखिलवस्तूनामुपसंहृतिरूपं निर्वहणसंधिमुपक्रममाणो महाकविरयम् 'अपश्चिमस्ते रामशिरसा पादपङ्कजस्पर्शः' इत्यादिमाङ्कावसानोपाक्षिप्तस्य जानकीलाभस्योपपत्तये तद्धेतुभूतदुर्यशःपरिहरणं नाट्यप्रयोगदर्शनद्वारा विधातुं रसानुरोधादङ्कमेवारभमाणः समनन्तरातीताङ्कावसाने 'शिशुकलहमाकर्ण्य सभया' इत्यत्र राजकुमारवाचकेन शिशुशब्देनैव सूचितं लक्ष्मणप्रवेशं सूचयति—**ततः प्रविशतीति** ॥ भो इति विस्मये । किं नु खल्विति वितर्के । स्वाच्छन्द्यद्योतकेन भगवच्छब्देन चिकीर्षितस्येतरजनैरपरिज्ञेयता कथिता । वाल्मीकिनेत्यनेन तपस्सिद्धिरुक्ता। सब्रह्मक्षत्राः पौरजानपदाः सब्रह्मक्षत्रपौरजानपदाः । चातुर्वर्ण्यजनयुक्ता इतरे पुरवासिनो विषयवासिनश्चेत्यर्थः । प्रजाशब्देन मूर्खप्रायतया तेषामानयनप्रयोजनानवधारणं सूचितम् । **अस्माभिः सहेति** ॥ कीदृशं वा फलं भगवता निरूपितमिति न जानीम इति भावः । कृत्स्न एवेत्यनेन त्रैलोक्यान्तर्गतं भूतजातं विवक्षितम् । **मर्त्यामर्त्येति** ॥ मर्त्यामर्त्यदेवासुरो नरनारीतिर्यङ्निकायः सान्तराभवचरस्थावरश्च भूतग्रामो यः स तथोक्तः । मर्त्यामर्त्यतया द्विविधा हि देवा असुराश्च । तत्र तत्र स्वस्वकर्मफलमनुभोक्तुं देवत्वमसुरत्वं वा गता मर्त्याः । अन्ये त्वमर्त्याः । तादृशा देवा असुराश्च यस्मिन् सः । नराणां नारीणां तिरश्चां च निकायो यस्मिन् सः । अन्तराभवैः द्यावापृथिव्योरन्तरालदेशवर्तिभिः चरैः सिद्धसाध्यचारणगणैः स्थावरैः नक्षत्रगणैश्च सहितो यः । अश्विन्यादीनि हि आधारगतिं विना निजगत्यभावात् स्थावराण्येव । तदुक्तमारभटीये—'अनुलोमगतिर्नौस्थः पश्यत्यचलं विलोमगं यद्वत् । अचलानि भानि तद्वत्समपश्चिमगानि लङ्कायाम् ॥' इति । **भूतग्रामो** भूतसमूहः । **स्वप्रभावेन** नतु दूतसंप्रेषणादिना । निजमनःपरिस्पन्दमात्रेण अन्तर्यामिप्रेरणयेति यावत् । **संनिधा-**

वाल्मीकिना स्वकृतिमप्सरोभिः प्रयुज्यमानां द्रष्टुमुपनिमन्त्रिताः स्मः। तद्गङ्गातीरमातोद्यस्थानमुपगम्य क्रियतां समाजसंनिवेशः' इति। कृतश्च मर्त्यामर्त्यस्य भूतग्रामस्य समुचितस्थानसंनिवेशो मया। अयं तु—

राज्याश्रमनिवासोऽपि प्राप्तकाष्ठमुनिव्रतः।
वाल्मीकिगौरवादार्य इत एवाभिवर्तते ॥ १ ॥

---

पितः निजसमीपमानीतः। आदिष्टश्चेत्यत्र चकारः प्रकृतविषयमेव वितर्कमुन्निद्रयति। आदेशप्रकारं कथयति—**वत्सेत्यादिना** ॥ स्वकृतिः अभिनेयतया निबद्धमस्माकमुत्तरं चरितम् अप्सरोभिः। अनेन रसप्राधान्येन प्रतिपाद्यवस्तुनः श्रद्धेयता कथिता। **प्रयुज्यमानां** सात्त्विकाद्यैरभिनयैर्दृश्यतामापाद्यमानां **द्रष्टुं** संगता नवेति ज्ञातुम् **उपनिमन्त्रिताः** सभापतित्वेन वृताः। **तत्** तस्मात् वाल्मीकिनियोगस्यानतिक्रमणीयत्वादित्यर्थः। **आतोद्यस्थानं** मृदङ्गवीणादिरूपायाः प्रवेशसामग्र्याः सन्निवेशनस्थानं रङ्गमण्डपिकामिति यावत्। 'ततं वीणादिकं वाद्यमानद्धं मुरजादिकम्। वंशादिकं तु सुषिरं कांस्यं ताळादिकं घनम्॥ चतुर्विधमिदं वाद्यं वादित्रातोद्यनामकम्' इत्यमरः। **उपाविश्य** प्रविश्य। क्रियतामिति विधौ लोट्। **समाजसंनिवेश इति** ॥ सभ्यानां यथार्हं यथास्थानमुपनिवेशनमित्यर्थः। प्राश्निकानामितरेषामवलोककजनानां च स्वस्वगौरवतारतम्येन समुचितासनविधानमिति यावत्। कृतश्चेत्यनेन आत्मनो नियोगपारतन्त्र्यं सूचयति। इदानीमवसरोचितविचारो मम न युक्त इति भावः। एवं निजनियोगानुष्ठाननिवेदनाय प्रवृत्तस्ताज्जिज्ञासया स्वयमागच्छन्तं दृष्ट्वाऽह—**अयं त्विति** ॥ अयं तु आर्यः वाल्मीकिगौरवात् इत एव अभिवर्तते इत्यन्वयः। अयमित्यभिनीयोक्तिः। तुशब्दो विशेषं प्रतिपादयन्नस्य नृत्तगीतादिविनोदेष्वनाधिकारितां व्यनक्ति। **वाल्मीकिगौरवात्** वाल्मीकिप्रतिपत्त्या न तु नाट्यदर्शनकुतूहलादित्यर्थः। **इत एव** नृत्तशालासन्निधावेव **अभिवर्तते** आगच्छति। कुतः पुनरस्य नृत्तविनोदनेऽनधिकारितेत्यत्राह—**राज्याश्रमेति** ॥ राज्यमेवाश्रमः राज्याश्रमः सज्जनरक्षात्मकतपोऽनुष्ठानस्थानम्। 'रक्षायोगादयमपि (मुनिजनोचितं) तपः प्रत्यहं संचिनोति' इति श्रीमन्महाकविकालिदासवचनात्। तस्मिन्निवसनेऽपि धर्माविरोधिष्वधिकारिता दर्शिता। अपिर्विरोधे। विरोधं प्रकटयति—**प्राप्तेति** ॥ प्राप्तकाष्ठं प्राप्तोत्कर्षं मुनिव्रतं यस्य सः। अनेन नृत्तविनोदनेनाधिकारिता दर्शिता। अपि प्रश्ने। **स्थिताः** समुचितस्थानेष्वित्यर्थात्।

(ततः प्रविशति रामः ।)

**रामः**—वत्स लक्ष्मण, अपि स्थिता रङ्गप्राश्निकाः ।

**लक्ष्मणः**—अथ किम् ।

**रामः**—इमौ पुनर्वत्सौ कुमारचन्द्रकेतुसमां प्रतिपत्तिं लम्भयितव्यौ ।

**लक्ष्मणः**—प्रभुस्नेहप्रत्ययात्तथैव कृतम् । इदं त्वास्तीर्णं राजासनम् । तदुपविशत्वार्यः ।

**रामः**—(उपविश्य ।) प्रस्तूयतां भोः ।

**सूत्रधारः**—(प्रविश्य ।) भगवान्भूतार्थवादी प्राचेतसः सजङ्गमस्थावरं जगदाज्ञापयति—यदिदमस्माभिरार्षेण चक्षुषा समुद्वीक्ष्य पावनं वचनामृतं करुणाद्भुतरसं च किंचिदुपनिबद्धम् । तत्र सगौरवमवधातव्यमिति ।

---

रङ्गविषये प्राश्निकाः **रङ्गप्राश्निकाः** । अत्र रङ्गशब्देन प्रयोक्ष्यमाणमभिनेयवस्तु लक्ष्यते । प्रश्नेऽधिकृताः प्राश्निकाः युक्तायुक्तविवेचनकुशला विद्वांस इत्यर्थः । इमा इत्यभिनीय कथनम् । पुनश्शब्दो विशेषे । **कुमारचन्द्रकेतुसमां** राजकुमारसदृशीं **प्रतिपत्तिम्** उपचारगौरवम् **लम्भयितव्यौ** प्रापणीयौ । शीलबुद्धिविनयवीर्यप्रभावादिभिरत्यन्तमुत्कर्षादेवेति भावः । **प्रभुस्नेहप्रत्ययात्** राजप्रतिपत्तिविश्वासात् । **तथैव** कथितप्रकारेणैव **कृतं** संपादितम् । **इदं** बहुविधोपचारविशिष्टतया पुरोभुवि दृश्यमानम् । तुशब्दो विरोधं द्योतयन्नात्मनो नियोगानुष्ठानस्यापरिहीणतां प्रतिपादयति । **आस्तीर्णं** वर्णकम्बलादिभिरुपक्लृप्तं राजयोग्यमासनं **राजासनम्** । **प्रस्तूयतामिति** ॥ पूर्वरङ्गानन्तरविधेयं कर्मारभ्यतामित्यर्थः । अथ रङ्गपूजादिकं विधाय भारतीवृत्तेश्चतुर्ष्वङ्गेषु प्रधानभूतं प्ररोचनाख्यमङ्गं विदधाति—**भगवानिति** ॥ अनुल्लङ्घनीयशासन इत्यर्थः । **भूतार्थवादी** परमार्थवस्तुप्रतिपादनशीलः **प्राचेतसः** वाल्मीकिः । सजंगमस्थावरमित्यनेन तदाज्ञानुवर्तने चेतनाचेतनसाधारण्यं कथ्यते । किं पुनराज्ञापितमित्यत आह—**यदिदमिति** ॥ यदिदमिति संमुखाकारवस्तुप्रतिपादकेन वचनेन स्वरूपपरिज्ञानाभावेऽपि बहुमन्तव्यता कथिता । **आर्षेण** त्रिकालसंदर्शिना **चक्षुषा** प्रतिभात्मकेन ज्योतिषा **समुद्वीक्ष्य** सम्यगवलोक्य **पावनं** पापक्षयकरम् । अनेन स्वप्रणीतस्य संदर्भस्य प्रभुसंमितत्वमप्यस्तीति प्रकाश्यते । **वचनामृतं** शब्दतोऽर्थतश्च मधुरम् । **करुणाद्भुतरसं** करुणस्याङ्गतयाऽद्भुतस्यापि प्रबन्धव्याप्तिरुभयरसात्मकम् । किंचिदित्यनेन

**रामः**—एतदुक्तं भवति । साक्षात्कृतधर्माणो महर्षयः । तेषा(म)मृतंभराणि वचनानि भगवतां परोरजांसि प्रज्ञानानि न कचिद्व्याहन्यन्त इत्यनभिशङ्कनीयानि ।

(नेपथ्ये ।)

हा अज्जउत्त हा कुमार लक्खण, एआइणिं असरणं अरण्णे आसण्णप्पसववेअणं हदासं सावदा अहिलिहन्दि । हा दाणिं मन्दभाईणी भाईरईए अत्ताणं णिक्खिविस्सम् ।

हा आर्यपुत्र हा कुमार लक्ष्मण, एकाकिनीमशरणामरण्ये आसन्नप्रसववेदनां हताशां श्वापदा अभिलिहन्ति । हा इदानीं मन्दभागिनी भागीरथ्यामात्मानं निक्षिपामि ।

---

रसप्राचुर्यं विस्तराभावश्च प्रकाश्यते । **उपनिबद्धं** विरचितम् । **तत्र** तस्मिन् विषये **सगौरवं** यथार्थताप्रतिपत्तिपूर्वकम् **अवधातव्यम्** अवधानं कर्तव्यम् । भवद्भिरिति शेषः । इतिशब्द आज्ञापयतीत्यनेन सह संबध्यते । एतदिति वक्ष्यमाणम् । **साक्षात्कृतधर्माणः** प्रत्यक्षीकृतनिखिलपुण्यापुण्यपरिपाका इत्यर्थः । इतरार्थोपलक्षणत्वात् धर्मशब्दस्याधर्मोऽपि परिगृहीतः । **ऋषयः** देशकालव्यवहितवस्तुसंदर्शिनः । **तेषां** प्रतिपादितप्रभाववताम् **वचनानि** लोकानुग्रहार्थं प्रवृत्तानि वागिन्द्रियाणि **भगवतां** जगदीशितॄणाम् **प्रज्ञानानि** प्रकृष्टानि ज्ञानकरणानि । जगतामित्यर्थात् । धर्मशास्त्राण्येव हि सर्वेषां धर्माधर्मज्ञानसाधनानि, तानि तु तेषां स्वतन्त्रप्रवृत्तानि वचनान्येवेत्यर्थः । **न कचिदिति** ॥ देशान्तरे पुरुषान्तरे कालान्तरे वापीत्यर्थः । **व्याहन्यन्ते** विप्लुतार्थानि जायन्ते । इतिर्हेतौ । **अनभिशङ्कनीयानि** शङ्कितुमयोग्यानि । विशेषतोऽप्यस्य वागीश्वरीवल्लभात् प्रजापतेरुपजातानुपहतज्ञानेन्द्रियस्य महामुनेर्वचनानीति भावः । हा आर्यपुत्र हा कुमारलक्ष्मण एकाकिनीमशरणामरण्ये आसन्नप्रसववेदनां हताशां श्वापदा अभिलिहन्ति । हा इदानीं मन्दभागिनी भागीरथ्यामात्मानं निक्षिपामि । **आर्यपुत्र** अस्मत्परिरक्षणव्यसनिन् **कुमारलक्ष्मण** सततमपीप्सितविधानप्रवण **एकाकिनीं** विहीननिखिलपरिवाराम् **अशरणाम्** आधारविरहिताम् **अरण्ये** क्रूरसत्त्वाधिष्ठिते विपिने **आसन्नप्रसववेदनां** प्रारब्धप्रसूतिरुजम् **हताशाम्** इदानीमप्यभङ्गुरमनोरथां **श्वापदा** व्याघ्रादयः **अभिलिहन्ति** अभितो भक्षयन्ति । अवसरोचितमवधारयति—**हेति** ॥ **मन्दभागिनी** अवसितपुण्यलेशा **भागीरथ्यां** गङ्गाप्रवाहे **आत्मानं** दुःखैकहेतुं

लक्ष्मणः—कष्टं बतान्यदेव किमपि ।

सूत्रधारः—

विश्वंभरात्मजा देवी राज्ञा त्यक्ता महावने ।
प्राप्तप्रसवमात्मानं गङ्गादेव्यां विमुञ्चति ॥ २ ॥

(इति निष्क्रान्तः ।)

प्रस्तावना ।

रामः—(सावेगम् ।) देवि देवि, लक्ष्मणमवेक्षस्व ।

लक्ष्मणः—आर्य, नाटकमिदम् ।

रामः—हा देवि दण्डकारण्यवासप्रियसखि, एष ते रामाद्विपाकः ।

लक्ष्मणः—आर्य, आश्वस्य दृश्यतां तावत्प्रबन्धार्थः ।

रामः—एष सज्जोऽस्मि वज्रमयः ।

---

शरीरं **निक्षिपामि** परित्यजामि । वर्तमानसामीप्ये लट् । अथ सीताशरीरनाशहेतुभूतमात्मना कृतं कर्मोद्दिश्यानुशोचति—**कष्टमिति** ॥ अन्यदेव किमपि कष्टं बतेति योजना । **अन्यदेव** न पुनरेतत् एकाकिन्या एव पूर्वमार्यनियोगादनुष्ठितं परित्यजनमित्यर्थः । अवधारणेन पश्चात् सीतया कृतं निजशरीरपरित्यजनं व्यावर्त्यते । **किमपीति** विपरीतलक्षणयाऽधिक्यं प्रतिपादयति । **कष्टं** दुःखकरम् । बतेति खेदे । अस्माकमिति शेषः । एवं वा—कष्टशब्देन दुःखमेवाभिधीयते । बतेति प्रतिविधानादर्शनजनिते खेदे । अन्यदेव परित्यागजनितादातिरिक्तमेव । किमपि परिच्छेदानर्हम् । दैवादापतितमिति शेषः । अथ वस्तूपक्षेपमुखेन पात्रप्रवेशं संघटयति—**विश्वंभरेति** ॥ एनस्संपर्करहितेत्यर्थः । **देवी** प्रशस्तशीला **राज्ञा** लोकेप्सितविधायिना **त्यक्ता** निर्वासिता **महावने** अनेन पुनः परिग्रहणश्रद्धाराहित्यं प्रकाश्यते । **प्राप्तप्रसवम्** आगतप्रसूतिसमयम् **आत्मानं** देहं **गङ्गादेव्याम्** अतिगम्भीरे गङ्गाप्रवाहे **विमुञ्चति** निक्षिपति । जीवितमोचनायेति शेषः । उपक्षेपवचनश्रवणे नाट्यापलापेन साक्षात्त्वप्रतिपत्तिजननादावेगः । लक्ष्मणमवेक्षस्वेति योजना । अवेक्षणं प्रतिपालनम् । अथ लक्ष्मणवचनाद्विमुक्तसाक्षात्त्वभ्रमो निजसाहसमेवानुचिन्त्यानुशोचति—**हेति** ॥ **एष** वक्ष्यमाणो विपाकः **रामात्** रामं निमित्तीकृत्य, ल्यब्लोपे पञ्चमी । जन्मान्तरकृतानां च कर्मणामनुभवनौन्मुख्यं विपाकः । **आश्वस्य** नाट्यदर्शनसमुद्बुद्धं शोकमपहाय **दृश्यताम्** अवलोक्यताम् । **प्रबन्धार्थ इति** ॥ कविसंरम्भगोचरीभूतं परमप्रतिपाद्यं वस्त्वित्यर्थः । तावच्छब्दो वाक्यालंकारे । **सज्जः**

(ततः प्रविशति उत्सङ्गकृतैकैकदारकाभ्यां पृथिवीगङ्गाभ्यामवलम्बिता प्रमुग्धा सीता)

**रामः**—वत्स, असंविज्ञातपदनिबन्धने तमसीवाहमद्य प्रविशामि। धारय माम्।

**देव्यौ**—

समाश्वसिहि कल्याणि दिष्ट्या वैदेहि वर्धसे।
अन्तर्जलं प्रसूतासि रघुवंशधरौ सुतौ॥ ३॥

**सीता**—(आश्वस्य।) दिट्ठिआ दारए पसूदह्मि। हा अज्जउत्त।

दिष्ट्या दारकौ प्रसूतास्मि। हा आर्यपुत्र।

**लक्ष्मणः**—(पादयोर्निपत्य।) आर्य, आर्य दिष्ट्या वर्धामहे। कल्या-

---

संनद्धः। नाट्यप्रयोगं द्रष्टुमिति शेषः। **वज्रमय इति**॥ हृदयविदलनयोग्येऽपि तदभावान्न पाञ्चभौतिकं मम शरीरम्, अपि तु वज्रात्मकमेवेति भावः। **उत्संगकृतैकैकदारकाभ्यामिति**॥ उत्संगकृतौ उत्संगावलम्बितौ एकैकौ दारकौ प्रवाहमध्ये निपतनवेगात्प्रसूतौ सीतापुत्रकौ याभ्यां ताभ्याम्। **अवलम्बिता** विधृता **प्रमुग्धा** प्रमोहमुपगता, शिलापुत्रिकायमाणेत्यर्थः। **असंविज्ञातपदनिबन्धनेनेति**॥ असंविज्ञाते अविदिते पदनिबन्धने यस्मिन् तेन। पदं त्राणं, निवर्तकमित्यर्थः। 'पदं व्यवसितत्राणस्थानलक्ष्मांघ्रिवस्तुषु' इत्यमरः। निबन्धनं हेतुः। इह खलु उभयथैवानिष्टभूतं वस्तु सर्वैर्निरसनीयं स्वरूपतः कारणवशाद्वा। तत्र निवर्तकज्ञानाभावात् स्वरूपतो निरसनं दुष्करं, यथापवरकोदरे प्रदीपप्रभया तिमिरनिरसनम्। हेतुपरिज्ञानाभावात् कारणनिवर्तनेन कार्यनिवर्तनमपि न शक्यं कर्तुं, यथा कण्टकावेधजनितपादवेदना तन्निरसनेन निरस्यत इति भावः। सर्वप्रकारेणाप्यप्रतिविधेयेनेति यावत्। **समाश्वसिहि** दुःखविमोचनं कुरु। ईदृशं कथं मुञ्चेयमित्यत्राह—**कल्याणीति**॥ कल्याणीत्वप्रतिपादनाय पीठिकां प्रतिष्ठापयति—**दिष्ट्येति**॥ अस्मद्भाग्यवशादित्यर्थः। **वैदेहि** पापसंपर्करहिते **वर्धसे** अभ्युदयसंपन्ना भवसि। उक्तमर्थं युक्त्या साधयति—**अन्तर्जलमिति**॥ ह्रदाभ्यन्तरे इत्यर्थः। **प्रसूताऽसि** उपजाततनयाऽसि। तनयजननं मम केवलं न सुखाय प्रत्युत भरणीयासंभवाद्दुःखायैवेत्यत्राह—**रघुवंशधराविति**॥ दिष्ट्या दारकौ प्रसूतास्मि। निजतनययोर्वंशधरत्वकथनश्रवणात् किञ्चिदुपजातप्रत्याशा सशोकमाह—**हा आर्यपुत्रेति**॥ आश्वासौचित्येऽपि तदभावात् लक्ष्मणस्य पादपतनम्। आहेति शेषः। वचनप्रकारमाह—**आर्येति**॥ परितोषातिरेकाद्द्विर्वचनम्। **वर्धामहे** प्रमोदामहे। अत्र हेतुमाह—**कल्याणप्ररोह इति**॥ दृढतरललिताङ्कुर-

णप्ररोहो रघुवंशः । (विलोक्य ।) हा कथं क्षुभितबाष्पोत्पीडनिर्भरः प्रमुग्ध एवार्यः । (वीजयति ।)

देव्यौ—वत्से, समाश्वसिहि ।

सीता—(निःश्वस्य ।) भअवदीओ, का तुह्मे । मुञ्चह ।

भगवत्यौ, के युवाम् । मुञ्चतम् ।

पृथिवी—इयं ते श्वशुरकुलदेवता भागीरथी ।

सीता—भअवदि णमो दे । भगवति नमस्ते ।

भागीरथी—चारित्रोचितां कल्याणसंपदमधिगच्छ ।

लक्ष्मणः—अनुगृहीताः स्मः ।

भागीरथी—इयं ते जननी विश्वंभरा ।

सीता—हा अम्ब, ईरिसी अहं तुए दिट्ठा ।

हा अम्ब, ईदृश्यहं त्वया दृष्टा ।

पृथिवी—एहि पुत्रि वत्से सीते ।

(उभे आलिङ्ग्य मूर्च्छतः ।)

लक्ष्मणः—(सहर्षम् ।) कथमार्या पृथिवीजाह्नवीभ्यामभ्युपपन्ना ।

रामः—(आश्वस्य ।) दिष्ट्या खल्वेतत् कल्याणान्तरं तु वर्तते ।

---

वानित्यर्थः । **रघुवंशः** रघूणां वंशः कुलमेव वंशो वेणुरिति श्लिष्टपरम्परितं रूपकमेतत् । **विलोक्येति** ॥ मुखमित्यर्थात् । हेति विषादे । **कथमिति** बहुप्रयत्नेऽपि नैष्फल्यदर्शनजनिते वितर्के । **क्षुभितबाष्पोत्पीडनिर्भर इति** ॥ क्षुभितेन उत्सर्पता बाष्पोत्पीडेन बाष्पवृद्ध्या निर्भरः परिपूर्णः परिक्लिष्ट इति यावत् । **मुग्ध एव** मूर्च्छित एव । न चेततीति यावत् । मरणाध्यवसायभङ्गदर्शनान्निःश्वासः । भगवत्यौ के युवाम् मुञ्चतम् । मा खलु व्यवसितमरणां मां धारयतमित्यर्थः । इयमित्यभिनीयोक्तिः । **श्वशुरकुलदेवता** दशरथकुलदेवता, भगीरथकुलदेवतेति वा । भगवति नमस्ते । **चारित्रोचितां** भर्तृसंभावनात्मिकां **कल्याणसंपदं** मङ्गलाभिवृद्धिम् **अधिगच्छ** प्राप्नुहि । **अनुगृहीताः स्म इति** ॥ परित्यक्तायाः पुनः परिग्रहणादन्यस्याः कल्याणसंपदोऽभावादियमाशीरनुग्रह एवेत्यर्थः । हा अम्ब ईदृशी अहं त्वया दृष्टा । एहीति आलिङ्गनत्वरया । बन्धुजनसमागमे विपन्नानां शोकवर्धनादुभयोर्मूर्च्छा । **पृथिवीजाह्नवीभ्यां** जननीभर्तृकुलदेवताभ्याम् **अभ्युपपन्ना**

**भागीरथी**—तत्र विश्वंभरा व्यथत इति जितमपत्यस्नेहेन। यद्वा सर्वसाधारणो ह्येष मनसो मूढग्रन्थिरान्तरश्चेतनावतामुपप्लवः संसारतन्तुः। सखि भूतधात्रि, वत्से वैदेहि, समाश्वसिहि।

**पृथिवी**—(आश्वस्य।) देवि, सीतां प्रसूय कथमाश्वसिमि।

सोढश्चिरं राक्षसमध्यवास-
स्त्यागो द्वितीयश्च सुदुःसहोऽस्याः।

**भागीरथी**—

को नाम पाकाभिमुखस्य जन्तु-
र्द्वाराणि दैवस्य पिधातुमीष्टे ॥ ४ ॥

**पृथिवी**—भगवति भागीरथि, युक्तमेतत्सर्वं वो रामभद्रस्य।

न प्रमाणीकृतः पाणिर्बाल्ये बालेन पीडितः।
नाहं न जनको नाग्निर्नानुवृत्तिर्न संततिः ॥ ५ ॥

---

अनुगृहीता। सीताविनाशस्याभावसंभावनादाश्वासः। **दिष्ट्या** अस्मद्भाग्यबलात्। खलुरवधारणे। **एतत्** विपद्यमानाया अवलम्बनम् **कल्याणान्तरं** रघुवंशप्ररोहजननादन्यत्। तुर्विशेषे। कल्याणानुबन्धस्तावन्न याहाच्छिकः अपितु भाग्यवशादेवेत्यर्थः। **तत्र** तथाभूते वस्तुनि विषये मूढजनहृदयवैवश्यकारितया प्रसिद्ध इत्यर्थः। **विश्वंभरा** विदितसंसारस्वभावाऽपि **व्यथते** पीड्यते। इतिर्हेतौ। **जितं** विद्याविनयादिकं सर्वमपि न्यक्कृत्योपरि वर्तते। प्रतिपादितस्यार्थस्यान्यथोपपत्तिमाशङ्कते—**यद्वेति** ॥ **सर्वसाधारणः** आविद्वदङ्गनागोपालम् अनुस्यूतः **मूढग्रन्थिः** मोहप्रथनम् अज्ञानोत्पत्तिमूलकन्द इत्यर्थः। ग्रन्थिशब्देन केनाप्यविश्लथनीयता प्रकाश्यते। चेतनावतामित्यनेन सर्वसाधारण्यं विवृणोति। **उपप्लवो** भ्रमः **संसारतन्तुः** संसारप्रवर्तनहेतुः। कथंशब्देन सीताप्रसवाश्वासयोरेकत्र समावेशः प्रतिक्षिप्यते। उक्तमर्थमुपपादयति—**सोढ इत्यादिना** ॥ कर्मणि क्तः। **चिरं** नतु द्वित्रिदिनमात्रं पक्षमात्रं मासमात्रं वा। **राक्षसमध्यवासः** रावणनीताया लङ्काद्वीपे निवसनम्। **द्वितीयश्चेति** ॥ राक्षसमध्यवासात् परत इत्यर्थः। चशब्दो वैयर्थ्ये। मयेति शेषः। **पाकाभिमुखस्य** परिणामोन्मुखस्य, अनुभवदशामारूढस्येत्यर्थः। जन्तुशब्दः सर्वसाधारण्यं व्यनक्ति। **द्वाराणि** उत्पत्तिनिमित्तानि **दैवस्य** जन्मान्तरकृतकर्मफलस्य **पिधातुं** निरोद्धुम् **ईष्टे** शक्नोति। युक्तमित्यत्र

सीता—हा अज्जउत्त, सुमरेसि । हा आर्यपुत्र, स्मर्यसे ।

पृथिवी—आः, कस्तवार्यपुत्रः ।

सीता—(सलज्जास्रम् ।) जह अम्बा भणादि । यथाम्बा भणति ।

रामः—अम्ब पृथिवि, ईदृशोऽस्मि ।

भागीरथी—भगवति वसुंधरे, शरीरमसि संसारस्य । तत्किमसंविदानेव जामात्रे कुप्यसि ।

घोरं लोके विततमयशो या च वह्नौ विशुद्धि-
र्लङ्काद्वीपे कथमिव जनस्तामितः श्रद्दधातु ।
इक्ष्वाकूणां कुलधनमिदं यत्समाराधनीयः
कृत्स्नो लोकस्तदिह विषमे किं स वत्सः करोतु ॥६॥

---

प्रश्नकाकुः । एतदिति वक्ष्यमाणम् । वः युष्माकम् । संबन्धार्थे षष्ठी । सर्वशब्देन परामृष्टानर्थान् प्रकटयति—नेति ॥ प्रमाणीकृतः बहुमतः बाल्ये शैशवे एव । सीताया इत्यर्थात् । बालेन प्रथमवयसा सताऽपि पीडितः गृहीतः । नाहमिति ॥ प्रमाणीकृतेति लिङ्गविपरिणामेनानुषञ्जनीयम् । जनकः योगीश्वरः श्वशुरोऽपि नाग्निः सीताप्रवेशशीतलीभूतोऽपि नानुवृत्तिः निजसुखमपि विहाय कान्तारे सहावस्थाय परिचरणं न सन्ततिः पितॄणामृणमोचनमपि । दीपकमलंकारः । हा आर्यपुत्र स्मर्यसे । आ इति क्रोधे । किंशब्दः क्षेपे । यथा अम्बा भणतीति ॥ तत्तथैवेति शेषः । ईदृशोऽस्मीति ॥ यौगिकार्थमभिप्रेत्योक्तिः । अहमनार्य एवेत्यर्थः । भगवति अवगतनिखिलतत्त्वे वसुन्धरे निखिलाधारे । सकलजगतामपि पृथिव्यात्मकत्वाच्छरीरमसीत्युक्तम् । संसारस्य भोगायतनभूतशरीराश्रयतया जायमानानां निखिलकर्मफलानुभावानाम् । अत्राधाराधेययोः अभेदेनाध्यवसायाच्छरीरमसीत्युक्तम् । निखिलानुभवसाक्षिण्यसीति यावत् । तत् तस्मात् । किंशब्दः प्रश्ने । असंविदानेव अज्ञेव । संपूर्वत्वाद्विदेः 'समो गम्यृच्छि—' इत्यादिनाऽऽत्मनेपदम् । जामात्रे कल्याणयोजनमुचिताय कुप्यसि क्रुधद्रुहेत्यादिना चतुर्थी । अपराधराहित्यं च स्मारयति—घोरमित्यादिना ॥ लोके आविद्वदङ्गनाबालं सर्वत्र विततं व्याप्तम् । या चेत्यनेन विशुद्धेरपि वितताभावोऽनूद्यते । तत् कथमभिशंसाजननमित्यत्राह—लङ्काद्वीप इति ॥ द्विपदामगम्ये देशे इत्यर्थः । कथमित्यनेन विचाराशक्तिः प्रकाश्यते । जनः मूर्खप्रायः तां दैवतैरपि स्तूयमानां विशुद्धिं कलङ्कराहित्यम् इतः जम्बूद्वीपे भारते वर्षे । सप्तम्यर्थे तसिः । श्रद्दधातु विश्वस्यात् । किं पुनरत्र मूढजनवादैरित्यत्राह—इक्ष्वाकूणामिति ॥ कुल-

लक्ष्मणः—अव्याहतान्तःप्रकाशा हि देवतास्तत्त्वेषु ।
भागीरथी—तथाप्येष तेऽञ्जलिः ।
रामः—अम्ब, अनुवृत्तस्त्वया भगीरथगृहे प्रसादः ।
पृथिवी—देवि नित्यं प्रसन्नास्मि तव । किं त्वसावापातदुःसहः स्नेहसंवेगः, न पुनर्न जानामि सीतास्नेहं रामभद्रस्य ।

दह्यमानेन मनसा दैवाद्वत्सां विहाय सः ।
लोकोत्तरेण सत्त्वेन प्रजापुण्यैश्च जीवति ॥ ७ ॥

रामः—सकरुणा हि गुरवो गर्भरूपेषु ।
सीता—(रुदती कृताञ्जलिः ।) णेदु मं अत्तणो अङ्गेसु विलअं अम्बा ।
नयतु मामात्मनोऽङ्गेषु विलयमम्बा ।

---

धनशब्देन क्रमागतत्वं सम्यक्परिपालनौचित्यं च प्रकाश्यते । **समाराधनीयः** परितोषणीयः । **तत्** तस्मात् **इह** अपरिहरणीयतयाऽपतितेऽस्मिन् **विषमे** अतिमात्रं संकटे **सः** राजधर्मपरतन्त्रवृत्तिः । वत्सशब्देनानुकम्पनीयत्वं प्रकाश्यते । परित्यागं विना का वाऽस्य गतिरिति लोटा प्रकाश्यते । सामान्येन विशेषं समर्थयति— **अव्याहतेति** ॥ अव्याहतो रागद्वेषादिभिरप्रतिहतोऽन्तःप्रकाशो दिव्यं चक्षुः यासां ताः । **तत्त्वेषु** परमार्थभूतेषु वस्तुषु । यदि तावदस्मदीयो रामभद्रः इति भवत्याः प्रतिपत्तिः तर्हि तदपराधविषये भवतीमहं क्षामये इत्याह—**तथाऽपीति** ॥ एष इति करणाभिनयः । **ते** पुत्रीपरित्यजनेन परिभूतायाः **अञ्जलिः** प्रसादनायेति शेषः । **अनुवृत्तः** अविच्छिन्नः **भगीरथगृहे** भगीरथकुटुम्बे । अत्र गृहशब्देन तदाश्रितः कुटुम्बो लक्ष्यते । वितमसि भवने वृथैव प्रदीपविन्यास इति सानुशयमाह—**देवीति** ॥ तवेति संबन्धार्थे षष्ठी । तत्कथमेवंविधा वाचोयुक्तिस्तवेत्यत्राह—**किंत्विति** ॥ **आपातदुस्सहः** प्रमुखे तीक्ष्णतरः । स्नेहजनितः संवेगः **स्नेहसंवेगः** मानसी वेदनेत्यर्थः । **न पुनर्न जानामीति** ॥ जानाम्येवेत्यर्थः । तर्हि कथमियमनेन परित्यक्तेत्यत्राह—**दह्यमानेनेति** ॥ उपलक्षणे तृतीया । **दैवात्** नतु निजसाहसात् **वत्सां** सीतां **विहाय** त्यक्त्वा **सः** रामभद्रः **लोकोत्तरेण** इतरजनव्यतिरिक्तत्वादतिशयितेन **सत्त्वेन** प्राणबलेन **प्रजापुण्यैः** प्रजानामात्मरक्षणफलैः पूर्वजन्मार्जितैः सुकृतैः । दुर्बलानामेव हि येन केनापि द्रुततरं प्राणाः निर्गच्छेयुः नतु बलवतामिति भावः । निजापराधमपह्नुत्योक्तिमाकर्ण्याह—**सकरुणा इति** ॥ **गुरवः** मातृपित्रादयः **गर्भरूपेषु** अपत्यसदृशेषु । **नयतु मामात्मनोऽङ्गेषु विलयम**-

रामः—किमन्यत्।

भागीरथी—शान्तम्। अविलीना संवत्सरसहस्राणि भूयाः।

पृथिवी—वत्से, अवेक्षणीयौ ते पुत्रकौ।

सीता—किं एदं अणुगेह्ण। किमेतत्। अनुगृहाण।

रामः—हृदय, वज्रमसि।

भागीरथी—कथं वत्सौ सनाथावप्यनाथौ।

सीता—कीरिसं मे अभव्वाए सणाहत्तणम्।

कीदृशं मे अभव्यायाः सनाथत्वम्।

देव्यौ—

जगन्मङ्गलमात्मानं कथं त्वमवमन्यसे।
आवयोरपि यत्सङ्गात्पवित्रत्वं प्रकृष्यते॥ ८॥

लक्ष्मणः—आर्य, श्रूयताम्।

---

म्बा। **विलयम्** ऐश्यं विनाशमिति यावत्। **किमन्यदिति** ॥ शरीरविनाशमन्तरेणान्यत् किं शरणमिति भावः। **शान्तं** शममेतु। ईदृशी वाणी कदाचिदपि त्वन्मुखान्न निस्सरत्वित्यर्थः। **अविलीना** निरपायैव **संवत्सरसहस्राणि** अतिचिरम्। अत्यन्तसंयोगे द्वितीया। भूया इत्याशीर्लिङ्। **अवेक्षणीयौ** रक्षणीयौ। शरीररुजापरिहरणमवेक्षणम्। रक्षणीयाविति यावत्। **ते इति** ॥ कृत्यानामिति कर्तरि षष्ठी। **पुत्रकाविति** ॥ अनुकम्पायां कः। किमेतत् अनुगृहाण। किंशब्दः क्षेपे। **एतत्** वचनमिति शेषः। मातृविरहितानां हि बालकानां मातामह्येव शरणमित्याह—**अनुगृहाणेति** ॥ वचनशेषश्रवणकातर्यात् सासूयमाह—**हृदयेति** ॥ **वज्रमसि** अत्यन्तकठिनमसीत्यर्थः। कथमिति प्रश्ने। **वत्सौ** अत्यन्ताशिशू **सनाथावपि** इदानीं त्वया मात्रा सशरणावपि **अनाथौ** निरवलम्बौ। भवेतामिति शेषः। पित्रादीनामभावेऽपि मातृसंभाविता बालकाः सुखेन वर्तन्ते वर्धन्ते चैवेति भावः। कीदृशं मया अभव्यया पापिष्ठया सनाथत्वं साश्रयत्वं वत्सयोरिति विभक्तिपरिणामेनानुषञ्जनीयम्। जगद्वृद्धिकारिणी त्वमिदानीं कथं निजसुतवृद्धिं न करोषीत्याह—**जगन्मङ्गलमिति** ॥ **आत्मानं** निजशरीरम्। कथमिति क्षेपे। **अवमन्यसे** विनिन्दसि। जगन्मङ्गलत्वमुपपादयति—**आवयोरिति** ॥ **यत्संगात्** अध्यवसितमरणायाः संगात् संपर्कात् **पवित्रत्वं** जगत्पावनत्वं **प्रकृष्यते**

रामः—लोकः शृणोतु ।

(नेपथ्ये कलकलः ।)

रामः—अद्भुततरं किमपि ।

सीता—किंत्ति आबद्धकलकलप्पज्जलिअं अन्तरिक्खम् ।

किमित्याबद्धकलकलप्रज्वलितमन्तरिक्षम् ।

देव्यौ—ज्ञातम् ।

कृशाश्वः कौशिको राम इति येषां गुरुक्रमः ।
आविर्भवन्ति तान्येवं शस्त्राणि सह जृम्भकैः ॥ ९ ॥

(नेपथ्ये ।)

देवि सीते नमस्तेऽस्तु गतिर्नः पुत्रकौ हि ते ।
आलेख्यदर्शनादेव ययोर्दत्ता रघूद्वहात् ॥ १० ॥

सीता—दिट्ठिआ अत्थदेवदाओ एदाओ अज्जवि अज्जउत्त-

---

पूर्वस्मादतिरिच्यते । श्रूयतामिति लोटा परित्यागस्यातिसाहसरूपता प्रकाशिता । लोक इत्यनेनात्मनो लोकाराधनपरता प्रकाशिता । अद्भुततरमिति ॥ मर्त्यजनैरननुभाव्यमित्यर्थः । किमपीत्यनेन परिच्छेदाभावो व्यज्यते । वर्तत इति शेषः । किमिति आबद्धकलकलप्रज्वलितमन्तरिक्षम् । पूर्वमाबद्धकलकलं पश्चात् प्रज्वलितमिति पूर्वकालसमासः । अन्तरिक्षं द्यावापृथिव्योरन्तरालम् । कृशाश्व इति ॥ तानि अस्त्राणि जृम्भकैः सह एवमाविर्भवन्ति इत्यन्वयः । कीदृशानीत्यत्राह—येषामिति ॥ येषां गुरुक्रमः कृशाश्वः कौशिकः रामः इति इति योजना । इतिशब्दः समाप्तौ । अतः परं संप्रदायो नास्त्येव । एवमिति ॥ अन्तरिक्षमाबद्धकलकलप्रज्वलितं कृत्वेत्यर्थः । देवीति ॥ सकलजनवन्दनीय इत्यर्थः । सीते आजानपावने नमस्तेऽस्तु सततमप्यस्मासु प्रसीद । अत्र हेतुमाह—गतिरिति ॥ ते पुत्रकौ हि नः गतिरिति योजना । हिरवधारणे । गतिराश्रयः । कौशिकप्रसादेनार्यपुत्रे स्थितानां युष्माकं कथमितराश्रयोपपत्तिरित्यत्राह—आलेख्यदर्शनादिति ॥ आलेख्यदर्शनकाल इत्यर्थः । 'सप्तमीपञ्चम्यौ कारकमध्ये' इति पञ्चमी । कालाध्वनोरित्यस्मात् कालोऽत्रानुवर्तते । ययोः पुत्रकयोः दत्ता वयमिति विभक्तिपरिणामेन पूर्ववाक्यादनुषञ्जनीयम् । रघूद्वहादिति ॥ अत्र दत्ता इत्यस्य कर्मणि निर्वाहसामर्थ्यात् कर्तृत्वेनावगतस्यैव रघूद्वहस्य पुनरपादानत्वेनोपादानं 'पात्रादपूपा दत्ता' इत्यादिवद्देयद्रव्यभूतानामस्त्राणां प्रथमाश्रयाद्विभागप्रतिपादनमात्रपरतयेति द्रष्ट-

पसादेण पडिप्फुरन्दि ।

दिष्ट्या अस्त्रदेवता अद्यापि आर्यपुत्रप्रसादेन परिस्फुरन्ति ।

लक्ष्मणः—उक्तमासीदार्येण सर्वथैतानि त्वत्प्रसवमुपस्थास्यन्तीति ।

देव्यौ—

नमो वः परमास्त्रेभ्यो धन्याः स्मो वः परिग्रहात् ।
काले ध्यातैरुपेतव्यं वत्सयोर्भद्रमस्तु वः ॥ ११ ॥

रामः—

क्षुभिताः कामपि दशां कुर्वन्ति मम संप्रति ।
विस्मयानन्दसंदर्भजर्जराः करुणोर्मयः ॥ १२ ॥

देव्यौ—मोदस्व वत्से, मोदस्व । रामभद्रतुल्यौ ते पुत्रकाविदानीं संवृत्तौ ।

सीता—भअवदीओ, को दाणिं खत्तिओइदविज्जाए अहिकारइस्सदि ।

भगवत्यौ, क इदानीं क्षत्रियोचितविद्यायामधिकारयिष्यति ।

---

व्यम् । दिष्ट्या अस्त्रदेवता अद्याप्यार्यपुत्रप्रसादेन परिस्फुरन्ति । **अद्यापि** एवंविधावस्थायामपि **परिस्फुरन्ति** प्रकाशन्ते । उक्तमासीदार्येणेत्यनेन पूर्वोक्तमनुस्मारयति । **नमो व इति** ॥ वत्सयोः उपेतव्यमिति संबन्धः । कदेत्यत्राह—**काले ध्यातैरिति** ॥ पुत्रयोरित्यधिकरणे सप्तमी । **उपेतव्यं** संनिधातव्यम् । भावे तव्यत् । ध्यातैरित्यत्र पुत्राभ्यामिति विभक्तिपरिणामेन अनुषञ्जनीयम् । भद्रमस्तु व इति विसर्जनजनितामनादरशङ्कां परिहर्तुम् । **क्षुभिता इति** ॥ संप्रति करुणोर्मयः मम कामपि दशां कुर्वन्ति इत्यन्वयः । **करुणोर्मयः** करुणस्य शोकस्य ऊर्मयः परिस्फूर्तयः । मनसि स्थितस्य शोकस्य परिप्लवनानीति यावत् । इदानीं को वा हेतुरित्यत्राह—**क्षुभिता इति** ॥ नाट्यदर्शनेन स्वस्थानादुच्चलिता इत्यर्थः । **कामपि** अवाङ्मनसगोचराम् अतिशयिनीमिति यावत् । तादृशी दशा कथं न परिच्छेत्तव्येत्यत्राह—**विस्मयेति** ॥ विस्मयानन्दकरेण विस्मयानुविद्धानन्दकरेण संदर्भेण जर्जरा विशकलिताः । मोदस्वेति प्राप्तकाले लोट् । **रामभद्रतुल्यौ** पितृसदृशवीर्यौ **इदानीम्** अस्त्रदेवतानुग्रहे सति । क इदानीं क्षत्रियोचितविद्यायामधिकारयिष्यति । **क्षत्रियोचितविद्यायाम्** आन्वीक्षिकी त्रयी वार्तेत्यादिना प्रतिपादितायां विद्यायाम् । **अधिकारयिष्यति** अधिकारिणौ करिष्यति । जातकर्मादिका उपनयनान्ताः क्रियाः करिष्यतीत्यर्थः । **पसेति** ॥

**रामः—**

एषा वसिष्ठगुप्तानां रघूणां वंशनन्दिनी ।
कष्टं सीतापि सुतयोः संस्कर्तारं न विन्दति ॥ १३ ॥

**भागीरथी**—भद्रे, किं तवानया चिन्तया । एतौ हि वत्सौ स्तन्यत्यागात्परेण भगवतो वाल्मीकेरर्पयिष्यामि । स एव चानयोर्ब्रह्मक्षत्रकृत्यं करिष्यति ॥

यथा वसिष्ठाङ्गिरसौ ऋषिः प्राचेतसस्तथा ।
जनकानां रघूणां च वंशयोरुभयोर्गुरुः ॥ १४ ॥

**रामः**—सुविचिन्तितं भगवत्या ।

**लक्ष्मणः**—आर्य, सत्यं विज्ञापयामि । तैस्तैरुपायैरिमौ वत्सौ कुशलवावुत्प्रेक्षे ।

एतौ हि जन्मसिद्धास्त्रौ प्राप्तप्राचेतसावुभौ ।
आर्यतुल्याकृती वीरौ वयसा द्वादशाब्दिकौ ॥ १५ ॥

---

**वसिष्ठगुप्तानां** वसिष्ठेन संस्कृतानां **रघूणां** रघुकुलोद्भूतानाम् । राज्ञामित्यर्थात् । वंशनन्दिनीत्यनेन पावनशीलता प्रतिपादिता । **न विन्दति** न लभते । **भद्र इति** ॥ किंशब्दः क्षेपे । **अनया** क इदानीं क्षत्रियोचितविद्यायामधिकारयिष्यतीत्येवंरूपया । अत्र हेतुं कथयति—**एताविति** ॥ हिरवधारणे भिन्नक्रमः । अर्पयिष्याम्येवेत्यर्थः । **स्तन्यत्यागात् परेण** स्तन्यपोषणार्हात् कालात् परतः । **अर्पयिष्यामि** परिददामि । संप्रदानविवक्षाभावात् षष्ठी । **स एव** वाल्मीकिरेव **ब्रह्मक्षत्रतुल्यं कृत्यं** जातकर्मादिकं शस्त्रास्त्रविद्यादानं च । ननु प्रार्थ्यतापरिहरार्थमेवं क्रियते इत्याह—**यथेति** ॥ **वसिष्ठाङ्गिरसौ** वसिष्ठशतानन्दौ **गुरुः** संस्कर्ता उपदेष्टा च **सुविचिन्तितं** शोभनं चिन्तितम् । **सत्यम्** अबाधितम् **विज्ञापयामि** कथयामि । किं तदित्यत्राह—**तैस्तैरिति** ॥ द्विर्वचनेन बाधाराहित्यं प्रतिपादयति । **उपायैः** साधनैः युक्तिभिरित्यर्थः । **वत्सौ** गङ्गया कथितौ । **कुशलवौ** एतौ वाल्मीकिशिष्यौ । इतिशब्दोऽध्याहार्यः । **उत्प्रेक्षे** शङ्के । उत्प्रेक्षितं चार्थं युक्तिभिः योजयति—**एताविति** ॥ का वा पुनरत्र युक्तय इत्यत्राह—नाटकप्रतिपादितानर्थान् क्रमेणोपनीय योजयति—**एतावित्यादिना** ॥ एतावित्यभिनीय कथनम् । हि प्रसिद्धौ । रघुवंशधरौ सुताविर्युक्तमर्थं योजयति—**उभाविति** ॥ यमावित्यर्थः । ययोर्दत्ता रघूद्वहादित्यने-

रामः—वत्स अति परिप्लवमानहृदयः संमुग्धोऽस्मि ।

पृथिवी—एहि वत्से, पवित्रीकुरु रसातलम् ।

रामः—हा प्रिये, लोकान्तरं गतासि ।

सीता—णेदु मं अत्तणो अङ्गेसु विलअं अम्बा । ण सहिस्सं ईरिसं जीअलोअपरिहवं अणुहोदुम् ।

नयतु मामात्मनोऽङ्गेषु विलयमम्बा । न सह ईदृशं जीवलोकपरिभवमनुभवितुम् ।

रामः—किमुत्तरं स्यात् ।

पृथिवी—स्तन्यत्यागं यावन्मन्नियोगतः पुत्रयोरवेक्षस्व । परेण तु यथा रोचिष्यते तथा करिष्यते ।

गङ्गा—एवं नाम तावत् ।

(इति निष्क्रान्ते देव्यौ सीता च ।)

---

नोक्तं योजयति—**जन्मसिद्धास्त्राविति** ॥ स्तन्यत्यागात्परेणेत्यादिना च कथितमुपपादयति—**प्राप्तप्राचेतसाविति** ॥ रामभद्रतुल्यावित्यादिना प्रतिपादितमुपपादयति—**आर्यतुल्याकृती इति** ॥ प्रतिपादितानां च युक्तीनां बाधराहित्यं प्रकटयति—**वयसेति** ॥ द्वादशेऽब्दे जातौ द्वादशाब्दिकौ । यौक्तिकज्ञाने नैपुण्यमुपपादयति—**वत्सेति** ॥ **अतिपरिप्लवमानहृदयः** अतिशयेन परिप्लवमानं घूर्णमानं हृदयं यस्य सः । **संमुग्धोऽस्मि** नितरामज्ञोऽस्मि । कुत्र पुनः स्थित्वा बालकौ वर्धयेयमित्यत्राह—**एहीति** ॥ **पवित्रीकुरु** आत्मस्थित्या पवित्रं कुरु । **रसातलं** पातालम् । सीतायाश्च रसातलप्राप्तिमवधार्य सविषादमाह—**हेति** ॥ देशान्तरविरहमसहमानः कथमहं तव लोकान्तरप्राप्तिं विषहे इति भावः । नाहं जीवितं धारयामीत्याह—**णेदु मं इति** ॥ नयतु मामात्मनोऽङ्गेषु विलयमम्बा, न सहे ईदृशं जीवलोकपरिभवमनुभवितुम् । **जीवलोकपरिभवं** जीवलोककृतं परिभवम् अपवादवचनामिति यावत् । जीवलोके इह लोके जातमिति वा । **किमुत्तरमिति** ॥ पृथिव्या इति शेषः । सीतावचनस्योत्तरमाह—**स्तन्यत्यागमिति** ॥ पुत्रयोः स्तन्यत्यागं यावत् अवेक्षस्व इति योजना । **स्तन्यत्यागं** स्तन्यपानपर्यवसानम् **यावत्** यथा वर्तनम् । कृच्छ्रजीविनी भूत्वाऽपीत्यर्थः । **अवेक्षस्व** प्रतिपालय । **परेण** परतः । **यथा रोचिष्यत इति** ॥ तात्कालिकी रुचिर्यथा तथा करिष्यत इति । मयेति शेषः । न पुनर्मदभिप्रायवशादिति भावः । तात्कालिकी प्रतिपत्तिस्तु

**रामः**—कथं प्रतिपन्नमेव तावत् । हा चारित्रदेवते, लोकान्तरे पर्यवसितासि । (इति मूर्च्छति ।)

**लक्ष्मणः**—भगवन्वाल्मीके, परित्रायस्व परित्रायस्व । एष ते काव्यार्थः ।

(नेपथ्ये ।)

अपनीयतामातोद्यार्थः । भो भो जङ्गमस्थावराः प्राणभृतो मर्त्यामर्त्याः, पश्यन्त्विदानीं वाल्मीकिनाभ्यनुज्ञातं पवित्रमाश्चर्यम् ।

**लक्ष्मणः**—(विलोक्य ।)

मन्थादिव क्षुभ्यति गाङ्गमम्भो
व्याप्तं च देवर्षिभिरन्तरिक्षम् ।

---

इदानीमवगन्तुं न शक्यते, कदाचित् जीविताभिलाषिण्यपि संभवेदिति लटा प्रकाश्यते । **एवमिति** पृथिवीकथितस्यानुवादे । नामेत्युपगमे । ममैतदनुमतमिति भावः । तावच्छब्दोऽवधौ । स्तन्यपानकालपर्यवसानपर्यन्तमेवेत्यर्थः । कथमिति संभ्रमे । **प्रतिपन्नमेव** अनूदितमेव । गङ्गयेति शेषः । तावच्छब्दो वाक्यालंकारे । एवं कुशलवयोः स्तन्यपोषणकालावसानपर्यन्तमेव सीताजीवितस्यावस्थानमिति परिज्ञानात्तस्य चातिक्रान्तत्वप्रतीतेस्तद्विपत्तिमवधारयन्नाह—**हेति** ॥ **चारित्रदेवते** जगत्पावनचरिते **लोकान्तरे** मम वाङ्मनसयोर्गोचरीकर्तुमशक्ये लोके **पर्यवसिताऽसि** परिणमिताऽसि । मयेति शेषः । **भगवन्** अप्रतिहतप्रभाव **वाल्मीके** लोकानुग्रहपरायण ॥ परित्रायस्वेति प्रार्थनायां लोट् । एष इत्यभिनीयोक्तिः । **काव्यार्थ इति** ॥ निजकाव्यप्रतिपादितानामर्थानामाश्रयभूतत्वाद्रामभद्रवृत्तप्रतिपादकस्य काव्यस्यार्थ इत्यध्यवसायः । विपद्यत इति शेषः । कातर्यातिशयवशाद्वाक्यापरिपूर्तिः । **अपनीयताम्** अपकृष्यताम् । रङ्गमण्डपादित्यर्थात् । **आतोद्यार्थः** वीणामुरजादिको नाट्याङ्गभूतः पदार्थः । भो भो इत्याश्चर्यभूतवस्तुप्रकटनत्वरया । जङ्गमाः स्थावराश्च जङ्गमस्थावराः । प्राणभृतो जन्तवः । मर्त्या अमर्त्याश्च मर्त्यामर्त्याः । उभयविधा देवा असुराश्च । **वाल्मीकिनाभ्यनुज्ञातं** वाल्मीकिनियोगादनुष्ठीयमानं **पवित्रं** पतिदेवतासंबन्धात्पावनम् **आश्चर्यम्** आश्चर्यभूतं, सकललोकविस्मयावहम् । श्रुतानुसारेण निरूपितादप्यतितरामतिशयितं च दृष्ट्वा सविस्मयमाह—**मन्थादिति** ॥ मथनादिवेत्यर्थः । **क्षुभ्यति** प्रचलति **गाङ्गं** गङ्गासंबन्धि । आश्चर्यमिति प्रतिवाक्यमनुषञ्जनीयम् । गङ्गापृथ्व्योरागमनका-

आश्चर्यमार्या सह देवताभ्यां
गङ्गामहीभ्यां सलिलादुपैति ॥ १६ ॥

(नेपथ्ये ।)

अरुन्धति जगद्वन्द्ये गङ्गापृथ्व्यौ जुषस्व नौ ।
अर्पितेयं तवावाभ्यां सीता पुण्यव्रता वधूः ॥ १७ ॥

लक्ष्मणः—अहो आश्चर्यमाश्चर्यम् । आर्ये, पश्य पश्य । कष्टमद्यापि नोच्छ्वसित्यार्यः ।

(ततः प्रविशत्यरुन्धती सीता च ।)

अरुन्धती—

त्वरस्व वत्से वैदेहि मुञ्च शालीनशीलताम् ।
एहि जीवय मे वत्सं सौम्यस्पर्शेन पाणिना ॥ १८ ॥

सीता—(ससंभ्रमं स्पृशति ।) समस्ससदु समस्ससदु अज्जउत्तो । समाश्वसितु समाश्वसित्वार्यपुत्रः ।

रामः—(समाश्वस्य सानन्दम् ।) भोः, किमेतत् । (दृष्ट्वा सहर्षाद्भुतम् ।) कथं देवी जानकी । (सलज्जम्) अये, कथमम्बारुन्धती । कथं सर्व एव ऋष्यश्रृङ्गसत्रात्प्रतिनिवृत्ता अस्मद्गुरवः ।

---

र्यमुपपादयति—**अरुन्धतीति** ॥ जगद्वन्द्य इत्यनेन त्वत्परिग्रहणेन लोकप्रतिपत्तिर्भविष्यतीति प्रकाश्यते । गङ्गापृथ्व्यावित्यनेन सीतासंबन्धमनुस्मारयति । **अर्पिता** निहिता । **पुण्यव्रता** अहीनपतिदेवतावृत्ता **वधूः** धर्मतः पुत्रभार्या । कष्टमिति कृच्छ्रे । **अद्यापि** कालविगमेऽपि **नोच्छ्वसिति** न चेतते । मोहपरिणामसमुचितं च कर्मोपदिशति—**त्वरस्वेति** ॥ विलम्बनं मा कुरु । **वत्से** पुत्रि **वैदेहि** शोभनशीले **मुञ्च** दूरतस्त्यज **शालीनशीलताम्** अधृष्टशीलताम् लज्जालुतामिति यावत् । **एहि** इत आगच्छ । **जीवय** आश्वासय । **सौम्यस्पर्शेन** मृदुलतरकरकिसलयस्पर्शेन । मोहदशादर्शनात्संभ्रमः । समाश्वसितु समाश्वसितु आर्यपुत्रः । भो इति हर्षे । किंशब्दो जिज्ञासायाम् । प्रियतमादर्शनाद्धर्षः । असंभावितोपलम्भादद्भुतम् । कथमिति विस्मये । गुरुजनदर्शनाल्लज्जा । अये इति स्मरणे । सर्व एवेत्यनेन सत्रसमाप्तिं द्योतयति **ऋष्यशृङ्गसत्रात्** द्वादशवार्षिकाद्यज्ञात् **प्रतिनिवृत्ताः** प्रत्यागताः **अस्मद्गुरवः** कर्तव्यकृच्छ्रे समुचितोपदेष्टारः । तत्संनिधानाभावादेवास्माक-

**अरुन्धती**—वत्स, एषा भागीरथी रघुकुलदेवता देवी गङ्गा सुप्रसन्ना ।

(नेपथ्ये ।)

जगत्पते रामभद्र, स्मर्यतामालेख्यदर्शने मां प्रत्यात्मवचनम् । सा त्वमम्ब स्नुषायामरुन्धतीव सीतायां शिवानुध्यानपरा भवेति । तदनृणास्मि ।

**अरुन्धती**—इयं ते श्वश्रूर्भगवती वसुंधरा ।

(नेपथ्ये ।)

उक्तमासीदायुष्मता वत्साया: परित्यागे 'भगवति वसुंधरे, श्लाघ्यां दुहितरमवेक्षस्व जानकीम्' इति । तदधुना कृतवचनास्मि ।

**रामः**—कृतापराधोऽपि भगवति त्वयानुकम्पयितव्यो रामः प्रणमति ।

**अरुन्धती**—भो भोः पौरजानपदाः, इयमधुना भगवतीभ्यां जाह्नवीवसुंधराभ्यामेवं प्रशस्यमाना मयाऽरुन्धत्या समर्पिता पूर्वं च भगवता वैश्वानरेण निर्णीतपुण्यचारित्रा सब्रह्मकैश्च देवैः स्तुता सावित्रकुलवधूर्देवयजनसंभवा जानकी परिगृह्यताम् । कथमिह भवन्तो मन्यन्ते ।

---

मीदृशमसमञ्जसं जातमिति भावः । भागीरथीत्यनेन संबन्धमासूत्रयति । कुलदेवतेत्यनेनापत्सहायता । सुप्रसन्नेत्यनेन चाभिलषितसंपादकता च । **जगत्पते** सर्वभूताश्रय **आलेख्यदर्शने** चित्रदर्शने **आत्मवचनं** स्वेनाभिहितं वचनम् । किं पुनस्तदित्यत्राह—**सेति** ॥ **तदनृणाऽस्मि** तस्मान्निमित्तादृणविमुक्ताऽस्मि । नियोगानुष्ठानादिति भावः । **अवेक्षस्व** रक्ष । **तदिति** ॥ तथैवेत्यर्थः । **कृतवचनाऽस्मि** अनुष्ठितनियोगाऽस्मि । अत्र वाच्यवाचकयोरभेदोपचारात् कृतवचनेत्युक्तिः । **कृतापराध इति** ॥ सीतापरित्यजने पृथिवीगौरवानवेक्षणात् कृतापराधत्वम् । तया विशुद्धौ लोकसंमतिमापादयति—**भो भो इति** ॥ अधुना जानकी परिगृह्यतामिति संबन्धः । प्रमाणीक्रियतामित्यर्थः । तत्र कारणमाह—**भगवतीभ्यामिति** ॥ **एवं प्रशस्यमाना** इतः पूर्वं परिपाल्य सीता पुण्यव्रता वधूरिति प्रशस्यमाना । पुनरपि परिग्राह्यतामवगमयति—**मयेति** ॥ **समर्पिता** दत्ता । **पूर्वमिति** भगवतीभ्यामित्यादिभिर्वाक्यैः प्रत्येकमभिसंबध्यते । कथंशब्दः प्रश्ने । भवन्त इति

लक्ष्मणः—आर्य, एवमम्बयारुन्धत्या च निर्भर्त्सिताः पौरजानपदाः कृत्स्नश्च भूतग्राम आर्यां नमस्कुर्वन्ति। लोकपालाः सप्तर्षयश्च पुष्पवृष्टिभिरुपतिष्ठन्ते।

अरुन्धती—जगत्पते रामभद्र,

नियोजय यथाधर्मं प्रियां त्वं धर्मचारिणीम्।
हिरण्मय्याः प्रतिकृतेः पुण्यां प्रकृतिमध्वरे॥ १९॥

सीता—(स्वगतम्।) अवि जाणादि अज्जउत्तो सीदाए दुक्खं पडिमज्जिदुम्।

अपि जानात्यार्यपुत्रः सीताया दुःखं परिमार्ष्टुम्।

रामः—यथा भगवत्यादिशति।

लक्ष्मणः—कृतार्थोऽस्मि।

सीता—पच्चुज्जीविदह्मि। प्रत्युज्जीवितास्मि।

लक्ष्मणः—आर्ये, अयं लक्ष्मणः प्रणमति।

सीता—वच्छ, ईरिसो मे चिरं जीअ।

---

विपरीतलक्षणया मूढतामवगमयति। युष्मच्छन्दानुवर्तनं हि राज्ञः कुलव्रतमिति भावः। **एवमिति**॥ उक्तप्रकारेणेत्यर्थः। **निर्भर्त्सिताः** परिहसिताः। अरुन्धतीवचनजनितां च लोकप्रतिपत्तिं कथयति—**कृत्स्न इति**॥ **पुष्पवृष्टिभिः** दिव्यकुसुमवर्षैः। करणे तृतीया। **उपतिष्ठन्ते** पूजयन्ति। लोकसंमतां च सीतां रामभद्रेण परिग्राहयति—**जगत्पत इति**॥ हे रामभद्र त्वं प्रियां धर्मचारिणीम् अध्वरे यथाधर्मं नियोजय इत्यन्वयः। **प्रियां** कर्मकृच्छ्रापहारिणीं **धर्मचारिणीं** गृहमेधिधर्मेष्वविनाभावसमुचिताम्। **यथाधर्मं** धर्ममनतिक्रम्य। पत्नीमन्तरेण क्रत्वनुष्ठानं न विहितमिति भावः। ननु सीताप्रतिकृतिसहायेनैव क्रतुरनुष्ठीयत इत्यत्राह—**हिरण्मय्या इति**॥ **पुण्यां** योग्यां **प्रकृतिं** मुख्यामेव पत्नीम्। व्रीहीणामभाव एव हि क्रतौ नीवारा विनियुज्यन्ते, नतु तत्संभव इति भावः। उत्तरश्रवणकातर्यादाह—**अपीति**॥ अपि जानाति आर्यपुत्रः सीताया दुःखं परिमार्ष्टुम्। अपिशब्दो दैवप्रार्थनायाम्। **सीतायाः** दैवतैरनुकम्पनीयायाः। अरुन्धतीकथितमनुवदति—**यथेति**॥ तथैव करोमीति शेषः। **कृतार्थोऽस्मि** निवृत्तभीतिरस्मि। **उज्जीवितास्मि** उत्तरश्रवणकातर्यान्मृतप्रायैवाहमभूवम्। इदानीं तु प्रत्यापन्नजीविता भवामीति भावः। ईदृशो मे चिरं जीव। **ईदृश**

वत्स, ईदृशो मे चिरं जीव ।

**अरुन्धती**—भगवन्वाल्मीके, उपनयेदानीं सीतागर्भसंभवौ रामभद्रस्य कुशलवौ ।

(इति निष्क्रान्ता ।)

**रामलक्ष्मणौ**—दिष्ट्या तथैवैतत् ।

**सीता**—कहिं ते पुत्तआ ।

क्व तौ पुत्रकौ ।

(ततः प्रविशति वाल्मीकिः कुशलवौ च ।)

**वाल्मीकिः**—वत्सौ, एष वां रघुपतिः पिता । एष लक्ष्मणः कनिष्ठतातः । एषा सीता जननी । एष राजर्षिर्जनको मातामहः ।

**सीता**—(सहर्षकरुणाकूतं विलोक्य ।) कहं तादो । कहं जादा ।

कथं तातः । कथं जातौ ।

**कुशलवौ**—हा तात, हा अम्ब, हा मातामह ।

**रामः**—(सहर्षमालिङ्ग्य ।) ननु वत्सौ, युवां प्राप्तौ स्थः ।

**सीता**—एहि जाद कुस, एहि जाद लव, चिरस्स मं परिस्सजह लोअन्तरादो आअदं जणणिम् ।

एहि जात कुश, एहि जात लव, चिरस्य मां परिष्वजेथां लोकान्तरादागतां जननीम् ।

---

**इति** ॥ शरीरबाधादिरहित इत्यर्थः । **मे** त्वत्प्रजावत्याः । संबन्धार्थे षष्ठी । अस्मच्छुश्रूषणाय त्वमक्लिष्टशरीर एव भूत्वा चिरकालं जीवेत्यर्थः । **उपनयेति** ॥ प्राप्तकाले लोट् । इदानीमित्यस्यार्थं विवृणोति—**सीतागर्भसंभवाविति** ॥ **दिष्ट्येति** ॥ अस्मद्भाग्यवशादित्यर्थः । तत्किमित्यत्राह—**तथैवेति** ॥ यथा निरूपितमिति शेषः । **एतत्** वाल्मीकिप्रबन्धप्रतिपाद्यं वस्तु । कुशलवौ सीतासंभवाविति यावत् । कस्मिन् तौ पुत्रकौ । वत्साविल्याभिमुख्यकरणे । एष इत्यनुषञ्जनीयोक्तिः । **वां** युवयोः, षष्ठी । **कनिष्ठतातः** पितृव्यः । जनकदर्शनाद्धर्षः । अनुभूतनिखिलवृत्तानुस्मरणात्करुणम् । निजनगरादागमननिमित्तगवेषणमाकूतम् । कथं तातः । हा तात हा अम्ब । **सहर्षमालिङ्ग्येति** ॥ कुशलवावित्यर्थात् । नन्वित्यनुनये । **युवां प्राप्तौ स्थ इति** ॥ मत्समीपमिति शेषः । काक्वा प्रश्नः । एहि तात कुश । एहि तात लव । चिरस्य परिष्वजस्व मां लोकान्तरागतां जननीम् । **चिरस्य** चिरकालेनानुभूतं

कुशलवौ—(तथा कृत्वा।) धन्यौ स्वः।

सीता—भअवं, पणमामि। भगवन् प्रणमामि।

वाल्मीकिः—वत्से, इत्थमेव चिरं भूयाः।

(नेपथ्ये।)

उत्खातलवणो मधुरेश्वरः प्राप्तः।

लक्ष्मणः—सानुषङ्गाणि कल्याणानि।

रामः—सर्वमिदमनुभवन्नपि न प्रत्येमि। यद्वा प्रकृतिरियमभ्युदयानाम्।

वाल्मीकिः—रामभद्र, उच्यतां किं ते भूयः प्रियमुपहरामि।

रामः—अतः परमपि प्रियमस्ति। किं त्विदं भरतवाक्यमस्तु

---

विरहदुःखमपनेतुमिति भावः। **लोकान्तरागतां** पाताललोकादागताम्। **तथा कृत्वेति**॥ परिष्वज्येत्यर्थः। **धन्यौ** मातृसंभावनालाभाद्भाग्यवन्तौ। भगवन् प्रणमामि। **इत्थमेव** रामभद्रसहितैव **चिरं** चिरकालं **भूया** इत्याशिषि लिङ्। **उत्खातलवणः** उन्मूलितलवणासुरः। पुत्रपौत्रादीनामपि निग्रहादुत्खातलवण इत्युक्तम्। **मधुरेश्वरः** माधुरस्य तस्य (लवणस्य) निग्रहणान्मधुराया अयं (शत्रुघ्नः) ईश्वरो भर्ता जात इत्यर्थः। **सानुषङ्गाणि** अनुषङ्गयुक्तानि। एकतरकार्यलाभे दैवादभिलषितान्तरापतनमत्रानुषङ्गः। सामान्येन विशेषसमर्थनमेतत्। **सर्वमिति**॥ सीतासंदर्शनं कुशलवलाभं शत्रुघ्नस्य विजयसहितागमनं चेत्यर्थः। इदमित्यनेन बाधाराहित्यं प्रतिपादयति। वर्तमानप्रत्ययेनानुभवदार्ढ्यमाह। अपिर्विरोधे। **न प्रत्येमि** न विश्वसिमि। अत्रोपपत्तिमाशङ्कते—**यद्वेति**॥ **प्रकृतिः** स्वभावः। इयमित्यनेन प्रत्ययराहित्यं परामृश्यते। **उच्यतामिति**॥ युष्मदभ्युदयसंपादनैकपरः संप्रति तिष्ठामीति लोटा प्रकाश्यते। किंशब्दः प्रश्ने। **ते** अस्मत्प्रसादवशादिदानीमनुभूतपुत्रदारसंगमसुखस्य। संबन्धार्थे षष्ठी। उपहरणशब्दस्य च दानार्थत्वात् संप्रदानार्थे चतुर्थी वा। **भूयः** पुनरपि। **प्रियम्** अभीष्टम् **उपहरामि** संपादयामि परिददामीति वा। **अतः** अस्मात् इदानीमुपहृतात्। विभक्ते पञ्चमी। **परम्** अन्यत्। अपिः संभावनायाम्। **प्रियम्** उपहरणीयं वस्तु। अस्ति किमिति काकुः। नास्त्येवेति भावः। अथानुकार्यवृत्तमुपसंहृत्य नटः स्वाभिलषितमाशंसितुमारभते—**किंत्विति**॥ अभिलषितान्तरस्याभावेऽप्यहं तावदेतावन्तमर्थं प्रार्थये इत्यर्थः। स पुनः कीदृश इत्यत्राह—**पाप्मभ्य इति**॥ येयं कथा

पाप्मभ्यश्च पुनाति वर्धयति च श्रेयांसि येयं कथा
मङ्गल्या च मनोहरा च जगतो मातेव गङ्गेव च ।
तामेतां परिभावयन्त्वभिनयैर्विन्यस्तरूपां बुधाः
शब्दब्रह्मविदः कवेः परिणतां प्राज्ञस्य वाणीमिमाम् ॥२०॥

(निष्क्रान्ताः सर्वे ।)

इति सप्तमोऽङ्कः ।

इति महाकविश्रीभवभूतिविरचितम्
उत्तररामचरितं नाम नाटकं समाप्तम् ।

---

पाप्मभ्यः पुनाति च श्रेयांसि वर्धयति च इमां बुधाः तामेतां परिभावयन्तु इत्यन्वयः । यच्छब्दनिकटवर्तित्वादत्रेदंशब्दः प्रसिद्धिं परामृशति ! कथ्यत इति कथा । रामायणचरितमित्यर्थः । **पाप्मभ्यः** पापेभ्यः **पुनाति** परिशोध्य रक्षति । रक्षार्थयोगात् भीत्रार्थेत्यादिना पञ्चमी । **श्रेयांसि** अर्थपुत्रादिकानभीष्टान् **वर्धयति** परिपोषयति । सर्वेषामेव हि विद्युद्विलासन्यायेन श्रेयसां यदृच्छयैव दर्शनाद्वर्धयतीत्युक्तम् । चकारावेकस्या एवानिष्टव्युदसनाभीष्टापादनयोः सामर्थ्यं द्योतयतः । **इमाम्** एवंभूतां कथां **बुधाः** अभिनेयरसभरास्वादनकुशलाः **तां** परोक्षतयैव श्रोत्रेन्द्रियेणानुभवनीयाम् **एतां** नयनविषयीकरणसमुचिताम् **परिभावयन्तु** आस्वादयन्तु । अनेन हि प्रख्यातमेवात्रेतिवृत्तं रसविरुद्धानामंशानां स्वल्पतया प्रायशो महाकविना स्वीकृतमिति प्रकाश्यते । आशिषि लोट् । कथं पुनः शब्दप्रतिपाद्यायाः कथाया नयनविषयीकरणौचित्यमित्यत्राह— **अभिनयैरिति** ॥ अभिनयस्य चातुर्विध्यादेव बहुवचनम् । **विन्यस्तरूपाम्** उपपादितरूपाम् । तदुक्तं—'रूपं दृश्यतयोच्यते । रूपकं तत्समारोपात्' इति । पापहरत्वं श्रेयस्करत्वं चोपपादयति—**मङ्गल्या च मनोहरा चेति** ॥ भगवच्छ्रीरामभद्रस्यापदानात्मकत्वान्मङ्गल्या, रसप्राचुर्यान्मनोहरा चेतोहरणसमर्था । उपपादितं पुनः पापहरत्वं श्रेयस्करत्वं चास्या उपमानेन हृदयंगमीकरोति—**जगत इति** ॥ जायते गच्छतीति व्युत्पत्त्या जरायुजादिरूपस्य भौतिकप्रपञ्चस्येत्यर्थः । **मातेव** जनयित्रीव । जगत्सृष्टिहेतुभूता महामाया भगवतीव । अयमर्थः— या खलु रामचन्द्रकथा निखिलजनैरपि दुरितभरविध्वंसिनी निखिलश्रेयोविधायिनी चेति समुपरतविविधविषयरसं मुहुर्मुहुरनुपहतकुतूहलं श्रुतिचु-

लकपुटैरिह समास्वाद्यते तामेवातिक्रान्ततया नयनविषयीकरणानर्हामपि चतुर्विधाभिनयैरुपक्लृप्ताकारतया नयनपथमवतरन्तीमेव भाविनोऽपि विद्वांसो यावत्प्रपञ्चविलयमास्वादयन्त्विति । ननु गुणालंकारविशिष्टकविभारतीप्रतिपादिता विभावादयोऽर्था एवात्राभिनेयाः । तेषां च समष्टिरेव पुनः कथेत्युच्यते । तस्याश्च प्रतिपादिताकारेणास्वादनीयत्वं तावदुक्तिचातुर्यमात्राधीनमित्यत्राह— **शब्दब्रह्मविद इति** ॥ पराविलासभूताया वैखर्याः स्वरूपवैचित्र्यवेदिन इत्यर्थः । एतच्च बुधकविसाधारणं विशेषणम् । **कवेः** प्रतिभाऽनुप्राणितविभावादिप्रकटननिपुणस्य । अनेन शक्तिपौष्कल्यं कथितम् । **परिणतां** स्वाकारमुन्मुच्यार्थाकारेणावस्थिताम् । प्राज्ञस्येत्यनेन च लोकशास्त्राद्यवेक्षणजनितं नैपुण्यं विवक्षितम् । **वाणीं** वैखरीरूपिणीं वाचम् । शब्दतत्त्वमेव ह्यर्थात्मना परिणमतीति वैयाकरणानां मतम् । तत्समयेन चेह कथनं व्याकरणस्य निखिलविद्याश्रितत्वेन सर्वोपनिषदत्वात् । तथाच खलूक्तं राजशेखरेण—'प्रसत्तेर्यः पात्रं तिलकयति यः सूक्तिरचनां य आद्यः स्वादूनां श्रुतिचुलकलेह्येन मधुना । यदात्मानो विद्याः परिणमति यश्चार्थवपुषा स गुम्फो वाणीनां कविवृषनिषेव्यो विजयते ॥' इति । अत्रोद्देश्यविधेयवाक्यार्थयोर्मिथो हेतुहेतुमद्भावात् काव्यलिङ्गमलंकारः । तस्य चोपमानुगृहीतत्वेन सङ्करः ॥ एवमतिगहनगम्भीरमिदं नाटकमनवधृतकविवरवचनचातुर्यैरस्माभिरतिशयितकुतूहलोपहितप्रणिधानभरकुण्ठीकृतया निजमनीषयैव तावत् तात्पर्यार्थसमुत्पत्तिकरणगवेषणपुरस्सरं विचार्य निर्णीतमिति, केवलमिह मात्सर्यवार्ताऽनभिज्ञाः सुविपुलमतिबलविदितसाहित्यहृदयसारसमुदायाः सकलगुणदोषेष्वविरतमवहितहृदयाः सहृदया एव शरणम् ॥

श्रृङ्गारायितविश्वहृद्यकरुणात्मावेधवेधीभव
च्छब्दार्थोभयविग्रहेऽत्र चरिते सीतापतेरुत्तरे ।
गम्भीरे भवभूतिकीर्तिलतिकाकन्दोद्गमे नाटके
व्याख्यातश्चरमोऽप्यसावचरमस्त्वङ्को हि यः सप्तमः ॥

द्विजवरशुभवंशश्रेष्ठमुक्ताफलस्य
प्रसृतविशदभासो नेत्रनारायणस्य ।
विवृतिरखिलहृद्या प्रस्तुता या नियोगात्
परिणतिमपि साऽगात् काव्यभूषानिबद्धा ॥

यस्मादिह निरालम्बैरस्माभिः परिनिश्चिताः ।
वाच्यादयोऽथ विद्वद्भिः क्षन्तव्यमसमञ्जसम् ॥

वाच्यार्थव्यतिषङ्गजृम्भितविचित्राकूतविख्यापने
शब्दार्थद्वयभूषणव्यतिकरव्यक्तीकृतौ वा पुनः ।
स्खालित्यं नियतं हि दुर्गममिदं व्याकुर्वतां नाटकं
निर्णीतेऽपि यतोऽत्र वस्तुनि वयं विद्वत्सु तिष्ठामहे ॥

सवर्थोऽपि हि मन्दानामेषा स्यादुपकारिणी ।
भवभूतिवचस्सिन्धुतितीर्षुजनतातरी ॥

ब्रह्मक्षत्रमहीवतंसकनिभे नारायणाख्यः कवि-
र्जातो यस्तु वळक्षमङ्गलयुतग्रामे मठाख्ये गृहे ।
तेनेयं भवभूतिगुम्फितवचोगाम्भीर्यकृच्छ्रानम-
द्वाच्याद्यर्थपरीक्षणव्यसनिना टीका पुनर्निर्मिता ॥

इति श्रीमत्केरलभूवलयमहितभूषणोपारिनवग्रामधामप्रथित पूर्वोत्तर-
मीमांसापरमाचार्यश्रीनारायणकविवरप्रथमान्तेवासिविरचितायां
भावार्थदीपिकायामुत्तररामचरितव्याख्यायां सप्तमोऽङ्कः ॥

# उत्तररामचरितस्थश्लोकानां सूची ।


| | अ० | श्लो० |
|---|---|---|
| अकिंचिदपि कुर्वाणः | २ | १९ |
| ... ... | ६ | ५ |
| अङ्गादङ्गात्सुत इव | ६ | २२ |
| अतिशयितसुरासुर | ५ | ४ |
| अतुलितपदताण्डवो | ३ | १८ |
| अत्यद्भुतादसि गुणा | ५ | १० |
| अथ कोऽयमिन्द्रमणि | ६ | १७ |
| अथेदं रक्षोभिः कनक | १ | २८ |
| अद्वैतं सुखदुःखयोः | १ | ३९ |
| अनियतरुदितस्मितं | ४ | ४ |
| अनिर्भिन्नो गभीरत्वात् | ३ | १ |
| अनुभावमात्रसमव | ६ | ४१ |
| अन्तःकरणतत्त्वस्य | ३ | १७ |
| अन्तर्लीनस्य शोकाग्नेः | ३ | ९ |
| अन्वेष्टव्यो यदासि भु | २ | १३ |
| अपत्ये यत्तादृग्दुरित | ४ | ३ |
| अपरिस्फुटनिक्वाणे | ३ | ७ |
| अपि जनकसुताया | ६ | २६ |
| अपूर्वकर्मचाण्डाल | १ | ४६ |
| अप्रतिष्ठे कुलज्येष्ठे | ५ | २५ |
| अमृताध्मातजीमूत | ६ | २१ |
| अयं तावद्बाष्पस्त्रुटित | १ | २९ |
| अयं शैलाघातक्षुभित | ५ | ९ |
| अयं हि शिशुरेककः | ५ | ५ |
| अयि कठोर यशः किल | ३ | २७ |
| अरुन्धति जगद्वन्द्ये | ७ | १७ |
| अलसललितमुग्धा | १ | २४ |
| अवदग्धजर्जरित | ६ | ४ |
| अवनिरमरसिन्धुः | ३ | ४८ |
| अस्मिन्नगस्त्यप्रमुखाः | २ | ३ |
| अस्मिन्नेव लतागृहे | ३ | ३७ |
| अस्यैवासीन्महति | २ | २६ |
| अहेतुः पक्षपातो यः | ५ | १७ |
| अहो प्रश्रययोगेऽपि | ६ | २३ |
| अहो प्रासादिकं रूपं | ६ | २० |
| आगार्जाद्गिरिकुञ्जकुञ्जर | ५ | ६ |
| आयुष्मतः किल लवस्य | ६ | १६ |
| आलिम्पन्नमृतमयै | ३ | ३९ |
| आविर्भूतज्योतिषां | ४ | १८ |
| आ विवाहसमयाद्गृहे | १ | ३७ |
| आश्च्योतनं नु हरिच | ३ | ११ |
| आश्वासस्नेहभक्तीनां | ६ | १० |
| आसीदियं दशरथस्य | ४ | ६ |
| इक्ष्वाकुवंशोऽभिमतः | १ | ४४ |
| इङ्गुदीपादपः सोऽयं | १ | २१ |
| इतिहासं पुराणं च | ५ | २३ |
| इदंगुरुभ्यः पूर्वेभ्यो | १ | १ |
| इदं विश्वं पाल्यं विधि | ३ | ३० |
| इयं गेहे लक्ष्मीरिय | १ | ३८ |
| इह समदशकुन्ता | २ | २० |
| ईदृशां विनिपातोऽपि | ३ | ३ |
| उत्पत्तिपरिपूतायाः | १ | १३ |
| उपायानां भावादवि | ३ | ४४ |
| ऋषयो राक्षसीमाहु | ५ | २९ |
| ऋषीणामुग्रतपसां | १ | ५० |
| एको रसः करुण एव | ३ | ४७ |
| एतत्तदेव कदलीवन | ३ | २१ |
| एतत्तदेव हि वनं | २ | २३ |
| एताद्धि परिभूतानां | ४ | २४ |
| एतद्वैशसवज्रघोर | ४ | २५ |
| एतस्मिन्मदकलमल्लि | १ | ३१ |
| एतस्मिन्मसृणितराज | ५ | १८ |

| | अ० | श्लो० |
|---|---|---|
| एतानि तानि गिरिनिर्झ | १ | २५ |
| एते त एव गिरयो | २ | २४ |
| एते ते कुहरेषु गद्गद | २ | ३१ |
| एतौ हि जन्मसिद्धास्त्रौ | ७ | १५ |
| एष वः श्लाघ्यसंबन्धी | ४ | ९ |
| एष सांग्रामिको न्याय | ५ | २२ |
| एषा वसिष्ठगुप्तानां | ७ | १३ |
| कठोरपारावतकण्ठ | ६ | २५ |
| कण्डूलद्विपगण्डपिण्ड | २ | ९ |
| कतिपयकुसुमोद्गमः | ३ | २० |
| कथं न्याय्यमनुष्ठानं | ५ | २१ |
| कन्यां दशरथो राजा | १ | ४ |
| कन्यायाः किल पूजय | ४ | १७ |
| करकमलवितीर्णै | ३ | २५ |
| करपल्लवः स तस्याः | ३ | ४१ |
| कष्टो जनः कुलधनै | १ | १४ |
| कामं दुग्धे विप्रकर्ष | ५ | ३० |
| किं त्वाक्रान्तकठोर | ५ | १९ |
| किं त्वनुष्ठाननित्यत्वं | १ | ८ |
| किमपि किमपि मन्दं | १ | २७ |
| किरति कलितार्किंचि | ५ | २ |
| किसलयमिव मुग्धं | ३ | ५ |
| कुवलयदलस्निग्धश्यामः | ४ | १९ |
| कृशाश्वः कौशिको | ७ | ९ |
| कृशाश्वतनया ह्येते | ५ | १५ |
| कोऽप्येष संप्रति नवः | ५ | ३३ |
| क तावानानन्दो निर | ६ | ३३ |
| क्षुभिताः कामपि दशां | ७ | १२ |
| गुञ्जत्कुञ्जकुटीरकौशिक | २ | ३० |
| गृहीतो यः पूर्वं परिणय | ३ | ४० |
| घोरं लोके विततमयशो | ७ | ६ |
| चतुर्दश सहस्राणि | २ | १५ |
| चिरं ध्यात्वा ध्यात्वा निहित | ६ | ३८ |
| चिराद्वेगारम्भी प्रसृत | २ | २७ |
| चूडाकुन्तलबन्धनं | ५ | ३५ |
| चूडाचुम्बितकङ्कपत्र | ४ | २० |
| जगन्मङ्गलमात्मानं | ७ | ८ |
| जनकानां रघूणां च | १ | १७ |
| जनकानां रघूणां च | १ | ५१ |
| जनकानां रघूणां च | ६ | ४२ |
| जातस्य ते पितुरपीन्द्र | ५ | २४ |
| जामातृयज्ञेन वयं | १ | ११ |
| जीवत्सु तातपादेषु | १ | १९ |
| जीवयन्निव ससाध्वस | १ | ३४ |
| ज्याजिह्वया वलयितो | ४ | २९ |
| तटस्थं नैराश्यादपि | ३ | १३ |
| तत्कालप्रियजनविप्र | १ | ३० |
| तथैव रामः सीतायाः | ६ | ३२ |
| तुरगविचयव्यग्रानुर्वी | १ | २३ |
| ते हि मन्ये महात्मानः | १ | ४८ |
| त्रस्तैकहायनकुरङ्ग | ३ | २८ |
| त्रातुं लोकानिव परि | ६ | ९ |
| त्वदर्थमिव विन्यस्तः | ६ | ३६ |
| त्वमेव ननु कल्याणि | ३ | १० |
| त्वया जगन्ति पुण्यानि | १ | ४३ |
| त्वया सह निवत्स्यामि | २ | २८ |
| त्वं जीवितं त्वमसि मे | ३ | २६ |
| त्वं वह्निर्मुनयो वसिष्ठ | ४ | ५ |
| त्वरस्व वत्से वैदेहि | ७ | १८ |
| त्वष्टृयन्त्रभ्रमिभ्रान्त | ६ | ३ |
| दत्ताभये त्वयि यमा | २ | ११ |
| दत्तेन्द्राभयदक्षिणै | ६ | १८ |
| ददतु तरवः पुष्पै | ३ | २४ |
| दधति कुहरभाजा | २ | २२ |
| दर्पेण कौतुकवता | ५ | ११ |
| दलति हृदयं गाढो | ३ | ३१ |

| | अ० | श्लो० | | अ० | श्लो० |
|---|---|---|---|---|---|
| दह्यमानेन मनसा | ७ | ७ | प्रकृत्यैव प्रिया सीता | ६ | ३१ |
| दिनकरकुलचन्द्र | ६ | ८ | प्रत्युप्तस्येव दयिते | ३ | ४६ |
| दिष्ट्या सोऽयं महाबाहु | १ | ३२ | प्रसाद इव मूर्तस्ते | ३ | १४ |
| दुःखसंवेदनायैव | १ | ४७ | प्रियप्राया वृत्तिर्विनय | २ | २ |
| दृष्टिस्तृणीकृतजग | ६ | १९ | प्रियागुणसहस्राणां | ६ | ३४ |
| देवस्त्वा सविता धिनोतु | ५ | २७ | बाष्पवर्षेण नीतं वो | ६ | २९ |
| देवि सीते नमस्तेऽस्तु | ७ | १० | ब्रह्मादयो ब्रह्महिताय | १ | १५ |
| देव्यामपि हि वैदेह्यां | १ | ६ | ... ... | ६ | १५ |
| देव्या शून्यस्य जगतो | ३ | ३३ | भो भो लव महाबाहो | ५ | ७ |
| न किल भवतां देव्याः | ३ | ३२ | भ्रमिषु कृतपुटान्त | ३ | १९ |
| न तेजस्तेजस्वी प्रसृत | ६ | १४ | मनोरथस्य यद्बीजं | ५ | २० |
| नन्वेष त्वरितसुमन्त्र | ५ | १ | मन्थादिव क्षुभ्यति | ७ | १६ |
| न प्रमाणीकृतः पाणि | ७ | ५ | महिम्नामेतस्मिन्विनय | ४ | २१ |
| नमो वः परमास्त्रेभ्यो | ७ | ११ | माद्यद्दन्तिकपोल | २ | २१ |
| नवकुवलयस्निग्धै | ३ | २२ | मा निषाद प्रतिष्ठां त्वं | २ | ५ |
| नियोजय यथाधर्मं | ७ | १९ | मुनिजनशिशुरेकः | ५ | ३ |
| निष्कूजस्तिमिताः क्वचि | २ | १६ | मेघमालेव यश्चायं | २ | २५ |
| नीवारौदनमण्डमुष्ण | ४ | १ | म्लानस्य जीवकुसुम | १ | ३६ |
| नूनं त्वया परिभवं च | ४ | २३ | य एव हि जनः पूर्वं | ४ | ७ |
| नैताः प्रियतमा वाचः | ३ | ३४ | यत्र द्रुमा अपि मृगा | ३ | ८ |
| पञ्चप्रसूतेरपि राज्ञ | ४ | १६ | यत्रानन्दाश्च मोदाश्च | २ | १२ |
| पतनविरलैः प्रान्तो | १ | २० | यत्सावित्रैर्दीपितं भू | १ | ४२ |
| परां कोटिं स्नेहे परि | ६ | २८ | यथा तिरश्चीनमलात | ३ | ३५ |
| परिणतकठोरपुष्कर | ६ | १३ | यथा वसिष्ठाङ्गिरसौ | ७ | १४ |
| परिपाण्डुदुर्बलकपोल | ३ | ४ | यथेच्छाभोग्यं वो वन | २ | १ |
| पश्चात्पुच्छं वहति विपुलं | ४ | २६ | यथेन्दावानन्दं व्रजति | ५ | २६ |
| पश्यामि च जनस्थानं | २ | १७ | यदस्याः पत्युर्वा रहसि | ४ | १४ |
| पातालोदरकुञ्जपुञ्जि | ५ | १४ | यदा किंचित्किंचित्कृत | ६ | ३५ |
| पाप्मभ्यश्च पुनाति वर्ध | ७ | २० | यदि ते सन्ति सन्त्वेव | ४ | २८ |
| पुत्रसंक्रान्तलक्ष्मीकै | १ | २२ | यदृच्छासंवादः किमु | ५ | १६ |
| पुरा यत्र स्रोतः पुलिन | २ | २८ | यं ब्रह्माणमियं देवी | १ | २ |
| पूरोत्पीडे तटाकस्य | ३ | २९ | यया पूतंमन्यो निधि | ४ | १० |
| पौलस्त्यस्य जटायुषा | ३ | ४३ | यस्यां ते दिवसास्तया | २ | २९ |

| | अ० | श्लो० |
|---|---|---|
| येनोद्गच्छद्बिसकिसलय | ३ | १५ |
| योऽयमश्वः पताकेय | ४ | २७ |
| रणत्करणझञ्झण | ६ | १ |
| राज्याश्रमनिवासोऽपि | ७ | ९ |
| लीलोत्खातमृणाल | ३ | १६ |
| लौकिकानां हि साधूनां | १ | १० |
| वज्रादपि कठोराणि | २ | ७ |
| वत्सायाश्च रघूद्वहस्य | ४ | २२ |
| वपुरवियुतसिद्धा | ६ | २४ |
| वयमपि न खल्वेवंप्रायाः | ५ | २८ |
| वसिष्ठाधिष्ठिता देव्यो | १ | ३ |
| वसिष्ठो वाल्मीकिर्दशरथ | ६ | ३९ |
| विजृम्भितं च दिव्यस्य | ६ | २ |
| वितरति गुरुः प्राज्ञे | २ | ४ |
| विद्याकल्पेन मरुता | ६ | ६ |
| विना सीतादेव्या किमिव | ६ | ३० |
| विनिश्चेतुं शक्यो न सु | १ | ३५ |
| विरोधो विश्रान्तः प्रस | ६ | ११ |
| विलुलितमति पूरैर्बाष्प | ३ | २३ |
| विश्वंभरात्मजा देवी | ७ | २ |
| विश्वंभरा भगवती | १ | ९ |
| विस्रम्भादुरसि निपत्य | १ | ४९ |
| वीचीवातैः शीकरक्षोद | ३ | २ |
| वृद्धास्ते न विचारणीय | ५ | ३४ |
| व्यतिकर इव भीम | ५ | १३ |
| व्यतिषजति पदार्था | ६ | १२ |
| व्यपवर्तत एष बाल | ५ | ८ |
| व्यर्थं यत्र कपीन्द्रसख्य | ३ | ४५ |
| शम्बूको नाम वृषलः | २ | ८ |
| शिशुर्वा शिष्या वा यद | ४ | ११ |
| शुक्लाच्छदन्तच्छविसुन्दरे | ६ | २७ |
| शैशवात्प्रभृति पोषितां | १ | ४५ |
| श्रमाम्बुशिशिरीभव | ६ | ३७ |
| स एष ते वल्लभवस्तु | २ | ६ |
| संख्यातीतैर्द्विरदतुरग | ५ | १२ |
| सतां केनापि कार्येण | १ | ४१ |
| संतानवाहीन्यपि मानु | ४ | ८ |
| समयः स वर्तत इवैष | १ | १८ |
| समाश्वसिहि कल्याणि | ७ | ३ |
| संबन्धस्पृहणीयता | ६ | ४० |
| संबन्धिनो वसिष्ठादी | १ | १६ |
| स राजा तत्सौख्यं स च | ४ | १२ |
| सर्वथा व्यवहर्तव्यं | १ | ५ |
| स संबन्धी श्लाघ्यः प्रियः | ४ | १३ |
| सस्वेदरोमाञ्चितकम्पि | ३ | ४२ |
| सान्त्वं महापुरुष | ६ | ७ |
| सिद्धं ह्येतद्वाचि वीर्यं | ५ | ३२ |
| सीतादेव्या स्वकरकलितैः | ३ | ६ |
| सुहृदिव प्रकटय्य | ४ | १५ |
| सैनिकानां प्रमाथेन | ५ | ३१ |
| सोढश्चिरं राक्षसमध्य | ७ | ४ |
| सोऽयं शैलः ककुभ | १ | ३३ |
| स्निग्धश्यामाः क्वचिदप | २ | १४ |
| स्नेहं दयां च सौख्यं च | १ | १२ |
| स्नेहात्सभाजयितुमेत्य | १ | ७ |
| स्पर्शः पुरा परिचितो | ३ | १२ |
| स्मरसि सुतनु तस्मि | १ | २६ |
| हा हा देवि स्फुटति | ३ | ३८ |
| हा हा धिक्परगृहवास | १ | ४० |
| हृदि नित्यानुषक्तेन | ४ | २ |
| हेलोल्लोलक्षुभित | ३ | ३६ |
| हे हस्त दक्षिण मृतस्य | २ | १० |

॥ श्रीः ॥

# SRI BALAMANORAMA SERIES.

१. सिद्धान्तकौमुदी श्रीभट्टोजिदीक्षितविरचिता श्रीवासुदेवदीक्षित विरचितया श्रीबालमनोरमाख्यया व्याख्यया समुद्भासिता संपूर्णा । रू. १५ ० ०

२. अष्टाध्यायीसूत्रपाठः वार्तिकगणधातुपाठसहितः १ ० ०

३. प्रतापरुद्रीयम् रत्नापणसहितम् रू. २ ० ०

४. तर्कसंग्रहः नवभिर्व्याख्यानैः समन्वितः रू. ३ ४ ०

५. दहरविद्याप्रकाशिका रू. ० ८ ०

६. कारिकावली मुक्तावली-प्रभा-मञ्जूषा-दिनकरीय-रामरुद्रीय-गङ्गारामजटीयसहिता रू. १२ ० ०

७. नीलकण्ठविजयचम्पूः रू. २ ० ०

८. नलचरित्रनाटकम् रू. १ ० ०

९. आश्चर्यचूडामणिनाटकम् रू. २ ० ०

10. THE WONDERFUL CREST-JEWEL, An English Translation of ŚAKTIBHADRA'S Āścharyachūḍāmaṇi By C. SANKARA RAMA SASTRI. Re. 1—4—0

११. रामकथा वासुदेवप्रणीता । गद्यग्रन्थः रू. ० ८ ०

12 & 13. MĀLAVIKĀGNIMITRA with English Notes and Translation By C. Sankara Rama Sastri. Rs. 2—4—0

14. FICTIONS IN THE DEVELOPMENT OF THE HINDU LAW TEXTS, An Original Treatise in Hindu Law and Jurisprudence By C. Sankara Rama Sastri. Price Rs. 4—0—0

१५. कृष्णयजुर्वेदीयसंध्यावन्दनम् सभाष्यम् रू ० ८ ०

16. DAŚAKUMĀRACHARITA Pūrvapiṭhikā Ucchvāsas 1 to 3 with ENGLISH NOTES AND TRANSLATION Re. 0—12—0

---

☞ The Manager,
SRI BALAMANORAMA PRESS,
MYLAPORE, MADRAS.